**प्र०** अत् । अताम् । अन् ॥ **म०** अस् । अतम् । अत ॥
**उ०** अम् । अव । अम ॥

**३. लुङि तृतीया विधा**—च्लेश्चङादेशेन ।

**प्र०** अत् । अताम् । अन् ॥ **म०** अस् । अतम् । अत ॥
**उ०** अवम् । अव । अम ॥

**४- लुङि चतुर्थी विधा**—सगादेश इडागमाभ्याम् ।

**प्र०** सीत् । सिष्टाम् । सिषुः ॥ **म०** सीः । सिष्टम् । सिष्ट ॥ **उ०** सिषम् । सिष्व । सिष्म ॥

**५. लुङि पञ्चमी विधा**—क्सादेश इडभावाभ्याम् ।

स्मैपदपक्षे अङ् । यथा-अद्युतत् । द्युतादीनामात्मनेपदपक्षे तु-इट् सिच्च । एकादशी विधा । अद्योतिष्ट । ऌदितस्तत्र तत्र द्रष्टव्याः । जौहोत्यादी गत्यर्थकौ ऋ सृ धातू शासु=अनुशिष्टौ च । इत्येतेभ्यो नित्यमङ् । **इरितो वा** । इरितो धातोश्च्लेरङ् वा स्यात् । **जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** । अङ् वा ।

१ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** । णिजन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । **चङि** । चङि परे अनभ्यासधात्ववयवस्य एकाचः प्रथमस्य द्वे स्तः अजादेस्तु द्वितीयस्य । स्रु=स्रवणे । द्वित्वम् स्रु स्रु । **हलादिः शेषः** (पृ० ७) सुस्रु अडागमः असुस्रु+अत् । **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाऽस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति उवङ् । असुस्रुव्+अत्=असुस्रुवत् । **विभाषा धेट्श्व्योः** । आभ्यां च्लेश्चङ् वा स्यात् । धेट्=पाने (२६४) अदधत् । चङभावपक्षे प्रथमा विधा अधात् । श्वय-तेस्तु (३२५) द्वितीयाषष्ठ्यावपि विधे । २ **यमरमनमातां सक् च** । एषां सक् स्यात् एभ्यः सिच इट् च परस्मैपदेषु । यथा-अयंसीत् । ३. **शल इगुप-धादनिटः क्सः** । इगुपधो यः शलन्तः तस्मादनिटः च्लेः क्सादेशः स्यात् । कुश्=

**प्र०** सत्। सताम्। सन्॥ **म०** सः। सतम्। सत॥ **उ०** सम्। साव। साम॥

६. **लुङि षष्ठी विधा**—अनिड्भ्यो धातुभ्यः सिज्लोपाभावेन।[1]

**प्र०** सीत्। स्ताम्। सुः॥ **म०** सीः। स्तम्। स्त॥ **उ०** सम्। स्व। स्म।

७. **लुङि सप्तमी विधा**—सेड्भ्यो धातुभ्यः सिज्लोपाभावेन।[2]

**प्र०** ईत्। इष्टाम्। इषुः॥ **म०** ईस्। इष्टम्। इष्ट॥ **उ०** इषम्। इष्व। इष्म॥

१०. **लृङः[3] प्रत्ययाः**—

**प्र०** स्यत्[4]। स्यताम्[5]। स्यन्॥ **म०** स्यः। स्यतम्। स्यत॥ **उ०** स्यम्। स्याव। स्याम॥

आह्वाने रोदने च (२४८) अक्रुक्षत्। १. सिज्लोपः, अङादेशः, चङादेशः सगागमः, क्सादेशः इति पञ्चविधास्वनन्तर्भूतेभ्यः अनिड्भ्यो धातुभ्यः इयं विधा भवति। **वद व्रजहलन्तस्याचः**। वदेर्व्रजेर्हलन्तस्य चाङ्गस्य स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु। डुपचष्=पाके (३१३ अपाक्षीत्। अपाक्ताम्। २. आद्यासु पञ्चसु विधास्वनन्तर्भूताः सेटो धातवोऽस्यां गण्यन्ते। षिधु=गत्याम् (३४) असेधीत्। असेधिष्टाम्। ३. **लिङ्निमित्ते लृङ् क्रियातिपत्तौ**। हेतुहेतुमद्भावादिभविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। ४. **स्यतासी लृलुटोः**। (पृ० ९) इति स्यः। **इतश्चे** (पृ० ५) ति इकारलोपः। ५. **तस्थस्थमिपा** (पृ० ४) मिति तामादेशः।

# आत्मनेपदे ।

१. **लटः प्रत्ययाः** । **प्र०** ते[1] । ईते[2] । अन्ते[3] ॥ **म०** से[4] । इथे । ध्वे ॥ **उ०** इ । वहे । महे ॥

२. **लोटः प्रत्ययाः** । **प्र०** ताम्[5] । इताम् । अन्ताम् ॥ **म०** स्व[6] । इथाम् । ध्वम् ॥ **उ०** ऐ[7] । आवहै । आमहै ॥

३. **लङः प्रत्ययाः** । **प्र०** त । इताम्[8] । अन्त ॥ **म०** थास् । इथाम् । ध्वम् ॥ **उ०** इ । वहि । महि ॥

४. **विधिलिङः प्रत्ययाः** । **प्र०** ईत[9] । ईयाताम् । ईरन्[10] ॥ **म०** ईथाः । ईयाथाम् । ईध्वम् ॥ **उ०** ईय[11] । ईवहि । ईमहि ॥

१. **टित अत्मनेपदानां टेरे** । टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । २. **सार्वधातुकमपित्** (पृ० ४) । इति ङिद्वत्त्वे **आतो ङितः** । अतः परस्य ङितामाकारस्य 'इय्' स्यात् । आताम् इत्येतत् इय् + ताम् इति भवति । **लोपो व्योर्वलि** । वकारयकारयोर्लोपःस्याद्वलि । इति यलोपः । इताम्, ततः टेरेत्वम् । ३. **झोन्तः** (पृ० ४) इत्यन्तादेशः । टेरेत्त्वम् । ४. **थासः से** । टितो लस्य थासः 'से' स्यात् । ५. **आमेतः** । लोट एकारस्याऽऽम् स्यात् । 'ते' इत्यत्रत्यस्य एकारस्य आम् भावे 'ताम्' इति भवति । ६. **सवाभ्यां वामौ** । सवाभ्यां परस्य लोडेतः क्रमात् व अम् इत्येतौ स्तः । 'से' इत्यत्र एकारस्य वकारे 'स्व' इति, 'ध्वे' इत्यत्र वकारात्परस्य एकारस्य अम् भावे 'ध्वम्' इति च भवति । ७. **एत ऐ** । लोडुत्तमस्य एत ऐ' स्यात् । **आमेत** इत्यस्यापवादः । ८. **आतो ङितः** । (पृ० १३) ९. **लिङः सीयुट्** । लिङात्मनेपदस्य सीयुडागमः स्यात् । सीय् त इति भवति । **लिङः सलोपोऽनन्त्यस्य** (पृ० ५) । इति सलोपः । **लोपो व्योर्वलि** (पृ० १३) । **झस्य रन्** । लिङो झस्य रन् स्यात् । ११. **इटोऽत्** । लिङादेशस्य इटः अत् स्यात् । सीय् + इ = सीय् + अ = सकारलोपे वल्परत्वाभावात् यलोपाभावे ईय इति भवति ।

५. **लिटः प्रत्ययाः** । **प्र०** ए१ । आते । इरे ॥ **म०** से । आथे । ध्वे ॥ **उ०** ए । वहे । महे ।

६. **लुटः प्रत्ययाः** । **प्र०** ता । तारौ । तारः ॥ **म०** तासे । तासाथे । ताध्वे२ ॥ **उ०** ताहे३ । तास्वहे । तास्महे ॥

७. **लृटः प्रत्ययाः** । **प्र०** स्यते४ । स्येते५ । स्यन्ते ॥ **म०** स्यसे । स्येथे । स्यध्वे ॥ **उ०** स्ये६ । स्यावहे । स्यामहे ।

८. **आशीर्लिङः प्रत्ययाः** । **प्र०** सीष्ट७ । सीयास्ताम्८ । सीरन्९ ॥ **म०** सीष्ठाः१० । सीयास्थाम् । सीध्वम् ॥ **उ०** सीय । सीवहि । सीमहि ॥

९. **आत्मनेपदे लुङः प्रत्ययाः पञ्चविधाः** ।

---

१. **लिटस्तझयोरेशिरेच्** । लिडादेशयोस्तझयोः एश् इरेच् एतौ स्तः । २ **धि च** । धादौ प्रत्यये परे सलोपः स्यात् । ३. **ह एति** । तासस्त्योः सस्य हः स्यादेति परे ।

४ स्य+त=**टित आत्मनेपदानां टेरे** (पृ० १३) । ५. स्य+आताम्=**आतो ङितः** (पृ० १३) । स्य इय् ताम्=**लोपो व्योः**-(पृ० १३) स्य इताम्=टेरेत्वम् । **आद्गुणः** । इति गुणः । ६ **अतो दीर्घो यञि** (पृ० ९) । ७. **लिङः सीयुट्** । (पृ० १३) **सुट् तिथोः** (पृ० ५) । सीय्+स्+त=यलोपः । सीस् त=**आदेशप्रत्यययोः** । इण्कवर्गाभ्यां परस्य अपदान्तस्य आदेशः प्रत्ययावयवश्च यः सकारः तस्य मूर्धन्यादेशः स्यात् । इति सुटः सकारस्य षत्वे ष्टुत्वे च 'सीष्ट' इति भवति । ८. सीय्+आताम् । तकारात्प्राक् सुडागमे सीयास्ताम् इति भवति । ९. **झस्य रन्** (पृ० १३) सीयुट् । यलोपः । १० **सीष्ट'** वत् ।

८. **लुङि परस्मैपदादारभ्याष्टमी विधा** क्लेर[1]ङादेशेन

| | | | |
|---|---|---|---|
| प. | त । | इताम् । | न्त । |
| म. | थास् | इथाम् । | ध्वम् |
| उ. | इ | वहि । | महि |

९. **लुङि नवमी विधा** । श्लेश्च[2]ङादेशेन । प्रत्यया अष्टमीवत् ।

१०. **लुङि दशमी विधा** । अनिड्भ्यो धातुभ्य[3]: सिज्लोपाभावेन ।

**प्र०** स्त । साताम् । सत ॥ **म०** स्थाः । साथाम् । ध्वम् ॥ **उ०** सि । स्वहि । स्महि ॥

११. **लुङि एकादशी विधा** । सेड्भ्यो धातुभ्यः सिज्लोपाभावेन ।

**प्र०** इष्ट । इषाताम् । इषत ॥ **म०** इष्ठाः । इषाथाम् । इध्वम् ॥ **उ०** इषि । इष्वहि । इष्महि ॥

१२. **लुङि द्वादशी विधा** । क्सादेश ईडभावाभ्याम् । **प्र०** सत । साताम् । सन्त ॥ **म०** सथाः । साथाम् । सध्वम् ॥ **उ०** सि । सावहि । सामहि ॥

१०. **लृङः प्रत्ययाः** —**प्र०** स्यत । स्येताम् । स्यन्त ॥ **म०** स्यथाः । स्येथाम् । स्यध्वम् ॥ **उ०** स्ये । स्यावहि । स्यामहि ॥

---

१. इयं द्वितीयायाः संवादिनी । तत्रोक्ताः सर्वे विधयोऽत्राप्यनुसंधेयाः । अवोचत । अवोचेताम् । अवोचन्त । २. इयं तृतीयायाः संवादिनी । तत्रोक्तानि सर्वाणि सूत्राणि अत्राप्यनुसंधेयानि । यथा—गद=व्यक्तायां वाचि (३७) इत्यस्मात् णिचि, अजीगदत अजीगदेताम् अजीगदन्त ।

३. इयं षष्ठ्याः संवादिनी । यथा-अपक्त । अपक्षाताम् । अपक्षत ॥ ४. इयं सप्तम्याः संवादिनी । यथा-अबाधिष्ट । अबाधिषाताम् । अबाधिषत । ५. **धि च** (पृ० १४) । इति सलोपः । ६. इयं पञ्चम्याः संवादिनी । यथा-दिश= अतिसर्जने (४९१) अदिक्षत । अदिक्षाताम् । अदिक्षन्त ॥ ७. **स्यतासी**— (पृ० ९) ८. **आतो ङितः** (पृ० १३) **लुङ्लङ्लृङ्क्षु**-(पृ० १०) ।

## भावकर्मणी ।

**सार्वधातुके यक्।** धातोर्यक् स्यात् भावकर्मवाचिनि सार्वधातुके परे ॥ **भावकर्मणोः** । एतयोर्विवक्षितयोः सतोः आत्मनेपदं स्यात्। भावार्थकलकाराणां युष्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमपुरुष एव। तिङ्वाच्यभावनाया लिङ्गसंख्यान्वयायोगात् एकवचनमेव । यथा-त्वया भूयते । मया भूयते । तेन तया तैर्वा भूयते इत्यादि ।

**कर्मणि** तु पुरुषत्रयं वचनत्रयमपि ।

## हेतुमण्णिजन्ताः ।

**तत्प्रयोजको हेतुश्च** । कर्तुः प्रवर्तयिता हेतुसंज्ञः कर्तृसंज्ञश्च भवति । यथा-देवदत्तो गच्छति । गच्छन्तं देवदत्तं यज्ञदत्तः प्रेरयति । अत्र देवदत्तः कर्ता । तस्य प्रवर्तयिता यज्ञदत्तः हेतुसंज्ञो भवति कर्तृसंज्ञश्च ।

**हेतुमति च** । प्रेरकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । णचावितौ । "इ"मात्रं शिष्यते । यथा-गमि इति । अयं णिजन्तो धातुः । तस्मात् शपि गमि अ इति स्थिते **सार्वधातुके**—(पृ० ३). ति गुणे अयादेशे तिपि च "गमयति" इति भवति । अत्र 'गमय' इत्येतदङ्गम् ।

**णिचश्च** । णिजन्ताद्धातोरात्मनेपदं स्यत्कर्तृगामिनि क्रियाफले । गमयते इत्यपि । गमि इत्यस्य अनेकाल्त्वात् **लिटि** आम्प्रत्ययकृभ्वस्त्यनुप्रयोगाभ्यां रूपनिष्पत्तिः । गमयांबभूव । गमयाञ्चकार गमयामासेत्यादि । **लुङि** तृतीयानवम्यौ विधे । **अजीगमत्-अजीगमत** ॥

## अथ सन्नन्ताः ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा** । इषिकर्मीभूत-व्यापारवाचकाद्धातोः सन् प्रत्ययो वा स्यात् इच्छायाम् । **आर्धधातुकं शेषः** (पृ० ३) । इति सन आर्धधातुकत्वम् । **आर्धधातुकस्येड्वलादेः** । (पृ० ६) इति इटि, 'इस' इति भवति । पठितुमिच्छति इत्यर्थे पठ् इस इति स्थिते **सन्यङोः** । सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तः अजादेस्तु द्वितीयस्य । लिटि उक्ताः सर्वेऽपि विधयोऽत्र ग्राह्याः । पठ् पठ्=पपठ्+इस इत्यत्र **सन्यतः** । अभ्यासस्यात इकारः स्यात्सनि । पिपठिस, षत्वं 'पिपठिष' इत्यङ्गम्+ति=पिपठिषति । पठितुमिच्छति इति वाक्यं वा । **पूर्ववत्सनः** । सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । सनः पूर्वो धातुः परस्मैपदं चेत् सन्नन्तात्परस्मैपदं भवति ॥

## अथ यङन्ताः ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** । पौनःपुन्ये भृशार्थे च द्योत्ये एकाचो हलादेर्धातोर्यङ् स्यात् । पुनः पुनर्भवति इत्यर्थे भूधातोः यङ् भवति । **सन्यङो** (पृ० १७) रिति द्वित्वम् । जश्त्वम् । बूभूय इति जाते, **गुणो यङ्लुकोः** । अभ्यासस्य गुणः स्यद्यङि यङ्लुकि च । "बोभूय" इत्यङ्गम् । ङित्त्वात्तङ् । बोभूयते । बोभूयेते । इत्यादि । धातोरनेकाच्त्वात् लिटि तृतीया विधा ।

## अथ यङ्लुगन्ताः ।

**यङोऽचि च** । यङोऽच्प्रत्यये परे लुक् स्यात् । चकारान्निमित्तं विनापि लुक् । **चर्करीतं[1] परस्मैपदमदादिवच्च** । इति परस्मैपदप्रत्यया

---

१. "चर्करीतम्" इति यङ्लुगन्तस्य संज्ञा ।

एव । अदादाविव शपो लुक् । प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः ॥

पूर्वपीठिका संपूर्णा ।

## अथ भ्वादयः ॥ १ ॥

[१] भू=सत्तायाम् । अकर्म । सेट् । परस्मैपदी ॥

१. लट् । प्र० भवति[1] । भवतः[2] । भवन्ति[3] ॥ म० भवसि । भवथः । भवथ ॥ उ० भवामि[4] । भवावः । भवामः ॥ २. लोट् । प्र० भवतु—भवतात् । भवताम् । भवन्तु ॥ म० भव[5]—भवतात् । भवतम् । भवत ॥ उ० भवानि[6] । भवाव । भवाम ॥ ३. लङ् । प्र० अभवत्[7] । अभवताम् । अभवन् ॥ म० अभवः । अभवतम् । अभवत ॥ उ० अभवम् । अभवाव । अभवाम ॥ ४. विधिलिङ् । प्र०

१. भू+ति इति स्थिते **कर्तरि शप्** (पृ० ३) । इति शप्प्रत्यये भू अ ति इति जाते, **सार्वधातुकार्धधातुकयोः** (पृ० ३) । इति गुणे अवादेशे च 'भवति' इति रूपम् । अत्र 'भव' इत्येतदङ्गम् । २. भव+तस्=**ससजुषो रुः** । पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात् । **खरवसानयोर्विसर्जनीयः** । खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । ३. **अतो गुणे** । अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात् । ४. **अतो दीर्घो यञि** (पृ० ९) । ५. **अतो हेः** । अतः परस्य हेर्लुक् स्यात् । ६. **आनि लोट्** । उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्य नस्य णः स्यात् । प्रभवाणि । ७. **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पृ० १०) ।

भवेत्[1] । भवेताम् । भवेयुः[2] ॥ **म०** भवेः । भवेतम् । भवेत ॥ **उ०** भवेयम् भवेव भवेम ॥ ५. **लिट्** । **प्र०** बभूव[3] । बभूवतुः[4] । बभूवुः ॥ **म०** बभूविथ[5] । बभूवथुः । बभूव ॥ **उ०** बभूव । बभूविव । बभूविम ॥ ६. **लुट्** । **प्र०** भविता[6] । भवितारौ । भवितारः ॥ **म०** भवितासि । भवितास्थः । भवितास्थ ॥ **उ०** भवितास्मि । भवितास्वः । भवितास्मः ॥ ७. **लृट्** । **प्र०** भविष्यति[7] । भविष्यतः । भविष्यन्ति ॥ **म०** भविष्यसि । भविष्यथः । भविष्यथ ॥ **उ०** भविष्यामि । भविष्यावः । भविष्यामः ॥ ८. **आशीर्लिङ्** । **प्र०** भूयात्[8] । भूयास्ताम् । भूयासुः ॥ **म०** भूयाः । भूयास्तम् । भूयास्त ॥ **उ०** भूयासम् । भूयास्व । भूयास्म ॥ ९. **लुङ्** । **प्र०**

१. भव+यात्=**अतो येयः** । अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् स्यात् । भव+इय्+त् । **आद्गुणः** । भवेय् त् । **लोपो व्योर्वलि** । (पृ० १२) इति यलोपः भवेत् । २. भव+युः इति स्थिते, पूर्ववदियादेशगुणाभ्यां भवेयुरिति भवति । ३. भू+णल् । **भुवो वुग्लुङ्लिटोः** । भुवो वुगागमः स्याल्लुङ्लिटोरचि । भूव्+अ=**लिटि धातो** (पृ० ७) रिति द्वित्वम् । भूव् भूव् अ । **हलादिः शेषः** (पृ० ७) । भू भूव् अ । **ह्रस्वः** (पृ० ७) । भु भूव् अ । **भवतेरः** । भवतेरभ्यासोकारस्य अः स्याल्लिटि । भभूव् अ । **अभ्यासे चर्च** (पृ० ७) । बभूव । ४. बभूव्+अतुस्=बभूवतुः । ५. बभूव्+थ=**आर्धधातुकस्येड्वलादेः** (पृ० ६) । इति इट् । बभूविथ । ६. तासः वलाद्यार्धधातुकत्वादिट् । भविता । ७. स्यस्य आर्धधातुकत्वादिट् । ८. **किदाशिषि** । आशिषि लिङो यासुट् कित्स्यात् । **क्ङिति च** (पृ० ४) । इति 'भू' इत्यस्य गुणो न ।

अभूत् । अभूताम् । अभूवन् ॥ म० अभूः । अभूतम् । अभूत ॥ उ० अभूवम् । अभूव । अभूम ॥ १०. लृङ् । प्र० अभविष्यत् । अभविष्यताम् । अभविष्यन् ॥ म० अभविष्यः । अभविष्यतम् । अभविष्यत ॥ उ० अभविष्यम् । अभविष्याव । अभविष्याम ॥

## कृदन्ताः—

भवितव्यम् । भवनीयम् । भव्यम् । भाव्यम् । भूतः भूतवान् । भवन् । भवन्ती । भविष्यन् । भविष्यती—भविष्यन्ती । भवि-

१. प्रथमाविभोऽयं लुङ् । **गातिस्था** (पृ० १०) इति सिचो लुक् । **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पृ० १०) । इति अडागमः अ+भू+त् । **भूसुवोस्तिङि** । भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् । इति गुणाभावे अभूत् इति रूपम् । **माङि लुङ्** । सर्वलकारापवादः । **स्मोत्तरे लङ् च** । **न माङ्योगे** । अडाटौ न स्तः । मा भूत् । मास्म भूत् मास्म भवत् इति वा ।

२. **भुवो वुग्लुङ्लिटोः** (पृ० १९) । इति वुगागमः । **आतः** पृ० १०) इति जुसभावे अन् । ३. स्यस्य वलाद्यार्धधातुकत्वादिट् । **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पृ० १०) इत्यडागमः । ४. वलाद्यार्धधातुकत्वादिट् । ५. **अचो यत्** । ६ **ओरावश्यके** । इति ण्यत् । णित्वात् **अचो ञ्णिति** । ञिति णिति च प्रत्यये परेऽजन्ताङ्गस्य वृद्धिः स्यात् । इति वृद्धिः । ७ **क्तक्तवतू निष्ठा** । कित्वान्न गुणः । ८ प्रायः क्तप्रत्ययस्येव क्तवतुप्रत्ययस्यापि प्रक्रिया । ९. **लटः शतृशानचावप्रथमासमानाधिकरणे** । भू+अत् इति स्थिते । **कर्तरि शप्** पृ० ३ । इति शपि, भू+अ+अत् इति जाते **सार्वधातुके**—(पृ० ३) ति गुणे अवादेशे च भव+अत् इति जाते, **अतो गुणे** (पृ० १८) इति पररूपे 'भवत्' इति प्रातिपदिकम् । १०. **उगितश्च** । उगिदन्तात्प्रतिपदिकात् स्त्रियां ङीप् स्यात् । इति ङीप् । **शप्श्यनोर्नित्यम्** । शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्यात् शीनद्योः परतः । इति नित्यं नुम् । ११. **तौ सत्** । शतृशानचौ 'सत्' सञ्ज्ञौ स्तः । **लृटः सद्वा** । १२. **आच्छीनद्योर्नुम्** । अवर्णान्ताङ्गात्परो यः शतुरवयवः तदन्तस्याङ्गस्य

तुम्[1]। भूत्वा[2]। सम्भूय[3]। भविता[4]। भवित्री[5]। भूष्णुः[6]। भविष्णुः[7]। भावुकः[8]। विभूः[9]। प्रभूः। विभुः[10]। प्रभुः। भूः[11]। भूतिः[12]। भावः[13]। प्रभवः। भवः[14]। भवनम्[15]। भुवनम्[16]। भूमिः[17]। भूरिः[18]। अद्भुतः[19]॥ एवं सर्वेभ्योऽपि धातुभ्यः यथासम्भवं कृत्याः कृतः उणादयश्चोह्याः।

तुम्वा स्याच्छीनद्योः परतः। इति वा तुम्। १. **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्**। **समानकर्तृकेषु तुमुन्**। वलाद्यार्धधातुकत्वादिट्। मित्त्वात् **कृन्मेजन्तः** इत्यव्ययत्वम्। २ **समानकर्तृकयोः पूर्वकाले**। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। इति क्त्वा। कित्त्वान्न गुणः। **श्र्युकः किति**। श्रिञः एकाचः उगन्ताच्च परयोर्गित्कितोरिण्न स्यात्। इति इडभावः। **क्त्वातोसुन्कसुनः**। इत्यव्ययत्वम्। **अव्ययकृतो भावे**। इति भावार्थकोऽयम्। ३. **समासेऽनञ्पूर्वो क्त्वो ल्यप्**। ४. **ण्वुल्तृचौ**। वर्तमानकाले कर्त्रर्थे धातोरेतौ स्तः। इति तृच्। ५. **ऋन्नेभ्यो ङीप्**। ६. **ग्लाजिस्थश्च ग्स्नुः**। चाद्भुवः। **श्र्युकः** (पृ० २१) इति नेट्। ७. **भुवश्च**। इति तच्छीलादिषु इष्णुच्। ८. **लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्**। ञित्वात् **अचो ञ्णिति** (पृ० २०) इति वृद्धिः। ९. **भुवः संज्ञान्तरयोः**। इति क्विप्। क्विपः सर्वस्य लोपः। १०. **विप्रसम्भ्योड्वसंज्ञायाम्**। एभ्यः परस्य भुवो डुः। टिलोपः। ११ **सम्पदादिभ्यः क्विब्वा वक्तव्यः**। १२. **स्त्रियां क्तिन्**। इति अकर्तरि कारके भावे च सर्वधातुभ्यः क्तिन्। १३. भवति अस्मिन् अनेनेति वा इत्यर्थे **श्रिणीभुवोऽनुपसर्गे**। इति घञ्। उपसर्गे तु **ऋदोरप्** इत्यप्। १४. **अज्विधिः सर्वधातुभ्यः**। इत्यच्। १५. **बहुलमन्यत्रापि दृश्यते**। इति युच्। **युवोरनाकौ**। १६. **भूसूधूमस्जिभ्यश्छन्दसि** इति क्युन्। १७ **भुवः कित्**। इति 'मिः'। १८. **अदिशदिभूशुभिभ्यः क्रिन्**। १९. **अदिभुवो डुतच्**।

## अथ भावे।

१. भूयते[1] ॥ २. भूयताम् ॥ ३. अभूयत ॥ ४. भूयेत ॥ ५. बभूवे ॥ ६. भाविता[2]-भविता ॥ ७. भाविष्यते-भविष्यते ॥ ८. भाविषीष्ट-भविषीष्ट ॥ ९. अभावि[3] ॥ १०. अभाविष्यत-अभविष्यत ॥

अनुपूर्वस्य भवतेः सकर्मकत्वात्—

## कर्मणि।

१. प्र० अनुभूयते[4]। अनुभूयेते अनुभूयन्ते ॥ म० अनुभूयसे। अनुभूयेथे। अनुभूयध्वे ॥ उ० अनुभूये। अनुभूयावहे। अनुभूयामहे ॥ २. प्र० अनुभूयताम्। अनुभूयेताम्। अनुभूयन्ताम् ॥ म० अनुभूयस्व। अनुभूयेथाम्। अनुभूयध्वम् ॥ उ० अनुभूयै। अनुभूयावहै। अनुभूयामहै ॥ ३. प्र० अन्वभूयत[5]। अन्वभूयेताम्। अन्वभूयन्त ॥ म० अन्वभूयथाः। अन्वभूयेथाम्। अन्वभूयध्वम् ॥ उ० अन्वभूये। अन्वभूयावहि। अन्वभूयामहि ॥ ४. प्र० अनुभूयेत। अनुभूयेयाताम्। अनुभूयेरन् ॥ म० अनुभूयेथाः। अनुभूयेयाथाम्। अनुभूयेध्वम् ॥ उ० अनुभूयेय। अनुभूयेवहि। अनुभूयेमहि ॥

---

१. यकः कित्त्वान्न गुणः। २. **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च**। उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं स्यात् स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च। अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न। चिण्वद्भावपक्षे **अचो ञ्णिति** (पृ० २०) इति वृद्धिः। चिण्वद्भावाभावपक्षे तु न वृद्धिः। भविता इत्येव। ३. **चिण् भावकर्मणोः**। च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे। **चिणो लुक्**। चिणः परस्य तशब्दस्य लुक्। ४. 'अनुभूय' इति यक्सहितो धातुरङ्गम्। **भावकर्मणोः** (पृ० १६) इति तङ्। आत्मनेपदप्रक्रिया पूर्वपीठिकायां **'एध'** २. धातौ च द्रष्टव्या। ५. अनु + अभूय + त = अन्वभूयत।

५. **प्र०** अनुबभूवे । अनुबभूवाते । अनुबभूविरे ॥ **म०** अनुबभूविषे[1] । अनुबभूवाथे । अनुबभूविध्वे–अनुबभूविढ्वे[2] ॥ **उ०** अनुबभूवे । अनुबभूविवहे । अनुबभूविमहे ॥ ६. **प्र०** अनुभाविता[3] । अनुभावितारौ । अनुभावितारः ॥ **म०** अनुभावितासे । अनुभावितासाथे । अनुभाविताध्वे ॥ **उ०** अनुभाविताहे । अनुभावितास्वहे । अनुभावितास्महे । **चिण्वद्भावाभावपक्षे**–अनुभविता ॥ अनुभवितासे ॥ अनुभवितास्महे ॥ इत्यादि ॥ ७. **प्र०** अनुभाविष्यते[4] । अनुभाविष्येते । अनुभाविष्यन्ते । **म०** अनुभाविष्यसे । अनुभाविष्येथे । अनुभाविष्यध्वे ॥ **उ०** अनुभाविष्ये । अनुभाविष्यावहे । अनुभाविष्यामहे ॥ **चिण्वद्भावाभावपक्षे**–अनुभविष्यते । अनुभविष्येते इत्यादि ॥ ८. **प्र०** अनुभाविषीष्ट[5] । अनुभाविषीयास्ताम् । अनुभाविषीरन् ॥ **म०** अनुभाविषीष्ठाः । अनुभाविषीयास्थाम् । अनु- अनुभाविषीढ्वम्[6]–अनुभाविषीध्वम् ॥ **उ०** अनुभाविषीय । अनुभाविषीवहि । अनुभाविषीमहि ॥ **पक्षे**—अनुभविषीष्टेत्यादि । ९. **प्र०** अन्वभावि[7] । अन्वभाविषाताम् । अन्वभाविषत ॥ **म०** अन्वभाविष्ठाः । अन्वभाविषाथाम् । अन्वभाविढ्वम्—अन्वभाविध्वम् ॥ **उ०**

---

१. आर्धधातुकत्वात् शप् न । अतो 'बभूव्' इत्येवाङ्गम् । **आर्धधातुकस्येड्वलादेः** (पृ० ६) । इति इट् । बभूव् इ से इति स्थिते । **आदेशप्रत्यययोः** (पृ० १४) । इति षत्वम् । २. **विभाषेटः** । इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां वा मूर्धन्यः स्यात् । ३. **स्यसिच्सीयुट्**—(पृ० २२) इत्यादिना वा चिण्वत् । चिण्वद्भावपक्षे वृद्धिः ।

४. प्रत्ययावयवत्वात्षत्वम् । ५.. पूर्ववत्षत्वम् । ६. **विभाषेटः** (पृ० २३) इति धस्य वा मूर्धन्यः ।

७ **चिण् भावकर्मणोः** (पृ० २२) । लुङि दशमी विधा ॥ **चिणो लुक्** (पृ० २२) । इति तशब्दस्य लुक् ।

## सन्नन्ते ।

१. बुभूषति भूषतः । बुभूषन्ति ॥ २. बुभूषतु — षतात् । बुभूषताम् बुभूषन्तु । ३. अबुभूषत् । अबुभूषताम् । अबुभूषन् ॥ ४. बुभूषेत् बुभूषेताम् । बुभूषेयुः ॥ ५. बुभूषाञ्चकार । बुभूषाञ्चक्रतुः । बुभूषाञ्चक्रुः ॥ **पक्षे**—बुभूषाम्बभूव ॥ बुभूषामास ॥ इत्यादि ॥ ६. बुभूषिता ॥ बुभूषितासि ॥ बुभूषितास्मि ॥ ७. बुभूषिष्यति । बुभूषिष्यतः । बुभूषिष्यन्ति ॥ ८. बुभूष्यात् । बुभूष्यास्ताम् । बुभूष्यासुः ॥ ९. अबुभूषीत् । अबुभूषिष्टाम् । अबुभूषिषुः ॥ १०. अबुभूषिष्यत् । अबुभूषिष्यताम् । अबुभू-

बुभूषितव्यम् । बुभूषणीयम् । बुभूषन् । बुभूषितम् । बुभूषितुम् बुभूषित्वा । सम्बुभूष्य । बुभूषुः । बुभूषा ।

१. **पूर्ववत्सनः** (पृ० १७) इति परस्मैपदम् । **इको झल्** । इगन्ताज्झलादिः सन् कित्स्यात् । कित्वान्न गुणः । **सनिग्रहगुहोश्च** । ग्रहेर्गुहेः उगन्तादेकाचश्च सन इण्न स्यात् । इति नेट् ।

२ ‘ बुभूष ’ इत्यस्य अनेकाच्त्वात् **कास्प्रत्यया-**(पृ०८) दिति आम् कृभ्वस्त्यनुप्रयोगश्च । ३. बुभूष + ता इति स्थिते **अतो लोपः** । आर्धधातुकोपदेशकाले यदकारान्तं तस्य अकारस्य लोपः स्यादार्धधातुके परे । बुभूष् + ता इति जाते **आर्धधातुकस्येड्वलादेः** । (पृ०६) इति इटि बुभूषिता । एवं बुभूषिष्यतीत्यादि । ४. सप्तमो लुङ् । ५. **सनाशंस भिक्ष उः** । एभ्यः उप्रत्ययः स्यात्तच्छीलादिष्वर्थेषु । ६ **अ प्रत्ययात्** । प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् ।

## यङि

१. बोभूयते[1]। बोभूयेते। बोभूयन्ते ॥ २. बोभूयताम्। बोभूयेताम्। बोभूयन्ताम्। ३. अबोभूयत। अबोभूयेताम्। अबोभूयन्त ॥ ४. बोभूयेत। बोभूयेयाताम्। बोभूयेरन् ॥ ५. बोभूयाञ्चक्रे। बोभूयाञ्चक्राते। बोभूयाञ्चक्रिरे ॥ बोभूयाम्बभूव ॥ बोभूयामास ॥ इत्यादि ॥ ६. बोभूयिता ॥ बोभूयितासे ॥ बोभूयिताहे ॥ ७. बोभूयिष्यते। बोभूयिष्येते। बोभूयिष्यन्ते ८. बोभूयिषीष्ट। बोभूयिषीयास्ताम्। बोभूयिषीरन् ॥ ९. अबोभूयिष्ट। अबोभूयिषाताम्। अबोभूयिषत ॥ १०. अबोभूयिष्यत। अबोभूयिष्येताम्। अबोभूयिष्यन्त ॥

## कृत्सु

बोभूयितव्यम्। बोभूयनीयम्। बोभूय्यम्। बोभूयितम्। बोभूयमानः। बोभोयितुम्। बोभूयित्वा परिबोभूय्य

## यङ्लुक।

१. प्र. बोभवीति[2]–बोभोति। बोभूतः[3]। बोभुवति[4] ॥ म० बोभवीषि–बोभोषि। बोभूथः। बोभूथ ॥ उ० बोभवीमि–बोभोमि। बोभूवः।

---

१. यङो ङित्वात् **अनुदात्तङित आत्मनेपदम्**। (पृ० २) इत्यात्मनेपदम्। सन्नन्तवत्प्रक्रिया। (पृ० १७)

२. **चर्करीतं परस्मैपदमदादिवच्च**। इति परस्मैपदम्। **यङो वा**। यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात्। ३. अपित्वादीड् न। ४. **अदभ्यस्तात्**। अभ्यस्तात्परस्य झस्य अत् स्यात् ॥

बोभूमः ॥ २. बोभवीतु—बोभोतु, बोभूतात् । बोभूताम् । बोभुवतु ॥ म० बोभूहि—बोभूतात् ॥ उ० बोभवानि ॥ ३. अबोभवीत्—अबोभोत् । अबोभूताम् । अबोभवुः ॥ ४. बोभूयात् । बोभूयाताम् । बोभूयुः ॥ ५. बोभवाञ्चकार । बोभवाञ्चक्रतुः । बोभवाञ्चक्रुः ॥ बोभवाम्बभूव बोभवाम्बभूवतुः बोभवाम्बभूवुः ॥ बोभवामास । बोभवामासतुः । बोभवामासुः ॥ ६. बोभविता ॥ ७. बोभविष्यति ॥ ८. बोभूयात् । बोभूयास्ताम् ॥ ९. प्र० अबोभूवीत्—अबोभोत् । अबोभूताम् । अबोभूवुः । म० अबोभूवीः—अबोभोः । अबोभूतम् । अबोभूत ॥ उ० अबोभूवम् । अबोभूव । अबोभूम ॥ १०. अबोभाविष्यत् ॥ इत्यादि ॥

**कृत्सु**—बोभावितव्यम् । बोभवनीयम् । बोभुवितः । बोभुवत् । बोभुवती । बोभूत्वा । परिबोभूय । बोभावितुम् ।

## कर्मव्यतिहारे—

१. व्यतिभवते । व्यतिभवेते । व्यतिभवन्ते ॥ २. व्यतिभवताम् ॥ ३. व्यत्यभवत ॥ ४. व्यतिभवेत ॥ ५. व्यतिबभूवे । व्यतिबभूवाते । व्यतिबभूविरे ॥ ६. व्यतिभविता । म० व्यतिभवितासे ॥ ७. व्यतिभविष्यते ॥ ८. व्यतिभविषीष्ट ॥ ९. प्र० व्यत्यभविष्ट ॥ म० व्यत्यभविष्ठाः ॥ उ० व्यत्यभविषि ॥ १०. व्यत्यभविष्यत ॥

---

**धातुभ्रुवां य्वोरियङुवङौ**। (पृ० ११) इति उवङ् । १. तातङः अपित्वात् ईट् न । २ ह्रिरपित् । ३ अनेकाच्त्वादाम् कृभ्वस्त्यनुप्रयोगश्च ॥

४. वलाद्यार्धधातुकत्वादिट् । ५. **कर्तरि कर्मव्यतिहारे**। **क्रिया**विनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । अन्ययोग्यायाः क्रियाया अन्येन करणं

सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादौ उत्पद्यत इत्याद्यर्थनिर्देशात् । उपसर्गास्तु विद्यमानस्यैव अर्थविशेषस्य द्योतकाः । यथा—प्रभवति=प्रकाशते, उत्पद्यते, शक्नोति[2] वा । सम्भवति=उत्कटै[3]-ककोटिकसंशयविषयो भवति । पराभवति[4]=पराजयते । अनुभवति=उप[5]-भुङ्क्ते । अभिभवति=हिनस्ति पराजयते वा । उद्भवति=उत्पद्यते । परि-भवति[6]=तिरस्करोति । प्रतिभवति=उत्तमर्णाधमर्णयोर्मध्यस्थीभवति ।

[२] **एध=वृद्धौ** । अकर्मकः । सेट् । आत्मने० ।

१. **प्र०** एधते । एधेते । एधन्ते[7] ॥ **म०** एधसे । एधेथे । एधध्वे । **उ०** एधे । एधावहे[8] । एधामहे ॥ **२. प्र०** एधताम् । एधेताम् । एधन्ताम् ॥ **म०** एधस्व । एधेथाम् । एधध्वम् ॥ **उ०** एधै । एधावहै । एधामहै ॥ **३. प्र०** ऐधत[9] । ऐधेताम् । ऐधन्त ॥ **म०** ऐधथाः । ऐधेथाम् ऐधध्वम् ॥ **उ०** ऐधे । ऐधावहि । ऐधामहि ॥ **४. प्र०** एधेत । एधेयाताम् । एधेरन् ॥ **म०** एधेथाः । एधेयाथाम् । एधेध्वम् ॥ **उ०** एधेय । एधेवहि । एधेमहि ॥

परस्परकरणं च क्रियाविनिमयः । १ हिमवतो गङ्गा प्रभवति । २. भीमो हिडिम्बं हन्तुं प्रभवति । ३ स्त्रीषु चापलं सम्भवति । ४ रामः शत्रून् पराभवति । ५. सुखमनुभवति । ६. रावणेन परिभूतो विभीषणः ।

७. एध+अन्ते इति स्थिते **अतो गुणे** (पृ० १८) । एधन्ते । ८. **अतो दीर्घो यञि** (पृ०९) । ९. **आडजादीनाम्** । अजादीनामाट् स्याल्लुङा-दिषु । आ+एध+त=**आटश्च** । आटोऽचि परे वृद्धिरेकादेशः स्यात् 'ऐधत' ।

५. **प्र०** एधाञ्चक्रे[1] । एधाञ्चक्राते । एधाञ्चक्रिरे ॥ **म०** एधाञ्चकृषे । एधाञ्चक्राथे । एधाञ्चकृढ्वे[2] ॥ **उ०** एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे ॥ **भवतेरनुप्रयोगे**–एधाम्बभूव[3] एधाम्बभूवतुः । एधाम्बभूवुः । इत्यादि ॥ **अस्तेरनुप्रयोगे**–एधामास । एधामासतुरित्यादि ॥ ६. **प्र०** एधिता[4] । एधितारौ । एधितारः ॥ **म०** एधितासे । एधितासाथे । एधिताध्वे[5] ॥ **उ०** एधिताहे । एधितास्वहे । एधितास्महे ॥ ७. एधिष्यते । एधिष्येते । एधिष्यन्ते ॥ **म०** एधिष्यसे । एधिष्येथे । एधिष्यध्वे ॥ **उ०** एधिष्ये । एधिष्यावहे एधिष्यामहे ॥ ८. **प्र०** एधिषीष्ट[6] । एधिषीयास्ताम् । एधिषीरन् ॥ **म०** एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् ॥ **उ०** एधिषीय । एधिषीवहि । एधिषीमहि ॥ ९. **प्र०** ऐधिष्ट[7] । ऐधिषाताम् । ऐधिषत[8] ॥ **म०** ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम्–ध्वम्[9] ॥ **उ०** ऐधिषि । ऐधिष्वहि । ऐधिष्महि ॥ १०. **प्र०** ऐधिष्यत ऐधिष्येतां । ऐधिष्यन्त ॥ **म०** ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् ॥ **उ०** ऐधिष्ये । ऐधिष्यावहि । ष्यामहि ॥

१. कृधातोर्द्वित्वे कृकृ इति जाते, **उरत्** पृ०८) । इति ऋकारस्य अकारे, ततः चुत्वे, **इको यणचि** । इति ऋकारस्य रेफे च 'चक्रे' इति भवति । एधा + चक्रे = एधाञ्चक्रे । २. **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** । इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । इति धस्य ढः । ३. भवतेरस्तेश्च परस्मैपदित्वात् अत्रापि परस्मैपदमेव । ४. तासः स्यस्य च वलाद्यार्धधातुकत्वादिट् । ५ **धि च** (पृ० १४) इति सलोपः । ६. प्रत्ययावयवत्वात् **आदेशप्रत्यययोः** (पृ० १४) । इति षत्वम् । ७. लुङि एकादशी विधा । ८ **आत्मनेपदेष्वनतः** । अनकारात्परस्य आत्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात् । ९ **इणः षीध्व**-मित्यत्र इट्भिन्न

भावे–एध्यते । २. एध्यताम् । ३. ऐध्यत । ४. एध्येत । लिडादिषु कर्तृवत् । ९. ऐधि[1] ॥ णिचि–एधयति–ते । ५. एधयाञ्चकार–एधयाञ्चक्रे । ९. ऐदिधत् –ऐदिधत ॥ सनि–एदिधिषते । ५. एदिधिषांचक्रे । ८. एदिधिषीष्ट । अजादित्वात् यङ्यङ्लुकौ न स्तः ॥

कृत्सु–एधितव्यम् । एधनीयम् । एध्यम् । एधितः । एधमानः । एधितुम् । एधनम् । एधित्वा । समेध्य । एधः=समित् । एधयितव्यः ।

[३] स्पर्ध=सङ्घर्षे । अकर्म० । सेट् । आत्मने०

सङ्घर्षः पराभिभवेच्छा । * कर्मणो धात्वर्थेनोपसङ्ग्रहात् अकर्मकत्वम् ॥

१. प्र० स्पर्धते । स्पर्धेते । स्पर्धन्ते ॥ म० स्पर्धसे स्पर्धेथे । स्पर्धध्वे ॥ उ० स्पर्धे । स्पर्धावहे स्पर्धामहे ॥ २. प्र० । स्पर्धताम् । स्पर्धेताम् । स्पर्धन्ताम् ॥ म० स्पर्धस्व । स्पर्धेथाम् । स्पर्धध्वम् ॥ उ० स्पर्धै । स्पर्धावहै । स्पर्धामहै ॥ ३. प्र० अस्पर्धत । अस्पर्धेताम् अस्पर्धन्त ॥ म० अस्पर्धथाः । अस्पर्धेथाम् । अस्पर्धध्वम् ॥ उ० अस्पर्धे । अस्पर्धावहि । अस्पर्धामहि ॥ ४. प्र० स्पर्धेत । स्पर्धेयाताम् । स्पर्धेरन् ॥ म० स्पर्धेथाः । स्पर्धेयाथाम् । स्पर्धेध्वम् ॥ उ० स्पर्धेय । स्पर्धेवहि । स्पर्धेमहि ॥

---

एव इणिह गृह्यत इति मते तु 'ध्वम्' इत्यपि । १. **चिण् भावकर्मणोः** । (पृ० २२) दशमी विधा ।

* धातोरर्थान्तरे वृत्तेः धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

५. प्र० पस्पर्धे । पस्पर्धाते । पस्पर्धिरे ॥ म० पस्पर्धिषे । पस्पर्धाथे । पस्पर्धिध्वे ॥ उ० पस्पर्धे । पस्पर्धिवहे । पस्पर्धिमहे ॥ ६. प्र० स्पर्धिता । म० स्पर्धितासे । उ० स्पर्धिताहे ॥ ७. प्र० स्पर्धिष्यते । म० स्पर्धिष्यसे उ० स्पर्धिष्ये ॥ ८. प्र० स्पर्धिषीष्ट । स्पर्धिषीयास्ताम् । स्पर्धिषीरन् । म० स्पर्धिषीष्ठाः । स्पर्धिषीयास्थाम् । स्पर्धिषीध्वम् । उ० स्पर्धिषीय । स्पर्धिषीवहि । स्पर्धिषीमहि ॥ ९. प्र० अस्पर्धिष्ट । अस्पर्धिषाताम् । अस्पर्धिषत ॥ म० अस्पर्धिष्ठाः । अस्पर्धिषाथाम् । अस्पर्धिध्वम् ॥ उ० अस्पर्धिषि । अस्पर्धिष्वहि । अस्पर्धिष्महि ॥ १०. प्र० अस्पर्धिष्यत ॥ म० अस्पर्धिष्यथाः ॥ उ० अस्पर्धिष्ये ॥

**भावे**—स्पर्ध्यते । ३. अस्पर्ध्यत । ५. पस्पर्धे । ९. अस्पर्धि ॥ **णिचि**—स्पर्धयति—ते ॥ ३. अस्पर्धयत्–त ॥ ५. स्पर्धयाञ्चकार–ञ्चक्रे । याम्बभूव । यामास ॥ ९. अपस्पर्धत्–त ॥ **सनि**–पिस्पर्धिषते । ५. पिस्पर्धिषाञ्चक्रे–मास–बभूव ॥ ६. स्पर्धिषिता । ९. अपिस्पर्धिषिष्ट ॥ **यङि**–पास्पर्ध्यते ॥ ५. पास्पर्धाञ्चक्रे ॥ ८. पास्पर्धिषीष्ट ॥ ९. अपास्पर्धिष्ट ॥ **यङ्लुकि**–पास्पर्धीति–पास्पर्द्धि । पास्पर्द्धः । पास्पर्धति ॥ ३. अपास्पर्त्–अपास्पर्द् ।

---

१. **शर्पूर्वाः खयः** । (पृ० ७) **हलादिः शेषः** । (पृ० ७)इत्यस्य अपवादः । २. एकादशो लुङ् । ३. **चिण् भावकर्मणोः** । (पृ० २२)

४. **सन्यतः** । (पृ० १७) **पूर्ववत्सनः** । (पृ० १७) ५. **दीर्घोऽकितः** । अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । ६. स्पर्ध् स्पर्ध् य= पस्पर्ध् य=**यस्य हलः** । हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके पस्पर्ध् = पास्पर्ध्+आञ्चक्रे=पास्पर्धाञ्चक्रे ।

म० अपास्पाः–अपास्पर्द् । ५. पास्पर्धाञ्चकार ॥ कृत्सु–स्पर्धितव्यम् । स्पर्धनीयम् । स्पर्ध्यम् । स्पर्धितः । स्पर्धमानः । स्पर्धितुम् । स्पर्धित्वा । संस्पर्ध्य । स्पर्धा । स्पर्धयितव्यम् । स्पर्धयमानः । पिस्पर्धिषा । पिस्पर्धिषुः । आ—आस्फालने, आस्पर्द्धते । आस्पर्द्धा ।

[४] **गाधृ**=प्रतिष्ठालिप्सयोर्ग्रन्थे च । सकर्म० । सेट् । आत्मने० ।

१. गाधते ॥ २. गाधताम् ॥ ३. अगाधत ॥ ४. गाधेत ॥ ५. प्र० जगाधे । जगाधाते । जगाधिरे ॥ म० जगाधिषे । जगाधाथे । जगाधिध्वे ॥ उ० जगाधे । जगाधिवहे । जगाधिमहे ॥ ६. प्र० गाधिता ॥ म० गाधितासे ॥ ७. गाधिष्यते ॥ ८. गाधिषीष्ट ॥ ९. प्र० अगाधिष्ट । अगाधिषाताम् । अगाधिषत ॥ म० अगाधिष्ठाः । अगाधिषाथाम् । अगाधिड्ढ्वम्–ध्वम् ॥ उ० अगाधिषि ॥ १०. अगाधिष्यत ॥

**कर्मणि**—गाध्यते । २. गाध्यताम् । ५. जगाधे । ९. अगाधि । **णिचि**—गाधयति—ते । ५. गाधयाञ्चकार—चक्रे । ९. अजगाधत्—त ॥ **सनि**—जिगाधिषते । २. जिगाधिषताम् । ३. अजिगाधिषत । ५. जिगाधिषाञ्चक्रे—जिगाधिषाम्बभूव —जिगाधिषामास । ९. अजिगाधिषिष्ट ॥ **यङि**—जागाध्यते । ५. जागाधाञ्चक्रे । ९. अजागाधिष्ट ॥ **यङ्लुकि**—जागाधीति—जागाद्धि । म० जाघात्सि । जागाधीषि ।

१. **गुरोश्च हलः** । गुरुमतो हलन्तात् स्त्रियामकारप्रत्ययः स्यात् । २. 'जिगाधिष' इत्यस्य सनन्तस्य धातोः अनेकाच्त्वात् **कास्प्रत्ययादि**-(पृ०८) ति आम् । ३. **दीर्घोऽकितः** । ४. **यस्य हलः** ।

**कृत्सु**—गाधितव्यम् । गाधनीयम् । गाध्यम् । गाधमानः । गाधितुम् । गाधित्वा । प्रगाध्य । गाधनः[1] । गाधा[2] ।

[५] **बाधृ**=लोडने । लोडनं प्रतिघातः । सकर्म० । सेट् । आत्मने० । सर्वं[4] **"गाधति"** (४) वत् । बाहुः ॥ सम्—परस्परपीडने । सम्बाधते । सम्बाधः=सङ्कटं ना तु सम्बाध इत्यमरः ।

[६] **नाथृ**=याच्ञोपतापैश्वर्याशीष्षु । सकर्मकः । सेट् । आशीरर्थे आत्मने० । नाथते इत्यादि सर्वं[4] **"गाधति"** (४) वत् । याच्ञोपतापार्थयोः परस्मैपदम् ।

१. नाथति ॥ २. नाथतु ॥ ३. अनाथत् ॥ ४. नाथेत् ॥ ५. ननाथ ॥ ननाथतुः ॥ ६. नाथिता ॥ ७. नाथिष्यति ॥ ८. नाथ्यात् ॥ ९. अनाथीत् ॥ १०. अनाथिष्यत् ॥ **यङ्लुकि**—नानात्ति--नानाथीति इत्यादि ॥

[७] **दध**=धारणे । धारणमिह धरणम् । सकर्म० । सेट् । आत्मने० ॥

१. **प्र०** दधते । दधेते । दधन्ते ॥ **म०** दधसे । दधेथे । दधध्वे ॥ **उ०** दधे । दधावहे । दधामहे ॥ २. **प्र०** दधताम् । दधेताम् । दधन्ताम् । **म०** दधस्व । दधेथाम् । दधध्वम् ॥ **उ०** दधै । दधावहै । दधामहै ॥ ३. **प्र०** अदधत । अदधेताम् । अदधन्त ॥ **म०** अदधथाः । अदधेथाम् । अदधध्वम् ॥ **उ०** अदधे । अदधावहि । अदधामहि ॥ ४. **प्र०** दधेत । दधेयाताम् । दधेरन् ॥ **म०** दधेथाः । दधेयाथाम् । दधेध्वम् ॥ **उ०** दधेय ।

---

१. **अनुदात्तेतश्च हलादेः** । अकर्मकाद्युच् स्यात् । इति युच् । २. **गुरोश्च हलः** । इति स्त्रियामकारप्रत्ययः । ३ उपतापो=रोगः । ४. सप्तमो लुङ् ।

दधेवहि । दधेमहि ॥ ५. प्र० देधे[1] देधाते । देधिरे ॥ म० देधिषे । देधाथे । देधिध्वे ॥ उ० देधे । देधिवहे । देधिमहे ॥ ६. प्र० दधिता ॥ म० दधितासे ॥ उ० दधिताहे ॥ ७. प्र० दधिष्यते ॥ म० दधिष्यसे ॥ उ० दधिष्ये ॥ ८. प्र० दधिषीष्ट । दधिषीयास्ताम् । दधिषीरन् ॥ म० दधिषीष्ठाः । दधिषीयास्थाम् । दधिषीध्वम् ॥ उ० दधिषीय । दधिषीवहि । दधिषीमहि । ९. प्र० अदधिष्ट[2] । अदधिषाताम् । अदधिषत ॥ म० अदधिष्ठाः । अदधिषाथाम् । अदधिढ्वम्–ध्वम् ॥ उ० अदधिषि । अदधिष्वहि । अदधिष्महि ॥ १०. प्र० अदधिष्यत ॥ म० अदधिष्यथाः ॥ उ० अदधिष्ये ॥

**कर्मणि**-दध्यते ॥ २. दध्यताम् ॥ ३. अदध्यत ॥ ४. दध्येत ॥ लिडादिषु देधे इत्यादि कर्तरिवत् ॥ ९. अदाधि[3] । अदाधिषातम् इत्यादि विशेषः । **णिचि**—१. दाधयति–ते । ५. दाधयाञ्चकार–ञ्चक्रे । ९. अदीदधत्[4]–त । **सनि**—दिदधिषते । ५. दिदधिषाञ्चक्रे । ९. अदिदधिषिष्ट ॥ **म०** ढ्वम्–ध्वम् ॥ **यङि**–दादध्यते । ५. दादधाञ्चक्रे । ६. दादधिता । ९. अदादधिष्ट ॥ म० ढ्वम्–ध्वम् ॥ **यङ्लुकि**—दादधीति–दादद्धि इत्यादि ॥ **कृत्सु**—दधितव्यम् । दधनीयम् । दाध्यम् । दधितः । दधमानः । दधित्वा । सन्दध्य । दधितुम् । दधनः ॥

[८] **स्कुदि**=आप्रवणे । आप्रवणमुत्प्लवनमुद्धरणं च । आद्येऽकर्मकः । द्वितीये सकर्मकः । सेट् । आत्मने० ॥

---

१. द्वितीयो लिट् एत्वाभ्यासलोपाभ्याम् । २. लुङि एकादशी विधा । ३. **चिण् भावकर्मणोः** । (पृ० २२) ४. तृतीयो नवमश्च लुङ् ।

१. स्कुन्दते॥ म० स्कुन्दसे॥ उ० स्कुन्दे॥ २. स्कुन्दताम्॥ ३. अस्कुन्दत॥ ४. स्कुन्देत॥ ५. प्र० चुस्कुन्दे॥ चुस्कुन्दाते। चुस्कुन्दिरे॥ म० चुस्कुन्दिषे॥ उ० चुस्कुन्दे। चुस्कुन्दिवहे॥ ६. स्कुन्दिता॥ ७. स्कुन्दिष्यते॥ ८. प्र० स्कुन्दिषीष्ट॥ म० स्कुन्दिषीष्ठाः। ढ्वम्–ध्वम्॥ उ० स्कुन्दिषीय॥ ९. अस्कुन्दिष्ट॥ १०. अस्कुन्दिष्यत॥

**कर्मणि**—स्कुन्द्यते। २. स्कुन्द्यताम्। ९. अस्कुन्दि। लिडादिषु कर्तरिवत्॥ **णिचि**—स्कुन्दयति–ते॥ **सनि**—चुस्कुन्दिषते। ५. चुस्कुन्दिषाञ्चक्रे। ९. अचुस्कुन्दिषिष्ट॥ **यङि**—चोस्कुन्द्यते। ५. चोस्कुन्दाञ्चक्रे। ९. अचोस्कुन्दिष्ट॥ **यङ्लुकि**—चोस्कुन्दीति–चोस्कुन्ति। ३. अचोस्कुन्॥ **कृत्सु**—स्कुन्दितव्यः। स्कुन्दनीयः। स्कुन्द्यः। स्कुन्दितः। स्कुन्दमानः। स्कुन्दनम्। स्कुन्दनः। स्कुन्दितुम्। स्कुन्दित्वा। प्रस्कुन्द्य।

[९] **वदि**=अभिवादनस्तुत्योः। सकर्म०। सेट्। आत्मने०॥

१. वन्दते॥ २. वन्दताम्॥ ३. अवन्दत॥ ४. वन्देत॥ ५. ववन्दे॥ म० ववन्दिषे। ध्वे॥ उ० ववन्दे। ववन्दिवहे॥ ६. वन्दिता॥ ७. वन्दिष्यते॥ ८. वन्दिषीष्ट॥ ध्वम्॥ ९. अवन्दिष्ट॥ १०. अवन्दिष्यत॥ **कर्मणि**—वन्द्यते। **णिचि**–वन्दयति–ते। **सनि**–विवन्दिषते। **यङि**–वावन्द्यते। **यङ्लुकि**–वावन्दीति–वावन्ति इत्यादि। **कृत्सु**–वन्दितव्यः। वन्दनीयः।

१. **इदितो नुम् धातोः**। (८ । २. **शर्पूर्वाः खयः** (पृ० ७) **कुहोश्चुः** (पृ० ७)

वन्द्यः । वन्दितः । वन्दमानः । वन्दितुम् । वन्दित्वा । प्रवन्द्य । वन्दनम् । वन्दारुः[1] ।

[१०] **भदि**=कल्याणे सुखे च । अकर्म० । सेट् । आत्मने० ॥ भन्दते ॥ बभन्दे[2] ॥ इत्यादि '**वन्दति**' (९)वत् ॥ भद्रम्=शुभम् । भद्राकरोति[3]=मुण्डयति । माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः ॥

[११] **मदि**=स्तुतिमोदमदस्वप्नकान्तिगतिषु । स्तुतिगत्योः सकर्मकः । अन्यत्राकर्मकः । सेट् । आत्मने० । मोदः=हर्षः । मदः–गर्वः । स्वप्नः=आलस्यम् ॥ मन्दते ॥ ममन्दे ॥ इत्यादि'**वन्दति**' (९)वत् । मन्दुरा । मन्दिरम्[4] । मन्द्रम्[5] । मन्दः । मन्दारः ।

[१२] **स्पदि**=किञ्चिच्चलने । चलनं=कम्पनम् । अकर्म० । सेट् । आत्मने० ॥ स्पन्दते ॥ पस्पन्दे[6] ॥ इत्यादि'वन्दति'(९)वत् । **णिचि**–स्पन्दयति[7] ॥

[१३] **क्लिदि**=परिदेवने । परिदेवनं=शोचनम् । सकर्म० । सेट् ॥ आत्म० । क्लिन्दते । चैत्रम् ॥ ५. चिक्लिन्दे ॥ ९. अक्लिन्दिष्ट[8] ।

[१४] **मुद**=हर्षे । अकर्म० सेट् । आत्मने० ।

१. मोदते ॥ २. मोदताम् ॥ ३. अमोदत ॥ ४. मोदेत ॥

१ **शृवन्द्योरारुः** । तव वन्दारुभिः सह .भट्टिः ७ । २५) । २. **अभ्यासे चर्च** । पृ० ७) ३. **भद्राच्चेति वक्तव्यम्** । इति डाच्प्रत्ययः । ४. **इषिमदी**–त्यादिना किरच् । ५. **स्फायितञ्ची**–त्यादिना रक् । ६ **शर्पूर्वाः खयः** (पृ० ७' ७ **निगरणचलनार्थेभ्यश्च** । भक्षणार्थेभ्यश्चलनार्थेभ्यश्च ण्यन्तेभ्यः परस्मैपदमेव स्यात् । ८. एकादशो लुङ् ।

**५. प्र०** *मुमुदे ॥ **म०** मुमुदिषे ॥ **उ०** मुमुदे । मुमुदिवहे ॥ **६.** मोदिता ॥ **७.** मोदिष्यते ॥ **८.** मोदिषीष्ट ॥ **म०** मोदिषीढ्वम् ॥ **९. प्र०** अमोदिष्ट ॥ **म०** अमोदिढ्वम्—अमोदिध्वम् ॥ **उ०** अमोदिषि ॥ **१०.** अमोदिष्यत ॥

**भावे**— मुद्यते ॥ २. मुद्यताम् ॥ ३. अमुद्यत ॥ ४. मुद्येत ॥ ५. मुमुदे ॥ ९. अमोदि । **णिचि**—मोदयति–ते । ५. मोदयाञ्चकार–ञ्चक्रे । **सनि**—मुमुदिषते–मुमोदिषते । ५. मुमुदिषाञ्चक्रे–मुमोदिषाञ्चक्रे–षामास–षाम्बभूव । **यङ्लुकि**—मोमुदीति–मोमोत्ति । **कृत्सु**— मोदितव्यम् । मोदनीयम् । मोद्यम् । मोदितः—मुदितः । मोदमानः । मोदितुम् । मोदनम् । मुदित्वा । मोदित्वा । प्रमुद्य - प्रमोद्य । मुत्=हर्षः । मुदिरः=मेघः । मुद्गः । मुद्रा ॥

[१५] **दद**=दाने । सकर्म० । सेट् । आत्मने०

१. ददते ॥ २. ददताम् ॥ ३. अददत ॥ ४. ददेत ॥ ५. दददे । दददाते । दददिरे । **म०** दददिषे । दददाथे ।

* गोपाङ्गनानां मुमुदे विलोभ्य भट्टिः । (२ । १५) १. **च्विण् भावकर्मणोः । च्विणो लुक्** (पृ० २२) २. **रलोव्युपधाद्धलादेः संश्च** । उकारेकारोपधात् हलादेः रलन्ताद्धातोः परौ क्त्वासनौ सेटौ वा कितौ स्तः । कित्त्वपक्षे लघूपधगुणो न । ३. **उदुपधाद्भावादिकर्मणोरन्यतरस्याम्** । उदुपधात्परा भावादिकर्मणोः सेट् निष्ठा वा किन्न स्यात् । ४. **सम्पदादिभ्यः क्विप्** । इति स्त्रियां क्विप् । ५. **इषिमदिमुदी**—त्यादिना किरच् । ६. **न शसददवादिगुणानाम्** । शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वाभ्यासलोपौ न ।

ददद्ध्वे ॥ उ० दददे । दददिवहे । दददिमहे ॥ इत्यादि **'दधति'** (७) वत् ।

[१६] **ष्वद**=आस्वादने । सकर्म० । सेट् । आत्मने० ।

स्वदते ॥ ५. सस्वदे ॥ ६. स्वदिता ॥ ७. स्वदिष्यते ॥ ८. स्वदिषीष्ट ॥ ९. अस्वदिष्ट ॥ **कर्मणि**—स्वद्यते । **णिचि**—स्वादयति–ते । **सनि**—सिस्वदिषते । **यङि**—सास्वद्यते । **यङ्-लुकि**—सास्वदीति–सास्वत्ति । **कृत्सु**—स्वदितव्यम् । स्वदनीयम् । स्वाद्यम् । स्वदितः । स्वदमानः । स्वदितुम् । स्वदनम् । स्वादः । स्वदित्वा । आस्वाद्य ।

[१७] **उर्द**=माने क्रीडायां च । अकर्मकः । सेट् । आत्मने० ॥

१. ऊर्दते[१] ॥ २. ऊर्दताम् ॥ ३. और्दत[३] ॥ ४. ऊर्देत ॥ ५. ऊर्दाञ्चक्रे[४]–ऊर्दाम्बभूव–ऊर्दामास ॥ इत्यादि ॥ **६.** ऊर्दिता ॥ ७. ऊर्दिष्यते ॥ ८. ऊर्दिषीष्ट । ऊर्दिषीयास्ताम् ॥ **म०** ऊर्दिषीध्वम् ॥ ९. और्दिष्ट[५] । और्दिषाताम् । और्दिषत ॥ **म०** और्दिढ्वम्–ध्वम् ॥ उ० और्दिषि ॥ १०. और्दिष्यत ॥ **कर्मणि**—ऊर्द्यते । ९. और्दि । **णिचि**—ऊर्दयति–ते । ९. और्दिदत्[६]–त ॥

१. **हलादिः शेषः** । २. **उपधायां च** । धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परतः इको दीर्घः स्यात् । इति उकारस्य दीर्घः । ३. आ+ऊर्दत=**आटश्चे**—(२)ति वृद्धिः । ४. इजादेश्च गुरुमत—(पृ० ८) इत्याम् कृभ्वस्त्यनुप्रयोगश्च । यत्र क्वचित् कृभ्वस्तीनां मध्ये कृञ एव रूपं लिख्यते तत्र भ्वस्त्योरपि रूपाणि वाच्यकैरूह्यानि । ५. लुङि एकादशी विधा । ६. उर्द्+णिच्='ऊर्दि' इत्यर्थ

**सनि**—ऊर्दिदिषते। ५. ऊर्दिदिषाञ्चक्रे। अजादित्वाद्यङ्-यङ्लुकौ न। **कृत्सु**—ऊर्दितव्यम्। ऊर्दनीयम्। ऊर्द्यम्। ऊर्दितः। ऊर्दमानः। ऊर्दितुम्। ऊर्दनम्। ऊर्दित्वा। समूर्द्य॥

[१८] **कुर्द**=क्रीडायाम्। अकर्म०। सेट्। आत्मने०।

१. कूर्दते॥ २. कूर्दताम्॥ ३. अकूर्दत॥ ४. कूर्देत॥ ५. **प्र०** चुकूर्दे॥ **म०** चुकूर्दिषे॥ **उ०** चुकूर्दिवहे॥ ६. कूर्दिता॥ ७. कूर्दिष्यते॥ ८. कूर्दिषीष्ट॥ ९. अकूर्दिष्ट॥ १० अकूर्दिष्यत॥ **भावे**—कूर्द्यते। **णिचि**—कूर्दयति-ते॥ **सनि**—चुकूर्दिषते। **यङि**—चोकूर्द्यते। **यङ्लुकि**—चोकूर्दीति-चोकूर्ति। **कृत्सु**—कूर्दितव्यम् इत्यादि।

[१९] **षूद**=क्षरणे। सकर्म०। सेट्। आत्मने॥ अयं हिंसायामपि वर्तते।

१. सूदते॥ २. सूदताम्॥ ३. असूदत॥ ४. ॥ ५. **प्र०** सुषूदे॥ **म०** सुषूदिषे॥ **उ०** सुषूदे। सुषू- ॥ ६. सूदिता॥ ७. सूदिष्यते॥ ८. सूदिषीष्ट॥ ९. असूदिष्ट। **म०** ढ्वम्-ध्वम्॥ १०. असूदिष्यत॥

**सनाद्यन्ता धातवः**। इति धातुसंज्ञः। तस्माल्लुङि, **च्लि लुङि**। इति च्लौ, **णिश्रिद्रु**—(पृ० ११) इति चङि, **चङि**। (पृ० ११) इति द्वित्वे कर्तव्ये **अजादेर्द्वितीयस्य**। इति द्वितीयैकाचः 'र्दि' इति भागस्य द्वित्वे प्राप्ते, **नन्द्राः संयोगादयः**। अचः पराः संयोगादयो नदराः द्विर्न भवन्ति। इति 'दि' इत्यस्यैव द्वित्वे, उर्+दिदि+अत् इति जाते, **णेरनिटि** (पृ०२५) इति णिलोपे, **आडजादीनाम्**। **आटश्च** (२)। 'और्दिदत्'।

१ धात्वादेः षः सः।

**कर्मणि**—सूद्यते । **णिचि**—सूदयति-ते । [१] असूषुदत् । **सनि**—सुसूदिषते[२] । **यङि**—सोसूद्यते । **यङ्लुकि**—सोषूदीति-सोषूत्ति । **कृत्सु**—सूदितव्यम् । सूदनीयम् । सूद्यम् । सूदितः । सूदितुम् । सूदित्वा । निषूद्य । मधुं सूदते हिनस्ति इति=मधुसूदनः । सूदयति क्षारयति रसान् इति सूदः=पाचकः । सूदितुं हिंसितुं शीलमस्याऽस्तीति सूदी ॥

[२०] **ह्राद्**=अव्यक्ते शब्दे । अकर्म० । सेट् । आत्मने० ॥

ह्रादते ॥ जह्रादे ॥ इत्यादि **'गाधति'** (४) वत् ॥ **भावे**—ह्राद्यते । **सनि**—जिह्रादिषते । **णिचि**—ह्रादयति-ते । [१] अजिह्रदत्-त ॥ **यङि**—जाह्राद्यते । **यङ्लुकि**—जाह्रादीति-जाह्रात्ति ॥

**कृत्सु**—ह्रादितव्यम् । ह्रादनीयम् । ह्राद्यम् ।
दमानः । ह्रादितुम् । ह्रादित्वा । प्रह्राद्य । ह्रादः, निर्ह्रादः;=शब्दः । ह्रदः । ह्रादिनी=वज्रम्, तडिद्वा । ह्रादिन्यौ वज्रतडितौ इत्यमरः ॥

[२१] **ह्लादी**=सुखे । अकर्म० । सेट् । आत्मने० ॥ ह्लादते ॥ जह्लादे ॥ इत्यादि **'ह्रादति'** (२०) वत् ॥ **णिचि**—[१] अजिह्लदत् । **निष्ठायाम्**—प्रह्लन्नः[३] । प्रह्लादः । आह्लादः । ह्लादिनी ॥

---

१. **णौ चङ्युपधाया ह्रस्वः** । चङ्परे यदङ्गं तस्योपधाया ह्रस्वः स्यात् । २. **स्तौतिण्योरेव षण्यभ्यासात्** अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य ।

३. **श्वीदितो निष्ठायाम्** । श्वयतेरीदितश्च निष्ठाया इण्न स्यात् । ह्लाद्+त इति स्थिते **ह्लादो निष्ठायाम्** । इति उपधाया ह्रस्वे, ह्लद् त इति जाते, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** । रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य दकारस्य च । इति दतयोर्नकारे, ह्लन्नः ।

[२२] **स्वाद्**=आस्वादने । सकर्म० । सेट् । आत्मने० ॥

१. स्वादते ॥ ५. सस्वादे ॥ इत्यादि '**ह्लादति**'(२१) वत् ॥

[२३] **पर्द**=कुत्सिते शब्दे । गुदरवे इत्यर्थः अकर्म० सेट् आत्मने०

१. पर्दते ॥ २. पर्दताम् ॥ ३. अपर्दत ॥ ४. पर्देत ॥ ५. पपर्दे । पपर्दाते । पपर्दिरे ॥ ६. पर्दिता ॥ ७. पर्दिष्यते ॥ ८. पर्दिषीष्ट ॥ ९. अपर्दिष्ट ॥ १०. अपर्दिष्यत ॥ **भावे**—पर्द्यते । **णिचि**—पर्दयति-ते । **सनि**—पिपर्दिषते । **यङि**—पापर्द्यते । **यङ्लुकि**—पापर्दीति-पापर्ति । **कृत्सु**—पर्दितुम् । पर्दित्वा । प्रपर्द्य । पृदाकुः=सर्पः ॥

[२४] **यती**=प्रयत्ने । अकर्म० । सेट् । आत्मने० ॥

१. यतते ॥ २. यतताम् ॥ ३. अयतत ॥ ४. यतेत ॥ ५. येते[१] । येताते । येतिरे ॥ **म०** येतिषे । येताथे । येतिध्वे ॥ **उ०** येते । येतिवहे । येतिमहे ॥ ६. यतिता ॥ ७. यतिष्यते ॥ ८. यतिषीष्ट ॥ ९. अयतिष्ट ॥ १०. अयतिष्यत ॥

**भावे**-यत्यते । **णिचि**-यातयति-ते । ९. अयीयतत् । **सनि**-यियतिषते । **यङि**-यायत्यते । **यङ्लुकि**-यायतीति-यायत्ति ॥ **कृत्सु**-यतितव्यम् । यतनीयम् । येत्यम्[२] । यत्तः[३] । यत्तवान् । यतमानः । यतनम् । यतितुम् । यतित्वा । प्रयत्य । यत्नः[४] । यतिः[५] । आ,=वशी-

१. **अत एकहल्मध्ये**—(पृ० ८) इति एत्वाभ्यासलोपौ । २. **तकिशसिचतियतिजनिभ्यो यद्वाच्यः** । ३. **श्वीदित**—इति (२१) नेट् । ४. **यजयाजयतविच्छप्रच्छरक्षो नङ्** । ५. **इन् सर्वधातुभ्यः** ।

भवने, आयतते। आयत्तः। प्र=प्रयतते। प्रयतेथा महाराज! (भट्टिः १९। १९.)

[२५] **श्रथि**=शैथिल्ये। शैथिल्यं=विश्लिष्टता अगाढता वा। अकर्म०। सेट्। आत्मने०।

१. श्रन्थते ॥ ५. शश्रन्थे ॥ इत्यादि **'वन्दति'** (९) वत् ॥ **भावे**—श्रन्थ्यते। **णिचि**—श्रन्थयति—ते। **सनि**—शिश्रन्थिषते। **यङि**—शाश्रन्थ्यते। **यङ्लुकि**—शाश्रन्थीति—शाश्रन्ति। इत्यादि ॥

[२६] **कत्थ**=श्लाघायाम्। सकर्म०। सेट्। आत्मने०।

१. कत्थते ॥ २. कत्थताम् ॥ ३. अकत्थत ॥ ४. कत्थेत ॥ ५. प्र० चकत्थे ॥ म० चकत्थिषे ॥ उ० चकत्थे। चकत्थिवहे ॥ ६. कत्थिता ॥ ७. कत्थिष्यते ॥ ८. कत्थिषीष्ट ॥ ९. अकत्थिष्ट ॥ ढ्वम्—ध्वम् ॥ १०. अकत्थिष्यत ॥

**कर्मणि**—कथ्यते। **णिचि**—कत्थयति-ते। **सनि**—चिकत्थिषते। **यङि**—चाकत्थ्यते। **यङ्लुकि**—चाकत्थीति—चाकत्ति। **कृत्सु**—कत्थितव्यम्। कत्थनीयम्। कत्थ्यम्। कत्थितः। कत्थमानः। कत्थितुम्। कत्थनम्। कत्थित्वा। विकत्थ्य। विकत्थी[1]। विकत्थनः[2]।

[२७]**अत**=सातत्यगमने। सकर्म०। सेट्। परस्मै० ॥

१. अतति। अततः। अतन्ति ॥ २. प्र० अततु—अततात्। अतताम्। अतन्तु ॥ म० अत—अततात्। अततम्। अतत ॥ उ० अतानि। अताव। अताम ॥ ३. प्र० आतत्[3]। आतताम्। आतन् ॥ म० आतः। आततम्। आतत ॥ उ० आतम्।

१. **वौ कषलसकत्थस्रंभः**। इति वौ उपपदे तच्छीलादिषु घिणुन्। २ वासरूपविधिना युच्। ३. **आडजादीनाम्**। (२) आ अत त्='आतत्'।

आताव । आताम ॥ ४. **प्र०** अतेत् । अतेताम् । अतेयुः ॥ **म०** अतेः । अतेतम् । अतेत ॥ **उ०** अतेयम् । अतेव । अतेम ॥ ५. **प्र०** आत[1] । आततुः । आतुः ॥ **म०** आतिथ । आतथुः । आत ॥ **उ०** आत । आतिव । आतिम ॥ ६. **प्र०** अतिता । **म०** अतितासि ॥ **उ०** अतितास्मि ॥ ७. अतिष्यति ॥ ८. अत्यात् । अत्यास्ताम् । अत्यासुः ॥ ९. आतीत्[2] । आतिष्टाम् । आतिषुः ॥ **म०** आतीः । आतिष्टम् । आतिष्ट ॥ **उ०** आतिषम् । आतिष्व । आतिष्म ॥ १०. आतिष्यत् ॥

**कर्मणि**—अत्यते । २. अत्यताम् । ३. आत्यत । ४. अत्येत । ५. आते । आताते । आतिरे । ६. अतिता । अतितासे ॥ ७. अतिष्यते । ८. अतिषीष्ट । ९. आति[3] । आतिषाताम् । आतिषत ॥ १०. आतिष्यत । **णिचि**—आतयति[4] ग्रामं देवदत्तम् । ५. आतयाञ्चकार । ९. आतितत् ॥ **सनि**—अतितिषति । ५. अतितिषाञ्चकार । ९. आतितिषीत् । अजादित्वाद्यङ्-यङ्लुकौ न । व्यति[5]+अतति= व्यत्यतति । **कृत्सु**-आतितव्यम् । अतनीयम् । अत्यम् । अतितः । अतन् । अतन्ती । अतिष्यन् । अतिष्यन्ती-अतिष्यती । अतित्वा । अन्वत्य । अतितुम् । अतिथिः । पादाभ्यामततीति-पदातिः ।

१. लिटि णलि द्वित्वे अत् अत्=अ अत्=इति जाते, **अत आदे** (पृ० ७) अ अत् अ=सवर्णदीर्घे 'आत' इति रूपम् ।

२. लुङि सिचि, सिच इडागमे, तिपोऽपृक्तस्य **अस्तिसिचोऽपृक्ते** । विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात् । इति ईटि, **आडजादीना**-(२)मित्याडागमे, आतिस् ईत् इति जाते, **इट ईटि** । इटः परस्य सस्य लोपः स्यादीटि परे । इति सलोपे 'आतीत्' । सप्तमोऽयं लुङ् । ३ **चिण् भावकर्मणोः** । **चिणो लुक्** । (पृ० २२) ४. **निगरणचलनार्थेभ्यश्च** (१२) । इति परस्मैपदमेव । ५ गत्यर्थत्वात् **न गतिहिंसार्थेभ्यः** । इति कर्मव्यतिहारे न आत्मनेपदम् ।

[२८] **चिती**=संज्ञाने। अकर्म०। सेट्। परस्मै० ॥

१. चेतति ॥ २. चेततु ॥ ३. अचेतत् ॥ ४. चेतेत् ॥ ५. **प्र०** चिचेत। चिचिततु। चिचितुः ॥ **म०** चिचेतिथ। चिचितथुः। चिचित ॥ **उ०** चिचेत। चिचितिव। चिचितिम ॥ ६. **प्र०** चेतिता ॥ **म०** चेतितासि ॥ **उ०** चेतितास्मि ॥ ७. चेतिष्यति ॥ ८. चित्यात्। चित्यास्ताम्। चित्यासुः ॥ ९. **प्र०** [1]अचेतीत्। अचेतिष्टाम्। *अचेतिषु। **म०** अचेतीः। अचेतिष्टम्। अचेतिष्ट ॥ **उ०** अचेतिषम्। अचेतिष्व। अचेतिष्म ॥ १०. अचेतिष्यत् ॥

**भावे**-चित्यते। ५. चिचेते। ९. अचेति। **णिचि**-चेतयति[2]। ५. चेतयाञ्चकार-चक्रे। ९. अचीचितत्[3]-त। **सनि**-चिचितिषति[4]-चिचेतिषति। **यङि**-चेचित्यते। **यङ्लुकि**-चेचितीति-चेचेत्ति। **कृत्सु**--चेतितव्यम्। चेतनीयम्। चेत्यम्। चित्तः[5]। चित्तवान्। चितित्वा[6]--चेतित्वा। विचित्य। चेतितुम्। चेतन्। चेतन्ती। चेतनः[7]। चित्[8]। चेतः[9]। चित्तम्।

[२९] **च्युतिर्**=आसेचने। आसेचनमार्द्रीकरणम्। सकर्म०। सेट् परस्मै०।

१. लुङि सप्तमी विधा। * एवं तेऽचेतिषुः सर्वे (भट्टिः १५। १०९)
२. **अणावकर्मकाच्चित्तवत्कर्तृकात्**। अणौ यो धातुरकर्मकः चित्तवत्कर्तृकश्च तस्मात् ण्यन्तात्परस्मैपदमेव भवति। ३. **णिश्रिद्रुस्रु**-(पृ० ११) इति चङ्। तृतीयो लुङ्। ४ **रलोव्युपधात्**। (१४) इति कित्वविकल्पः। ५. **श्वीदितो निष्ठायाम्** (२१)। इत्यनिट्। ६. **रलो व्युपधात्**—(१४) ७ बाहुलकात्कर्तरि ल्युट्। ८ सम्पदादित्वाद्भावे क्विप् ९. **असुन्**।

१. च्योतति ॥ २. च्योततु ॥ ३. अच्योतत् ॥ ४. च्योतेत् ॥ ५. प्र० चुच्योत । चुच्युततुः । चुच्युतुः । म० चुच्योतिथ । चुच्युतथुः । चुच्युत ॥ उ० चुच्योत ॥ चुच्युतिव । चुच्युतिम ॥ ६. च्योतिता ॥ ७. च्योतिष्यति ॥ ८. च्युत्यात् । चुत्यास्ताम् ॥ ९. अच्योतीत्[1] । अच्योतिष्टाम् । अच्योतिषुः ॥ इत्यादि ॥ अङ्पक्षे[2] तु–अच्युतत् । अच्युतताम् । अच्युतन् ॥ म० अच्युतः । अच्युततम् । अच्युतत ॥ उ० अच्युतम् । अच्युताव । अच्युताम ॥ १०. अच्योतिष्यत् ॥

**कर्मणि**–च्युत्यते । चुच्युते । **णिचि**–च्योतयति–ते । **सनि**–चुच्युतिषति[3]–चुच्योतिषति । **यङि**–चोच्युत्यते । **यङ्लुङि** चोच्युतीति–चोच्योत्ति । **कृत्सु**–च्योतितव्यः । च्योतनीयः । च्युतितः । च्योतन् । च्योतन्ती । च्युतितम्[4]–च्योतितम् जलेन । च्योतित्वा–च्युतित्वा । विच्युत्य । च्योतितुम् ।

[३०] **श्च्युतिर्**=क्षरणे । सकर्म० । सेट् । परस्मै० । श्च्योतति ॥ चुश्च्योत[5] । इत्यादि सर्वं **'च्योतति'** (२९) वत् ॥

[३१] **मन्थ**=विलोडने । सकर्म० । सेट् । परस्मै० ।

---

१. सप्तमो लुङ् । इदं कवचमच्योतीत् (भट्टिः ६ । २९) । २ **इरितो वा** (पृ० ११) इत्यङ् वा । द्वितीयो लुङ् । इदं शोणितमभ्यग्रं सम्प्रहारेऽच्युतत्तयोः (भट्टिः ६. । २८) । ३. **रलोव्युपधात्** (१४)—इति कित्त्व-विकल्पाद्गुणविकल्पः । ४ **उदुपधाद्भावादिकर्मणोरन्यतरस्याम्** । (१४) ५. **शर्पूर्वाः खयः** (पृ० ७)

१. मन्थति । २. मन्थतु । ३. अमन्थत् । ४. मन्थेत् । ५. ममन्थ । ममन्थतुः ॥ **म०** ममन्थिथ ॥ **उ०** ममन्थिव ॥ ६. मन्थिता । ७. मन्थिष्यति । ८. मथ्यात्[1] । मथ्यास्ताम् ॥ ९. अमन्थीत्[2] । १०. अमन्थिष्यत् ॥ **कर्मणि**—मथ्यते[3] । ६. मन्थिता । ९. अमन्थि । **णिचि**—मन्थयति–ते । **सनि**—मिमन्थिषति । **यङि**—मामथ्यते । **यङ्लुकि**—मामन्थीति–मामन्ति । **कृत्सु**—मन्थितव्यः । मथितः । मन्थन् । मथित्वा[4]–मन्थित्वा । विमथ्य । मन्थितुम् । मन्थानः ।

[३२] **कुथि**=हिंसासंक्लेशनयोः । सकर्म० । सेट् । परस्मै० ।
१. कुन्थति ॥ ५. चुकुन्थ ॥ ८. कुन्थ्यात् ॥ ९. अकुन्थीत् ॥ इत्यादि **'मन्थति'** (३१) वत् । **कर्मणि**—कुन्थ्यते । **णिचि**—कुन्थयति–ते । **सनि**—चुकुन्थिषति । **यङि**—चोकुन्थ्यते । **यङ्लुकि**—चोकुन्थीति–चोकुन्ति । **कृत्सु**—कुन्थितव्यः इत्यादि ।

[३३] **पुथि**=हिंसासंक्लेशनयोः । सकर्म० । सेट् । परस्मै० । सर्वं **"कुन्थति'** (३२) वत् ।

[३४] **षिधु**=गत्याम् । सकर्म० । सेट् । परस्मै० ।

१. सेधति ॥ २. सेधतु ॥ ३. असेधत् ॥ ४. सेधेत् ॥ ५. **प्र०** सिषेध[5] । सिषिधतुः । सिषिधुः ॥ **म०** सिषेधिथ । सिषिधथुः ।

---

१. **अनिदितां हल उपधायाः क्ङिति** । हलन्तानामनिदितामङ्गाना-मुपधाया नस्य लोपः स्यात्किति ङिति च प्रत्यये परे । २. सप्तमो लुङ् । ३. **अनिदिताम्**—(३१) ४. **नोपधात्थफान्ताद्वा** । सेट् क्त्वा वा किन्न स्यात् । कित्त्वपक्षे **अनिदिता**—(३१)मिति न लोपः ।

५. इदित्वान्नलोपो न । ६. **लिटि धातोः**—(पृ० ७) इति द्वित्वम् । सिध् सिध्, हलादिशेषे सिसिध् । आदेशसकारत्वा (पृ० ७) त्षत्वे लघूपधगुणे

सिषिध ॥ उ० सिषेध । सिषिधिव । सिषिधिम ॥ ६. सेधिता ॥ ७. सेधिष्यति ॥ ८. सिध्यात् । सिध्यास्ताम् । सिध्यासुः ॥ ९. असेधीत् । असेधिष्टाम् । असेधिषुः ॥ १०. असेधिष्यत् ॥

**कर्मणि**—सिध्यते । ५. सिषिधे । ९. असेधि । **णिचि**—सेधयति-ते । ९. असीषिधत् । **सनि**—सिसिधिषति-सिसेधिषति ॥ सिसिधिषाञ्चकार । ९. असिसिधिषीत् । **यङि**—सेषिध्यते । ५. सेषिधाञ्चक्रे । ९. असेधिषिष्ट । **यङ्लुकि**—सेषिधीति-सेषेद्धि । **कृत्सु**—सेधितव्यम् । सेधनीयम् । सेध्यम् । सिधितः । सिद्धः । सिद्धवान् । सेधन् । सिधित्वा-सेधित्वा । सिद्ध्वा । सेधितुम् । निषेधति प्रतिषेधति=निवारयतीत्यर्थः । आसेधति=निरुणद्धि । उत्सेधति=उन्नयति । अपसेधति=अपनुदति ॥

[३५] **षिधू**=शास्त्रे माङ्गल्ये च । शास्त्रं=शासनम् । माङ्गल्यम्=मङ्गल-क्रिया । सकर्म० । वेट् । परस्मै० ॥

१. सेधति ॥ २. सेधतु ॥ ३. असेधत् ॥ ४. सेधेत् ॥ ५. प्र० सिषेध । सिषिधतुः । सिषिधुः ॥ म० सिषेधिथ-सिषेद्ध ।

'सिषेध'। १. सप्तमो लुङ्। २. **दीर्घो लघोः** (पृ० २५) ३. **रलो व्युपधात्** – (१४) इति कित्त्वविकल्पः । कित्वपक्षे—**क्ङिति च** (पृ० ४) इति गुणनिषेधः। अकित्त्वपक्षे लघूपधगुणः। ४. **नित्यं कौटिल्ये गतौ**। ५. 'षिध' इत्यकारेत्त्वपक्षे रूपम्। ६. 'षिधु' इति उदित्त्वपक्षे—**यस्य विभाषा**। यस्य क्वचिद्विभाषयेड्विहितः ततो निष्ठाया इण्न स्यात्। ७. **उदितो वा**। उदितः परस्य क्त्वः इड्वा स्यात्। ८. भूतगणान्न्यषेधीत् (भट्टिः- १ । १५) । ९. **स्वरतिसूतिसूयतिधूञूदितो वा**। स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् ।

सिषिधथुः । सिषिध ॥ उ० सिषेध । सिषिधिव--सिषिध्व । सिषिधिम--सिषिध्म ॥ ६. सेधिता--सेद्धा ॥ ७. सेधिष्यति--सेत्स्यति ॥ ८. सिध्यात् । सिध्यास्ताम् ॥ ९. असेधीत्[1] । असेधिष्टाम् । असेधिषुः ॥ **पक्षे**-असैत्सीत्[2]। असैद्धाम्[3]। असैत्सुः ॥ १०. असेधिष्यत्--असेत्स्यत् ॥ **कर्मणि**—सिध्यते ॥ ५. सिषिधिषे-सिषित्से । ९. असेधि । असेधिषाताम्-असित्साताम् । असेधिषत-असित्सत ॥ **म०** असेधिढ्वम्-ध्वम्--असेद्ध्वम् ॥ **णिचि**—सेधयति--ते । ९. असीषिधत्--त ॥ **कृत्सु**—सिद्धः[4] । सिद्धवान् । सेधितुम् । सेद्धुम् । सिधित्वा -सेधित्वा[5]—सिद्ध्वा । निषिध्य--निषेध्य ।

[३६[ **खादृ**=भक्षणे । सकर्म० । सेट् । परस्मै० ।

१. खादति ॥ २. खादतु ॥ ३. अखादत् ॥ ४. खादेत् ॥ ५. **प्र०** चखाद[6] । चखादतुः । चखादुः ॥ **म०** चखादिथ । चखादथुः । चखाद ॥ **उ०** चखाद । चखादिव । चखादिम ॥ ६. खादिता ॥ ७. खादिष्यति ॥ ८. खाद्यात् । खाद्यास्ताम् ॥ ९. अखादीत्[7] । अखादिष्टाम् ॥ १०. अखादिष्यत् ॥

**कर्मणि**—खाद्यते । **णिचि**—खादयति[8] । ९. अचखादत्[9] । **सनि**—चिखादिषति । **यङि**—चाखाद्यते । **यङ्लुकि**—चाखादीति-

---

१. सप्तमो लुङ् । २. षष्ठो लुङ् । ३. असैध्+(सिच्) स्+ताम् इति स्थिते **झलो झलि** । झलः परस्य सस्य लोपः स्याज्झलि । इति सलोपे=असैध् ताम्=धत्वे जश्त्वे च रूपम् । ४. **यस्य विभाषा** (३४) । ५ **स्वरतिसूति**(३५) ति वेट् । ६. **कुहोश्चुः**—(पृ० ७) । ७. सप्तमो लुङ् । ८ **निगरणचलनार्थेभ्यश्च** (१२) इति णौ परस्मैपदमेव । ९. **नाग्लोपिशास्वृदिताम्** । णिच्यग्लोपिनः शास्तेः ऋदितां च उपधाया ह्रस्वो न स्यात् चङ्परे णौ इति ह्रस्वो न ।

चाखाद्ति। **कृत्सु**—खादितव्यः। खादनीयः। खाद्यः। खादितः। खादन्। खादन्ती। खादित्वा। सङ्खाद्य। खादितुम्। खादकः।

[३७] **गद**=व्यक्तायां वाचि। सकर्म०। सेट्। परस्मै०।

१. गदति॥ २. गदतु॥ ३. अगदत्॥ ४. गदेत्॥ ५. **प्र०** जगाद[१]। जगदतुः। जगदुः। **म०** जगदिथ। जगदथुः। जगद[२]॥ **उ०** जगाद[३]—जगद। जगदिव। जगदिम॥ ६. गदिता॥ ७. गदिष्यति॥ ८. गद्यात्। गद्यास्ताम्॥ ९. अगादीत्[४]। अगादिष्टाम्। अगादिषुः॥ **पक्षे**—अगदीत्[५]॥ अगदिष्टाम्। अगदिषुः॥ १०. अगदिष्यत्॥ प्रणिगदति[६]॥

**कर्मणि**—गद्यते। ५. जगदे। ८. गदिषीष्ट। ९. अगादि॥ **णिचि**—गादयति–ते। ९. अजीगदत्–त। **सनि**—जिगदिषति। ९. अजिगदिषीत्। **यङि**—जागद्यते। ५. जागदाञ्चक्रे। **यङ्लुकि**—जागदीति—जागत्ति। **कृत्सु**—गदितव्यः। गदनीयः। गद्यं[७]। प्रगाद्यम्। गदितः। गदी। गदन्। गदन्ती गदितुम्। गदित्वा। निगद्य। निगदः। निगादः॥

१. **अत उपधायाः** (पृ० ७) इति वृद्धिः। आदेशादित्वादेत्वाभ्यासलोपौ न। २. अपित्सार्वधातुकत्वान्न वृद्धिः। ३. **णलुत्तमो वा** (पृ० ८) इति णित्त्वविकल्पात् णित्त्वपक्षे वृद्धिः। अन्यदा न। ४. **वदव्रजे**—(पृ० १२) ति हलन्तलक्षणा वृद्धिः। ५. **अतो हलादेर्लघोः**। हलादेर्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात्। पौलस्त्यं चागदीत्कश्चित् (भट्टिः १५।१०२)। ६. **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च**। उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णः स्याद्गदादिषु। ७. **गदमदचरयमश्चानुपसर्गे**। एभ्योऽनुपसर्गेभ्यो यत्। गद्यमेतत्त्वया मम (भट्टिः ६।४७)।

[३८] **रद्**=विलेखने । विलेखनम्=भेदनम् । सकर्म० । सेट् । परस्मै० ॥

१. रदति ॥ ५. **प्र०** रराद । रेदतुः[1] । रेदुः ॥ **म०** रेदिथ[2] । रेदथुः । रेद ॥ **उ०** रराद–ररद । रेदिव । रेदिम ॥ अन्यत्सर्वं '**गदति**' (३७) वत् । रदनः[3]=दन्तः ॥

[३९] **णद्**=अव्यक्ते शब्दे । अकर्म० । सेट् । परस्मै० ॥

१. नदति[4] ॥ २. नदतु ॥ ३. अनदत् ॥ ४. नदेत् ॥ ५. ननाद । नेदतुः । इत्यादि '**रदति**' (३८) वत् । नदी । नादः । प्रणदति[5] । परिणदति । निर्णदति । अन्तर्णदति ॥

[४०] **अर्द्**=गतौ याचने च । * अयं हिंसायामपि । सकर्म० । सेट् । परस्मै० ॥

१. अर्दति ॥ २. अर्दतु ॥ ३. आर्दत् ॥ ४. अर्देत् ॥ ५. **प्र०** आनर्द[6] । आनर्दतुः । आनर्दुः ॥ **म०** आनर्दिथ । आनर्दथुः । आनर्द ॥ **उ०** आनर्द । आनर्दिव । आनर्दिम ॥ ६. अर्दिता ॥ ७. अर्दिष्यति ॥ ८. अर्द्यात् । अर्द्यास्ताम् ॥ ९. आर्दीत्[7] । आर्दिष्टाम् ॥ १०. आर्दिष्यत् ॥ **कर्मणि**—अर्द्यते ।

१. **अत एकहल्मध्य**–(पृ० ८) इत्येत्वाभ्यासलोपौ । २. **थलि च सेटि** (पृ० ८) ३ **करणाधिकरणयोश्च** । इति ल्युट् । ४ **णो नः** । धातोरादेर्नस्य णः स्यात् । ५ **उपसर्गादसमासेऽपि णोपदेशस्य** । उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात् । * रक्षस्सहस्राणि चतुर्दशार्दीत् (**भट्टिः** १२. । ५३) । ६. अर्द्+अ इति स्थिते, द्वित्वे हलादिशेषे अ अर्द्+अ इति जाते **अत आदेः** । (पृ० ७) इति अभ्यासाकारस्य दीर्घे आ अर्द्+अ इति भवति । ततः **तस्मान्नुड् द्विहलः** । द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् इति आन्+अर्द+अ=आनर्द । ७. सप्तमो लुङ् ।

**णिचि**—अर्दयति-ते । **सनि**—अर्दिदिषति । अजादित्वाद्यङ्यङ्लुकौ न स्तः । **कृत्सु**—अर्दितः । समर्णः । न्यर्णः । न्यर्ण=गतः प्रार्थितो वा । अभ्यर्णः=निकटम् । अर्दितुम् । अर्दित्वा । प्रार्द्य । अभिपूर्वः समीपप्राप्तौ । अभ्यर्दति ॥

[४१] **नर्द**—शब्दे । अकर्म० । सेट् । परस्मै० ॥

१. नर्दति ॥ २ नर्दतु ॥ ३. अनर्दत् ॥ ४. नर्देत् ॥ ५. प्र० ननर्द । ननर्दतुः । ननर्दुः ॥ ६. नर्दिता ॥ ७. नर्दिष्यति ॥ ८. नर्द्यात् ॥ नर्द्यास्ताम् ॥ ९. अनर्दीत् ॥ प्र--नर्दति=प्रनर्दति । णोपदेशत्वाभावान्न णत्वम् । **कर्मणि**—नर्द्यते । **णिचि**---नर्दयति—ते । **सनि**—निनर्दिषति । **यङि**—नानर्द्यते। **यङ्लुकि**—नानर्दीति–नानर्ति । **कृत्सु**—नर्दितः । नर्दित्वा । विनर्द्य । नर्दितुम् । गेहेनर्दी ॥

[४२] **गर्द=शब्दे** । अकर्म० । सेट् । परस्मै० ॥ **'नर्दति'** (४१) **वत्** । जगर्द ॥ गर्दभः ॥

[४३] **तर्द**=हिंसायाम् । सकर्म० । सेट् । परस्मै० ॥ सर्वं **'नर्दति'** (४१) वत् ॥

[४४] **कर्द**=कौक्षे शब्दे । अकर्म० । सेट् । परस्मै० ॥ कर्दति ॥ चकर्द ॥ इत्यादि **'नर्दति'** (४१) वत् । कर्दमः ॥

[४५] **अति**=बन्धने । सकर्म० । सेट् । परस्मै० ॥

१. अन्तति ॥ २. अन्ततु ॥ ३. आन्तत् ॥ ४. अन्तेत् ॥ ५. आनन्त । आनन्ततुः । आनन्तुः ॥ इत्यादि **'अर्दति'** (४०) वत् । अन्तः । अन्तिमम् । अन्तिकम् ।

१. **अर्देः संनिविभ्यः । अभेश्चाविदूर्ये** । एतत्पूर्वादर्देर्निष्ठाया इण्न स्यात् । **रदाभ्या**—(२१) मिति णत्वम् । २. सप्तमो लुङ् । ३. **तस्मान्नुड्द्विहलः** (पृ० ८) ।

[४६] **इदि**=परमैश्वर्ये । अकर्म० । सेट् । परस्मै० ।

१. इन्दति ॥ २. इन्दतु ॥ ३. ऐन्दत्[1] ॥ ४. इन्देत् ॥ ५. इन्दाञ्चकार[2] ॥ ६. इन्दिता ॥ ७. इन्दिष्यति ॥ ८. इन्द्यात् । इन्द्यास्ताम् ॥ ९. ऐन्दीत्[3] ॥ १०. ऐन्दिष्यत् ॥ **भावे**-इन्द्यते । **णिचि**—इन्दयति—ते । ९. ऐन्दिदत् । **सनि**—इन्दिदिषति । **कृत्सु**—इन्दित्वा । समिन्द्य । इन्दितुम् । इन्दन् । इन्द्रः । इन्दिरा ॥

[४७] **णिदि**=कुत्सायाम् । सकर्म० । सेट् । परस्मै० ।

१. निन्दति ॥ ५. निनिन्द ॥ ६. निन्दिता ॥ ९. अनिन्दीत् ॥ इत्यादि '**कुन्थति**' (३२) वत् । प्रणिन्दति[5] । निन्दकः । निन्दा[6] ॥

[४८] **टु नदि**=समृद्धौ । अकर्म० । सेट् । परस्मै० ॥

१. नन्दति ॥ ५. ननन्द ॥ इत्यादि '**कुन्थति**' (३२) वत् । प्रनन्दति[7] । अभिनन्दति=संवर्धयति, तुष्यति वा । नदः । नदी । नन्दनः । ननान्दा । आनन्दथुः=आनन्दः ॥

[४९] **चदि**=आह्लादने दीप्तौ च । सकर्म० । सेट् । परस्मै० ।

१. चन्दति ॥ चचन्द ॥ इत्यादि ''**कुन्थति**' (३२) वत् । चन्द्रः । चन्दिरः[8] । चान्द्रिका । चन्दनम् ॥

१ आ+इन्द्+अ+अत् इत्यत्र **आटश्च** । (२) ति वृद्धौ **अतो-गुणे**—(पृ० १८)इति पररूपे रूपम् । २. **संयोगे गुरु** । इति इकारस्य गुरुत्वात् **इजादेश्च गुरुमत**—(पृ० ८) इत्याम् । ३. सप्तमो लुङ् । ४. तृतीयो लुङ् । ५. **उपसर्गादसमासेऽपि**—(३९) इति णत्वम् । ६. **गुरोश्च हलः** (३) इति अकारप्रत्ययः । ७ णोपदेशत्वाभावान्न णः । ८. मुकुन्दमुखचन्दिरे चिरमिदं चकोरायताम् । इति भामिनीविलासे जगन्नाथः ।

[५०] **क्रदि्**=आह्वाने रोदने च । आह्वाने सकर्म० । रोदने त्वकर्म० । सेट् । परस्मैपदी ॥

१. क्रन्दति ॥ २. क्रन्दतु ॥ ३. अक्रन्दत् ॥ ४. क्रन्देत् ॥ ५. चक्रन्द[1] ॥ ६. क्रन्दिता ॥ ७. क्रन्दिष्यति ॥ ८. क्रन्द्यात् । क्रन्द्यास्ताम् ॥ ९. अक्रन्दीत्[2] ॥ १०. अक्रन्दिष्यत् ॥ **कर्मणि**—क्रन्द्यते । ५. चक्रन्दे । ९. अक्रन्दि । **णिचि**—क्रन्दयति–ते । ५. क्रन्दयाञ्चकार । ९. अचक्रन्दत् । **सनि**—चिक्रन्दिषति । ९. अचिक्रन्दिषीत् । **यङि**—चाक्रन्द्यते । **यङ्लुकि**—चाक्रन्दीति–चाक्रन्ति । **कृत्सु**—क्रन्दितव्यः । क्रन्दनीयः । क्रन्द्यः । क्रन्दितः । क्रन्दन् । क्रन्दितुम् । क्रन्दनम् । सक्रन्दनः=इन्द्रः । क्रन्दित्वा । आक्रन्द्य ॥

[५१] **क्लिदि्**=परिदेवने । सकर्म० । सेट् । परस्मै० ।

१. क्लिन्दति ॥ ५. चिक्लिन्द ॥ ९. अक्लिन्दीत् ॥ इत्यादि '**क्रन्दति**' (५०) वत् । आत्मनेपदे (१३) ॥

[५२] **शुन्ध**=शुद्धौ[4] । अकर्म० । सेट् । परस्मै० ॥

शुन्धति ॥ ५. शुशुन्ध ॥ ८. शुध्यात्[3] । शुध्यास्ताम् ॥ शुधितः[5] । शुधित्वा । इत्यादि वक्ष्यमाण '**कुञ्चति**' (७७)वत् ।

[५३] **लोकृ**=दर्शने । सकर्म० । सेट् । आत्मने० ।

१. लोकते ॥ २. लोकताम् ॥ ३. अलोकत ॥ ४. लोकेत ॥ ५. लुलोके । लुलोकाते । ६. लोकिता ॥ ७. लोकिष्यते ॥ ८. लोकि-

---

१ चक्रन्द विग्ना कुररीव भूयः । इति रघुवंशे । २. सप्तमो लुङ् । ततोऽक्रन्दीद्दशग्रीवः (भट्टिः १५ । ९४) ३. **अनिदिता**—(३१) मिति नलोपः । ४. शुद्ध इति तु दैवादिकस्य । ५ **पञ्च ह्रस्वादेशो** (पृ० ७) ।

षीष्ट ॥ ध्वम् ॥ ९. अलोकिष्ट । १०. अलोकिष्यत ॥ **कर्मणि**—लोक्यते । **णिचि**—लोकयति—ते । ९. अलुलोकत्—त । **सनि**—लुलोकिषते । **यङि**—लोलोक्यते । **यङ्लुकि**—लोलोकीति—लोलोक्ति ॥ **कृत्सु**—लोकितव्यम् । लोकनीयम् । लोक्यम् । लोकमानः । लोकनम् । लोकित्वा । आलोक्य । लोकितुम् । लोकः । आलोकः ॥

[५४] **श्लोकृ**=संघाते । संघातो ग्रन्थः । स च ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मकः । द्वितीये सकर्मकः । सेट् । आत्मने० ॥

श्लोकते ॥ शुश्लोके । इत्यादि **'लोकति'** (५३) वत् । उपश्लोकयति=श्लोकैरुपस्तौति-इत्यर्थः ॥

[५५] **शकि**=शङ्कायाम् । अकर्म० । सेट् । आत्मने० ॥

१. शङ्कते ॥ ५. शशङ्के । शशङ्काते । शशङ्किरे[1] ॥ इत्यादि **'वन्दति'** (९) वत् ॥ **कर्मणि**—शङ्क्यते । **णिचि**—शङ्कयति—ते । **सनि**—शिशङ्किषते । **यङि**—शाशङ्क्यते । **यङ्लुकि**—शाशङ्कीति—शाशङ्क्ति । शङ्का । शङ्कुला । शङ्कुः ॥

[५६] **अकि**=लक्षणे । सकर्म० । सेट् । आत्मने० ॥

१. अङ्कते ॥ ५. आनङ्के[2] । आनङ्काते । आनङ्किरे ॥ ६. अङ्किता ॥ ७. अङ्किष्यते ॥ ८. अङ्किषीष्ट ॥ ध्वम् ॥ ९. आङ्किष्ट ॥ ढ्वम्—ध्वम् ॥ १०. आङ्किष्यत ॥ **कर्मणि**—अङ्क्यते । **णिचि**—अङ्कयति—ते । **सनि**—अञ्चिकिषते[3] । **कृत्सु**—अङ्कितव्यम् । अङ्कनी-

---

१. अङ्क्षे केऽपि शशङ्किरे । २. **तस्मान्नुड् द्विहलः** । (पृ० ८) ३. **नन्द्रा** (१७) इति निषेधात् कादेद्विर्वचनम् । **कुहोश्चुः** । (पृ० ७)

यम् । प्राङ्कनम्[1] । अङ्क्यम् । अङ्कितः । अङ्कमानः । अङ्कित्वा । प्राङ्क्य । अङ्कितुम् । अङ्कः । अङ्कुरः[2] ॥

[५७] **चक**=तृप्तौ प्रतिघाते च । अकर्म० । सेट् । आत्मने० ॥

१. चकते ॥ २. चकताम् ॥ ३. अचकत ॥ ४. चकेत ॥ ५. चेके । चेकाते । चेकिरे ॥ ६. चकिता ॥ ७. चकिष्यते ॥ ८. चकिषीष्ट ॥ म० ध्वम् ॥ ९. अचकिष्ठ ॥ म० ढ्वम्–ध्वम् ॥ १०. अचकिष्यत ॥ **भावे**—चक्यते । **णिचि**—चकयति[3] । **सनि**—चिचकिषति । **यङि**—चाचक्यते । **यङ्लुकि**—चाचकीति–चाचक्ति । **कृत्सु**—चकितव्यम् । चकनीयम् । चाक्यम् । चकितः । चकमानः । चकित्वा । प्रचक्य । चकितुम् । चकोरः[4] ॥

[५८] **लघि**=गतौ[5] । भोजननिवृत्तौ[6] च । अकर्म० । सेट् । परस्मै० ॥

१. लङ्घते ॥ ५. ललङ्घे ॥ ६. लङ्घिता ॥ इत्यादि **'वन्दति'** (९) वत् । लङ्घनम् ॥

[५९] **लाघृ**=सामर्थ्ये । अकर्म० । सेट् । आत्मने० ॥

१. लाघते ॥ ५. ललाघे । इत्यादि **'गाधति'** (४) वत् ॥

[६०] **श्लाघृ**=कत्थने । सकर्म० । सेट् । आत्मने० ॥ श्लाघते ॥ शश्लाघे ॥ इत्यादि **'गाधति'** (४) वत् ॥

१. "प्राङ्कनम्" इत्यत्र, **"कृत्यच"** इति णत्वस्य, **"इजादेस्सनुम"** इति नियमादप्राप्तिः ॥ २. **मन्दिवाशिमदि**—इत्यादिना उरच् । ३. घटादित्वान्मित्त्वं तस्माद्ध्रस्वः । ४. **कठिचकिभ्यामोरच्** । इत्योरच् । ५ लिलङ्घयिषुरर्णवम् । (वाल्मीकिः) । अन्ये त्वलङ्घिषुः शैलान् । (भट्टिः १५ । ३२) । ६. लङ्घनं परमौषधम् । (वैद्यकम् ) ॥

[६१] फक्क=नीचैर्गतौ । नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च । अकर्म० । सेट् । परस्मै० ॥

१. फक्कति ॥ २. फक्कतु ॥ ३. अफक्कत् ॥ ४. फक्केत् ॥ ५. पफक्क । पफक्कतुः । पफक्कुः ॥ ६. फक्किता ॥ ७. फक्किष्यति ॥ ८. फक्क्यात् ॥ ९. अफक्कीत् ॥ १०. अफक्किष्यत् ॥ इत्यादि **'नर्दति'** (४१) वत् । **सनि**—पिफक्किषति । **यङि**—पाफक्यते । **यङ्लुकि**—पाफक्कीति, पाफक्ति ॥

[६२] **तकि**=कृच्छ्रजीवने । अकर्म० । सेट् । परस्मै० ॥

१. तङ्कति ॥ ५. ततङ्क । ततङ्कतुः ॥ इत्यादि **'वन्दति'** (९) वत् । आतङ्कः ॥

[६३] **बुक्क**=भषणे । भषणं श्वरवः । अकर्म० । सेट् । परस्मै० ॥ **'फक्कति'** (६१) वत् ॥

[६४] **शाखृ**=व्याप्तौ । सकर्म० । सेट् । परस्मै० ॥

१. शाखति ॥ २. शाखतु ॥ ३. अशाखत् ॥ ४. शाखेत् ॥ ५. शशाख । शशाखतुः । शशाखुः ॥ ६. शाखिता ॥ ७. शाखिष्यति ॥ ८. शाख्यात् । शाख्यास्ताम् ॥ ९. अशाखीत् ॥ १०. अशाखिष्यत् ॥ शाखा[1] । शाखा अस्य सन्तीति शाखी ।

[६५] **उख**=गतौ । सकर्म० सेट् । परस्मै० ॥

---

१. **गुरोश्च हलः (३)** । इत्यकारप्रत्ययः ।

१. ओखति ॥ २. ओखतु ॥ ३. औखत् ॥ ४. ओखेत् ॥ ५. प्र० उवोख । ऊखतुः । ऊखुः ॥ म० उवोखिथ । ऊखथुः । ऊख ॥ उ० उवोख । ऊखिव । ऊखिम ॥ ६. ओखिता । ७. ओखिष्यति । ८. उख्यात् । उख्यास्ताम् ॥ ९. औखीत् ॥ १०. औखिष्यत् ॥

**कर्मणि**--उख्यते । ५. ऊखे । ऊखाते । ९. औखि । औखिषाताम् । **णिचि**--ओखयति-ते । ९. औचिखत् । **सनि**—ओचिखिषति । ३. औचिखिषत् । ९. औचिखिषीत् ॥ **कृत्सु**--ओखितव्यम् । ओखनीयम् । ओख्यम् । उखितः । ओखन् । ओखितुम् । ओखित्वा । प्रोख्य ॥

[६६] **उखि**=गतौ । सकर्म० । सेट् । परस्मै० ॥

१. उङ्खति ॥ २. उङ्खतु ॥ ३. औङ्खत् ॥ ४. उङ्खेत् ॥ ५. उङ्खाञ्चकार ॥ ६. उङ्खिता ॥ ७. उङ्खिष्यति ॥ ८. उङ्ख्यात् ॥ ९. औङ्खीत् ॥ १०. औङ्खिष्यत् ॥ **कर्मणि**--उङ्ख्यते । ६. उङ्खिता । ९. औङ्खि ॥

[६७] **अगि**=गतौ । सकर्म० । सेट् । परस्मै० ॥

१. **पुगन्तलघूपधस्य च** (पृ० ३) इति गुणः । २. आ+उखत् । **आटश्च** (२) इति वृद्धिः । ३. द्वित्वे उख् उख्=हलादिशेषे उ उख्=लघूपधगुणे उ ओख् **अभ्यासस्यासवर्णे** ॥ इवर्णोवर्णान्तस्य अभ्यासस्य इयङुवङौ स्तोऽसवर्णेऽचि । उव् ओख् अ=उवोख । ४. उख् उख्=उ उख्=सवर्णदीर्घे=ऊख्+अतुस्=ऊखतुः । ५. लुङि सप्तमी विधा । ६. **इजादेश्च**—(पृ० ८) इत्याम् ।

१. अञ्चति ॥ ५. आनञ्च ॥ ६. अञ्चिता ॥ ९. आञ्चीत् ॥

[६८] **इगि**=गतौ । सकर्म० । सेट् । परस्मै० ॥ **'उङ्खति'** (६६) वत् ॥

[६९] **वर्च**=दीप्तौ । अकर्म० । सेट् । आत्मने० ॥

१. वर्चते ॥ ५. ववर्चे ॥ इत्यादि **'पर्दति'** (२३) वत् ॥ वर्चः=दीप्तिः । वर्चस्कम्=पुरीषम् । ब्रह्मवर्चसम्[२] । हस्तिवर्चसम् ॥

[७०] **लोचृ**=दर्शने । सकर्म० । सेट् । आत्मने० ॥ **'लोकति'** (५४) वत् ॥ आ–आलोचने; आलोचते[३] ॥

[७१] **पचि**=व्यक्तीकरणे । सकर्म० । सेट् । आत्मने० ॥

१. पञ्चते ॥ ५. पपञ्चे । इत्यादि **'वन्दति'** (९) वत् ॥ पङ्कः । पञ्चन् । पङ्क्तिः ॥

[७२] **ऋज**=गतिस्थानार्जनोपार्जनेषु । सकर्म० । सेट् । आत्मने० ॥

१. अर्जते ॥ २. अर्जताम् ॥ ३. आर्जत ॥ ४. अर्जेत ॥ ५. आनृजे ॥ म० आनृजिषे ॥ उ० आनृजिवहे ॥ ६. अर्जिता ॥

१ अञ्च्+अञ्च्=अ अञ्च्=**अत आदेः** (पृ० ७) आ अञ्च्=**तस्मान्नुड् द्विहलः** (पृ० ८) आन्+अञ्च्+णल्=आनञ्च । २. **ब्रह्महस्तिभ्यां वर्चसः** । ३. "आलोचते सदा नीतिम्" इति कविकल्पद्रुमे । इत्थं नृपः पूर्वमवालुलोचे' (भट्टिः १। २३) ४ लघूपधगुणः । ५. **आडजादीनाम्** (२)। ६. **असंयोगाल्लिट् कित्** । (पृ० ८) इति लिटः कित्वाद्गुणाभावे द्वित्वे ऋज् ऋज्=**उरत्** (पृ० ८) इति अभ्यासऋवर्णस्य अत्वे रपरत्वे, अर् ऋज्=हलादिशेषे=अ ऋज्=अभ्यासदीर्घे आ ऋज् । ऋकारैकदेशस्य रेफस्य हल्त्वेन ग्रहणेन द्विहल्त्वात् नुटि आनृजे' इति भवति ।

७. अर्जिष्यते ॥ ८. अर्जिषीष्ट ॥ ध्वम् ॥ ९. आर्जिष्ट ॥ ढ्वम् ध्वम् ॥ १०. आर्जिष्यत ॥ **कर्मणि**—ऋज्यते । ९. आर्जि । **णिचि**—अर्जयति । **सनि**—अर्जिजिषते । **कृत्सु**—अर्जितव्यः । अर्जितः । ऋज्यः । अर्जमानः । अर्जित्वा । प्रार्ज्य । अर्जितुम् । अर्जनम् । प्र–ऋज्यते=प्रार्ज्यते ॥

[७३] **भृजी**=भर्जने । सकर्म० । सेट् । आत्मने० ॥

१. भर्जते ॥ २. भर्जताम् ॥ ३. अभर्जत ॥ ४. भर्जेत ॥ ५. बभृजे ॥ म० बभृजिषे ॥ उ० बभृजिवहे ॥ ६. भर्जिता ॥ ७. भर्जिष्यते ॥ ८. भर्जिषीष्ट ॥ ९. अभर्जिष्ट ॥ ढ्वम्—ध्वम् ॥ १०. अभर्जिष्यत ॥

**कर्मणि**—भृज्यते । ९. अभर्जि । **णिचि**-भर्जयति-ते । ९. अबीभृजत्–त । **सनि**—बिभर्जिषते । **यङि**—बरीभृज्यते । **यङ्लुकि**—बरीभृजीति–बरिभृजीति । बर्भृजीति । बर्भर्क्ति । बरिभर्क्ति । बरीभर्क्ति । **कृत्सु**—भर्जितव्यम् । भर्जनीयम् । भृज्यम् । भृक्तम् । भर्जित्वा । संभृज्य । भर्जितुम् । भर्गः ।

[७४] **एजृ**=दीप्तौ । अकर्म० । सेट् । आत्मने० ॥

१. एजते ॥ २. एजताम् ॥ ३. ऐजत ॥ ४. एजेत ॥ ५. एजाञ्चक्रे ॥ ६. एजिता ॥ ७. एजिष्यते ॥ ८. एजिषीष्ट ॥ ९.

१ **रीक् ऋदुपधस्य च** । ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्-यङ्लुकोः । २. **रुग्रिकौ च लुकि** । ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युः । ३ **श्वीदित** (२१) इत्यनिट्त्वम् । ४ **घञि** कुत्वम्

ऐजिष्ट ॥ ढ्वम् ध्वम् ॥ १०. ऐजिष्यत ॥ प्र+एजते=प्रेजते[1] ॥ **भावे**—एज्यते । ९. ऐजि । **णिचि**—एजयति-ते । ९. ऐजिजत्[2] । **सनि**—एजिजिषते । **कृत्सु**—एजितव्यम् । एजनीयम् । एज्यम् । एजितः । एजमानः । एजित्वा । उदेज्य । एजितुम् ॥

[७५] **भ्राजृ**=दीप्तौ । अकर्म० । सेट् । परस्मै० ॥

१. भ्राजते ॥ २. भ्राजताम् ॥ ५. बभ्राजे । इत्यादि **'गाधति'** (४) वत् । **भावे**—भ्राज्यते । **णिचि**—भ्राजयति-ते । ९. अबिभ्रजत्-त-अबिभ्राजत्[3]-त । **सनि**-बिभ्राजिषते । **यङि**-बाभ्राज्यते । **यङ्लुकि**-बाभ्राजीति-बाभ्राक्ति । **कृत्सु**—भ्राजितव्यः । भ्राजनीयः । भ्राज्यः । भ्राजितः । भ्राजमानः । भ्राजित्वा । विभ्राज्य । भ्राजितुम् । विभ्राक्[4], विभ्राजौ । भ्राजिष्णुः ॥

[७६] **शुच**=शोके । अकर्म० । सेट् । परस्मै० ॥

१. शोचति ॥ २. शोचतु ॥ ३. अशोचत् ॥ ४. शोचेत् । ५. प्र० शुशोच । शुशुचतुः । शुशुचुः ॥ म० शुशोचिथ । शुशुचथुः । शुशुच ॥ उ० शुशोच । शुशुचिव । शुशुचिम ॥ ६. शोचिता[5] शोक्ता ॥ ७. शोचिष्यति ॥ ८. शुच्यात् । शुच्यास्ताम् ॥ ९. अशोचीत् ॥ १०. अशोचिष्यत् ॥

**भावे**—शुच्यते । ९. अशोचि । **णिचि**—शोचयति-ते । ९. अशूशुचत्-त । **सनि**—शुशुचिषति—शुशोचिषति । **यङि**—

१ **एङि पररूपम्** । २ **नाग्लोपी**—(३६) ति नोपधाह्रस्वः ३. **भ्राजभासभाषे**त्यादिना चङ्परे णावुपधाह्रस्वविकल्पः । ४. **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्** । इति क्विप् । ५. तादावार्द्धधातुके वेडिति केषांचिन्मतम् ।

शोशुच्यते। **यङ्लुकि**---शोशुचीति--शोशोक्ति॥ **कृत्सु**---शोचितव्यम्। शोचनीयम्। शोच्यम्। शुचितम्[1]--शोचितम्। शोचन्। शोचितुम्। शुचित्वा[2]--शोचित्वा। शुक्त्वा। शूद्रः[3]। शुक्तः। शोकः। अनु--पश्चात्तापे--सकर्म०--अनुशोचति।

[७७] **कुञ्च**=कौटिल्याल्पीभावयोः। सकर्म०। सेट् परस्मै०॥

१. कुञ्चति॥ २. कुञ्चतु॥ ३. अकुञ्चत्॥ ४. कुञ्चेत्॥ ५. चुकुञ्च। ६. कुञ्चिता॥ ७. कुञ्चिष्यति॥ ८. कुच्यात्[4]॥ ९. अकुञ्चीत्॥ १०. अकुञ्चिष्यत्॥ **कर्मणि**---कुच्यते। **णिचि**---कुञ्चयति--ते। ९. अचुकुञ्चत्--त। **सनि**---चुकुञ्चिषति। **यङि**---चोकुच्यते। **यङ्लुकि**--चोकुञ्चीति---चोकुङ्क्ति॥ **कृत्सु**---कुञ्चितव्यः। कुञ्चनीयः। कुञ्च्यः। कुचितः। कुञ्चन्। कुञ्चितुम्। कुचित्वा। संकुच्य।

[७८] **लुञ्च**=अपनयने[6]। सकर्म०। सेट्। परस्मै०॥

**'कुञ्चति'** (७७) वत्। केशाँल्लुञ्चति। लुचित्वा--लुञ्चित्वा[7]॥

[७९] **अञ्चु**=गतिपूजनयोः। सकर्म०। सेट्। परस्मै०।

१. अञ्चति॥ ५. आनञ्च॥ ६. अञ्चिता॥ ८. गतौ नलोपः। अच्यात्॥ पूजनार्थे तु--अञ्च्यात्[8]॥ ९. आञ्चीत्।

१. **उदुपधात्**---(१४) इत्यादिना कित्वविकल्पः। २ **रलो व्युपधात्**---(१४) इति वा कित्वम्। ३. **शुचेर्दश्च** इति रक्प्रत्ययो दकारादेशः उपधादीर्घश्च। ४. 'आकुञ्चिताभ्यामथ पक्षतिभ्याम्' इति नैषधे। ५ **अनिदिता** (३१) मिति नलोपः। ६. सोलुञ्चीत्कर्णनासिकमित्यादिमहाकविप्रयोगमध्यक्षयन्तः केचन "अपनयनम्" इह छेदनमित्यभिप्रयन्ति। अपनयनार्थेऽपि दृश्यते--यथा,--चुकोच यत्रोत्कुचिताङ्गमुन्मदः कौञ्चोऽपि लुञ्चन्हृदि सम्यगार्तताम्। इति धातुकाव्ये। ७. **वञ्चिलुञ्च्यृतश्च**। इति सेट क्त्वः कित्वविकल्पनात् पक्षे नलोपः। ८. **नाञ्चेः पूजायाम्**। इति नलोपो न।

**कर्मणि**—अञ्च्यते–अच्यते । **णिचि**—अञ्चयति–ते । **सनि**—अञ्चिचिषति । **कृत्सु**—अङ्क्यम्[1] । अक्तिः । अञ्चित्वा[2]–अङ्क्त्वा । **पूजार्थे तु**–अञ्चित्वा । अञ्चितः । गतौ तु समक्नः[3] ॥

[८०] **गुजि**=अव्यक्ते शब्दे । अकर्म० । सेट् । परस्मै० ॥

१. गुञ्जति ॥ जुगुञ्ज । इत्यादि **'कुन्थति'** (३२) वत् ।

[८१] **अर्च**=पूजायाम् । सकर्म० । सेट् । परस्मै० ॥

१. अर्चति ॥ ३. आर्चत् ॥ ५. आनर्च[4] ॥ ६. अर्चिता ॥ ९. आर्चीत्[5] ॥ **कर्मणि**—अर्च्यते । **णिचि**—अर्चयति–ते । ९. आर्चिचत् । **सनि**—अर्चिचिषति ॥ **कृत्सु**—अर्चितव्यः । अर्चनीयः । अर्च्यः । अर्चितः । अर्चन् । अर्चनम् । अर्चित्वा । प्रार्च्य । अर्चितुम् ।

[८२] **वाच्छि**=इच्छायाम् । सकर्म० । सेट् । परस्मै० ॥

१. वाञ्छति ॥ २. वाञ्छतु ॥ ३. अवाञ्छत् ॥ ४. वाञ्छेत् ॥ ५. ववाञ्छ ॥ ६. वाञ्छिता ॥ ७. वाञ्छिष्यति ॥ ८. वाञ्छ्यात् ॥ ९. अवाञ्छीत् ॥ **कर्मणि**—वाञ्छ्यते । **णिचि**—वाञ्छयति–ते । **सनि**—विवाञ्छिषति । **यङि**—वावाञ्छ्यते । **यङ्लुकि**—वावाञ्छीति—वावांष्टि ॥ **कृत्सु**—वाञ्छितम् । वाञ्छन् । वाञ्छित्वा । विवाञ्छ्य । वाञ्छा ॥

१. **चजोः कुघिण्यतोः** । चस्य जस्य च कुत्वं स्यात् घिति ण्यति च प्रत्यये परे । इति कुत्वम् । २. **उदितो वा (३५)** । इति इड्विकल्पः । ३. **यस्य विभाषा**—(३५) । **अञ्चोऽनपादाने** । अञ्चो निष्ठातस्य नः स्यात् न त्वपादाने । इति समक्नः । अपादाने तु उदक्तमुदकं कूपात् । ४ **तस्मान्नुड् द्विहलः** (पृ० ८) । ५. आर्चीत् द्विजातीन् (भट्टिः १. । १५) ।

[८३] **मुर्च्छा**=मोहे समुच्छ्राययोः । अकर्म० । सेट् । परस्मै० ॥

१. मूर्च्छति[1] ॥ २. मूर्च्छतु ॥ ३. अमूर्च्छत् ॥ ४. मूर्च्छेत् ॥ ५. **प्र०** मुमूर्च्छ ॥ **म०** मुमूर्च्छिथ ॥ **उ०** मुमूर्च्छ । मुमूर्च्छिव ॥ ६. मूर्च्छिता ॥ ७. मूर्च्छिष्यति ॥ ८. मूर्च्छ्यात् ॥ मूर्च्छ्यास्ताम् ॥ ९. अमूर्च्छीत् ॥ १०. अमूर्च्छिष्यत् ॥ **भावे**—मूर्च्छ्यते । **णिचि**—मूर्च्छयति-ते । ९. अमुमूर्च्छत्-त । **सनि**—मुमूर्च्छिषति । **यङि**—मोमूर्च्छ्यते । **यङ्लुकि**—मोमूर्च्छीति—मोमोर्ति । **कृत्सु**—मूर्च्छितव्यम् इत्यादि । मूर्तः । मूर्तवान् । मूर्च्छित इति तु—मूर्च्छा अस्य संजाता इत्यर्थे इतच् ॥

[८४] **उच्छि**=उञ्छे । उञ्छः=कणश आदानम् । सकर्म० । सेट् । परस्मै० ॥

१. उञ्छति ॥ उञ्छाञ्चकार । इत्यादि '**उङ्खति**' (६६) वत् ॥ **कर्मणि**—उञ्छ्यते । **णिचि**—उञ्छयति-ते । **सनि**—उञ्छिछिषति । **कृत्सु**—उञ्छितव्यमित्यादि ॥

[८५] **कूज**=अव्यक्ते शब्दे । अकर्म० । सेट् । परस्मै० ॥

१. कूजति ॥ २. कूजतु ॥ ३. अकूजत् ॥ ४. कूजेत् ॥ ५. चुकूज ॥ ६. कूजिता ॥ ७. कूजिष्यति ॥ ८. कूज्यात् ॥

---

१. तेनामूर्च्छीदसौ क्षतः (भट्टिः) । २. न पादपोन्मूलनशक्ति रंहो शिलोच्चये मूर्च्छति मारुतस्य (रघुवंशे) । ३. **उपधायां च**—(१७) इति दीर्घः । ४. ईडभावे मोमूर्छ्—ति इति स्थिते, **राल्लोपः** । रेफात्परयोः छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये । इति छलोपे लघूपधगुणे च "मोमोर्ति" इति रूपसिद्धिः । ५. मूर्छ्=त इति स्थिते, **आदितश्च** । आकारेतो निष्ठाया इण्न स्यात् । इति इण्निषेधे, **राल्लोपः** । (पृ० ६४) इति छलोपे च मूर्+त="मूर्त" इति भवति । अत्र **न ध्याख्यापॄमूर्च्छिमदाम्** । इति निष्ठातस्य नत्वं न ।

९. अकूजीत् ॥ १०. अकूजिष्यत् ॥ **भावे**—कूज्यते । **णिचि**—कूजयति-ते । **सनि**—चुकूजिषति । **यङि**—चोकूज्यते । **यङ्लुकि**—चोकूजीति-चोकूक्ति । **कृत्सु**—कूजितव्यमित्यादि ॥

[८६] **अर्ज**=अर्जने । सकर्म० । सेट् । परस्मै० । अर्जति ॥ आनर्ज इत्यादि '**अर्चति**' (८१) वत् ॥

[८७] **गर्ज**=शब्दे । अकर्म० । सेट् । परस्मै० ॥

१. गर्जति ॥ ५. जगर्ज ॥ इत्यादि '**नर्दति**' (४१) वत् । **सनि**-जिगर्जिषति ॥

[८८] **तर्ज**=भर्त्सने । सकर्म० । सेट् । परस्मै० ॥ तर्जति ॥ ततर्ज इत्यादि '**नर्दति**' (४१) वत् ॥

[८९] **अज**=गतिक्षेपणयोः । गतावकर्म० । क्षेपणे सकर्म० । सेट् । व्यादेशे अनिट् । परस्मै० ॥

१. अजति । अजतः । २. अजतु ॥ ३. आजत् ॥ ४. अजेत् ॥ ५. **प्र०** विवाय[1] । विव्यतुः । विव्युः ॥ **म०** विवयिथ[2]-विवेथ[3]-आजिथ[4] । विव्यथुः । विव्य[5] ॥ **उ०** विवाय[6]-विवय ।

१. **अजेर्व्यघञपोः** । अजेः वी इत्ययमादेशः स्यात् आर्धधातुकविषये घञं अपं च वर्जयित्वा । इति व्यादेशे द्वित्वे ह्रस्वे च विवी= **अचो ञ्णिति** (पृ० २०) । इति वृद्धौ विवै+अ=आयादेशे विवाय । २. **ऋतो भारद्वाजस्य** । (पृ० ७) इति '**वी**' इत्ययं थलि वेट् । इट्पक्षे-विवी+इथ इत्यत्र सिबादेशस्य थलः **असंयोगा**(पृ० ८)दिति कित्वाभावाद्गुणे अयादेशे 'विवयिथ' । ३ अनिट्पक्षे पूर्ववद्गुणे 'विवेथ' । ४. **वलादावार्धधातुके वेष्यते** इति व्यादेशाभावपक्षे आजिथ । ५. विवी+अ **इको यणचि** । 'विव्य' । ६. **णलुत्तमो वा** (पृ० ८) ।

विव्यिव–आजिव। विव्यिम–आजिम ॥ ६. वेता। वेतारौ। वेतारः ॥ **पक्षे**—अजिता। अजितारौ। अजितार इत्यादि ॥ ७. वेष्यति। वेष्यतः। वेष्यन्ति ॥ **पक्षे**—अजिष्यति। अजिष्यतः। अजिष्यन्ति ॥ ८. वीयात्[1]। वीयास्ताम्। वीयासुः ॥ ९. अवैषीत्[2]। अवैष्टाम्। अवैषुः ॥ **पक्षे**—आजीत्[3]। आजिष्टाम्। आजिषुः। इत्यादि ॥ १०. अवेष्यत्–आजिष्यत् इत्यादि ॥

**कर्मणि**—वीयते। ५. विव्ये। ६. वायिता। ७. वायिष्यते[4]-वेष्यते–अजिष्यते। ८. वायिषीष्ट–वेषीष्ट–अजिषीष्ट। ९. अवायि। अवायिषाताम्–अवेषाताम्–आजिषाताम्। १०. अवायिष्यत–अवेष्यत–आजिष्यत ॥ **णिचि**—वाययति–ते। **सनि**—विवीषति–अजिजिषति। **यङि**—वेवीयते। अजादित्वान्न **यङ्लुगस्ति**। **कृत्सु**—वेतव्यम्–अजितव्यम्। वयनीयम्। वेयः। वीतः–अजितः। अजन्। वेष्यन्। वेतुम्–अजितुम्। वीत्वा–अजित्वा। प्रवीय–प्राज्य। अजिरम्। वेणुः। आजिः। अजः समजः। समाजः। समज्या ॥

[९०] **खजि**=गतिवैकल्ये। अकर्मकः। सेट्। परस्मै० ॥ **खञ्जति**। चखञ्ज। इत्यादि **'तङ्कति'** (६२) वत् ॥

[९१] **एजृ**=कम्पने। अकर्म०। सेट्। परस्मै० ॥

१. एजति ॥ २. एजतु ॥ ३. ऐजत् ॥ ४. एजेत् ॥ ५. एजाञ्चकार–बभूव–मास ॥ ६. एजिता ॥ ७. एजिष्यति ॥ ८. एज्यात् ॥ ९. ऐजीत् ॥ १०. ऐजिष्यत् ॥ अन्यत्सर्वम् आत्मनेपद **'एजति'** (७४) वत्। **सनि**—एजिजिषति ॥ **णिचि**—एजयति[5]। जनमेजयः।

१. **लिङाशिषि** (पृ० ९) इति आशीर्लिङः आर्धधातुकत्वात् व्यादेशः। २. लुङि षष्ठी विधा। ३. लुङि सप्तमी विधा। ४. **स्यसिच्सीयुट्तासिषु** (पृ० २२) इत्यादिना वा चिण्वदिट्। ५. **निगरणचलनार्थेभ्यश्च** (१२)।

[९२] **क्षि**=क्षये । अकर्म० । अन्तर्भावितण्यर्थस्तु सकर्मकः । अनिट् । परस्मै० ॥

१. क्षयति ॥ २. क्षयतु ॥ ३. अक्षयत् ॥ ४. क्षयेत् ॥ ५. **प्र०** चिक्षाय । चिक्षियतुः । चिक्षियुः ॥ **म०** चिक्षयिथ–चिक्षेथ । चिक्षियथुः । चिक्षिय ॥ उ० चिक्षाय--चिक्षय । चिक्षियिव । चिक्षियिम ॥ ६. क्षेता ॥ ७. क्षेष्यति ॥ ८. क्षीयात्[३] । क्षीयास्ताम् ॥ ९. अक्षैषीत् । अक्षैष्टाम् । अक्षैषुः ॥ **म०** अक्षैषीः । अक्षैष्टम् । अक्षैष्ट ॥ उ० अक्षैषम् । अक्षैष्व । अक्षैष्म ॥ १०. अक्षे

**भावे**—क्षीयते । ५. चेक्षिये । ९. अक्षायि । **णिचि**—क्षाययति–ते ॥ ५. क्षाययाञ्चकार--चक्रे । ९. अचिक्षयत्–त ॥ **सनि**—चिक्षीषति[४] । **यङि**—चेक्षीयते । **यङ्लुकि**—चेक्षयीति–चेक्षेति । **कृत्सु**—क्षेतव्यम् । क्षयणीयम् । क्षेतुं योग्यं क्षेयम् । क्षेतुं शक्यं क्षय्यम्[६] । क्षीणः[७]–क्षितः[८] । क्षाम[९] इति ‘**क्षै=क्षये**’ इत्यस्य रूपम् । क्षित्वा प्रक्षीय ।

[९३] **व्रज**=गतौ । सकर्म० । सेट् । परस्मै० ॥

१. **सार्वधातुके**-(पृ० ३) ति गुणः, अयादेशः । २. **अकृत्सार्वधातुकयोर्दीर्घः** । अजन्ताङ्गस्य दीर्घः स्यात् न तु कृत्सार्वधातुकयोः । ३. षष्ठी विधा । ४. **अज्झनगमां सनि** । अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । इति दीर्घः । ५. **सार्वधातुके**—(पृ० ३) ति गुणः । ६. **क्षय्यजय्यौ शक्यार्थे** इति यान्तादेशनिपातः । ७ **निष्ठायामण्यदर्थे** । ण्यदर्थो भावकर्मणी । ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात् । **क्षियो दीर्घात्** । दीर्घात्क्षियो निष्ठातस्य नः स्यात् भावकर्मणोः । ८ ण्यदर्थे रूपम् । ९. **क्षायो मः** ।

१. व्रजति ॥ ५. वव्राज ॥ ७. अव्राजीत्[1] ॥ इत्यादि **'गदति'** (३७) वत् । व्रज्या । व्रजः । परिव्राट्[2] । परि=सन्यसने । परिव्रजति । अनु=अनुगमने; अनुव्रजति । अप=अपगमने; अपव्रजति ॥

[९४] **वेष्ट=वेष्टने** । सकर्म० । सेट् । आत्मने० ॥

१. वेष्टते ॥ २. वेष्टताम् ॥ ३. अवेष्टत ॥ ४. वेष्टेत ॥ ५. विवेष्टे । विवेष्टाते । विवेष्टिरे ॥ ६. वेष्टिता ॥ ७. वेष्टिष्यते ॥ ८. वेष्टिषीष्ट ॥ ९. अवेष्टिष्ट ॥ १०. अवेष्टिष्यत ॥ **कर्मणि** — वेष्ट्यते । **णिचि**—वेष्टयति–ते । ९. अववेष्टत्[3]–त । अविवेष्टत्–त । **सनि**—विवेष्टिषते । **यङि**—वेवेष्ट्यते । **यङ्लुकि** —वेवेष्टीति– ॥ **कृत्सु**—वेष्टितव्यः । वेष्टित्वा । संवेष्ट्य । वेष्टितुम् । वेष्टमानः

[९५] **चेष्ट=चेष्टायाम्** । अकर्म० । सेट् । आत्मने० । **'वेष्टति'** (९४) वत् । चेष्टा ॥

[९६] **घट्ट=चलने** । अकर्म० । सेट् । आत्मने० ॥

१. घट्टते ॥ २. जघट्टे ॥ इत्यादि **'कत्थति'** (२६) वत् । **णिचि**--घट्टयति । आत्मनेपदं[4] नास्ति । घट्टः ॥

[९७] **स्फुट=विकसने** । अकर्म० । सेट् । आत्मने० ॥

१. स्फोटते ॥ २. स्फोटताम् ॥ ३. अस्फोटत ॥ ४. स्फोटेत ॥ ५. पुस्फुटे ॥ इत्यादि ॥

१. **वदव्रजे**—(पृ० १२) ति वृद्धिः । २. **परौ व्रजेः षः पदान्ते** । व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च । इति क्विपि षत्वं दीर्घश्च । ३. **विभाषा वेष्टिचेष्ट्योः** । अभ्यासस्य अत्वं वा स्यात् चङ्परे णौ । ४. **निगरणचलनार्थेभ्यश्च** (१२) ।

[९८] **हिडि**=गत्यनादरयोः । अकर्म० । सेट् । आत्मने० ॥ हिण्डते ॥ जिहिण्डे ॥ इत्यादि **'क्रिन्दति'** (१२) वत् ॥

[९९] **पिडि**=सङ्घाते । सकर्म० । सेट् । आत्मने० ॥ पिण्डते ॥ पिपिण्डे ॥ इत्यादि **'क्रिन्दति'** (१२) वत् । पिण्डः ॥

[१००] **चडि**=कोपे । अकर्म० । सेट् । आत्मने० ॥ चण्डते ॥ चचण्डे ॥ इत्यादि **'वन्दति'** (९) वत् ॥ चण्डनः । चण्डालः । चण्डी । चण्डाली ॥

[१०१] **तडि**=ताडने । सकर्म० । सेट् । आत्मने० ॥ तण्डते ॥ ततण्डे ॥ इत्यादि **'वन्दति'** (९) वत् । तण्डः । वतण्डः=ऋषिः । वितण्डा । तण्डुलम् ॥

[१०२] **अट**=गतौ । सकर्म० । सेट् । परस्मै० ॥

१. अटति ॥ २. अटतु ॥ ३. आटत् ॥ ४. अटेत् ॥ ५. आट । आटतुः । आटुः ६. अटिता ॥ ७. अटिष्यति ॥ ८. अट्यात् ॥ ९. आटीत् । आटिष्टाम् । आटिषुः ॥ १०. आटिष्यत् ॥ **कर्मणि**—अट्यते । ५. आटे । ९. आटि । **णिचि**—अटयति-ते । **सनि**—अटिटिषति । **यङि**—अटाट्यते[1] । **यङ्लुकि**—आटीति-आट्टि । **कृत्सु**—अटितव्यम् । अटनीयम् । इत्यादि **'अतति'** (२७) वत् । अटतीति अटा । कुलस्य अटा कुलटा ॥ परि=पर्यटने, पर्यटति ।

[१०३] **रट**=परिभाषणे । अकर्मकः । सेट् । परस्मै० ॥ रटति । रराट । रेटतुः । इत्यादि **'रदति'** (३८) वत् ॥

१ **सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्य उपसंख्यानम्** । यङ् स्यात् । एष्वाद्यानां त्रयाणामनेकाच्त्वात्, अट् ऋ अश् ऊर्णुङ् इत्येतेषां हलादित्वाभावाच्चाप्राप्ते वचनम् । **नित्यं कौटिल्ये गतौ** (३४) । गत्यर्थेभ्यः क्रियासमभिहारेपि यङस्त्येवेति केषाञ्चिन्मतम् । अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः । (भट्टिः ४ । २) ।

[१०४] **णट=नृत्तौ** । अकर्म० । सेट् । परस्मै० ॥

१. नटति ॥ ५. ननाट । नेटतुः ॥ इत्यादि **'रदति'** (३८) वत् नटः । नटी । प्रणटति[1] ॥

[१०५] **लुट=विलोडने** । सकर्म० । सेट् । परस्मै० ॥

१. लोटति ॥ ५. लुलोट । लुलुटतुः ॥ ६. लोटिता ॥ ७. लोटिष्यति ॥ ८. लुट्यात् ॥ ९. अलोटीत् । इत्यादि **'शोचति'** (७६) वत् ॥

[१०६] **चिट=परप्रेष्ये** । अकर्म० । सेट् । परस्मै० ॥

१. चेटति ॥ ५. चिचेट । चिचिटतुः ॥ ६. चेटिता ॥ ९. अचेटीत् ॥ **भावे**—चिट्यते । **णिचि**—चेटयति-ते । **सनि**—चिचिटिषति-चिचेटिषति । **यङि**—चेचिट्यते । **यङ्लुकि**—चेचिटीति-चेचेट्टि । **कृत्सु**—चेटितव्यम् । चेटनीयम् । चेट्यम् । चिटितः । चेटन् । चेटन्ती । चेटित्वा । विचिट्य । चेटितुम् । चेटः । चेटी ॥

[१०७] इ=गतौ । सकर्म० । अनिट् । परस्मै० ॥

१. प्र० अयति[2] । अयतः । अयन्ति ॥ म० अयसि । अयथः । अयथ ॥ उ० अयामि । अयावः । अयामः ॥ २. अयतु-तात् । म० अय । अयतात् । अयतम् । अयत । उ० अयानि ॥ ३. प्र० आयत् ॥ म० आयः । आयतम् । आयत ॥ उ० आयम् । आयाव । आयाम ॥ ४. अयेत् ॥ ५. प्र० इयाय ।

---

१. णोपदेशत्वात् **उपसर्गादसमासेपी** — (३९) ति णत्वम् । २. प्रक्रिया **'क्षयति'** (९२) वत् ।

इयतुः । इयुः ॥ **म०** इययिथ–इयेथ । इयथुः । इय ॥ **उ०** इयाय–इयय । इयिव । इयिम ॥ ६. एता ॥ ७. एष्यति ॥ ८. ईयात् । ईयास्ताम् ॥ ९. ऐषीत्[1] । ऐष्टाम् ऐषुः ॥ १०. ऐष्यत् ॥ **कर्मणि**—ईयते । **सनि**—ईषिषति[2] । **णिचि**—आययति । **कृत्सु**— एतव्यम् । अयनीयम् । अयन् । अयन्ती । इत्वा । प्रेत्य । अयितुम् । एतुम् । उत्--उदये । उदयति[3] ॥

[१०८] ई=गतौ । सकर्म० । अनिट् । परस्मै० ॥ ५. अयाञ्चकारे-त्यादि लिटि विशेषः । अन्यत्सर्वं 'इ' (१०७) धातुवत्[4] ॥

[१०९] **मडि**=भूषायाम् । अकर्म० । सेट् । परस्मै० ॥ मण्डति । ममण्ड । ममण्डतुः । इत्यादि **'क्रन्दति'** (५०) वत् । मण्डनम् । मण्डनः । मिमण्डिषति ॥

[११०] **स्फुटिर्**=विशरणे । अकर्म० । सेट् । परस्मै० ॥

१. स्फोटति ॥ ५. पुस्फोट ॥ इत्यादि **'च्योतति'** (२९) वत् ॥

[१११] **मुडि**=खण्डने । सकर्म० । सेट् । परस्मै० ॥ मुण्डति ॥ मुमुण्ड ॥ इत्यादि **'कुन्थति'** (३२) वत् ।

[११२] **पठ**=व्यक्तायां वाचि । सकर्म० । सेट् । परस्मै० । पठति ॥ **५.** पपाठ । पेठतुः ॥ ९. अपठीत्[5]—अपाठीत् ॥ इत्यादि **'रदति'** (३८) वत् । पाठः पठनम् ।

१. षष्ठो लुङ् । २. **अज्झनगमां सनी**—(९२)ति दीर्घः । ३. "अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्वः परिणतविमलिम्नि व्योम्नि कर्पूरगौरः ।" ४. **इजादेश्च गुरुमत**—(पृ० ८) इत्याम् । व्यपदेशिवद्भावेन इजादित्वम् । ५. **अतो हलादेर्लघोः** । हलादेर्लघोरकारस्येडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् ।

[११३] कुठि=प्रतिघाते। गतिप्रतिघात इति केचित्। सकर्म० सेट् परस्मै० ॥ कुण्ठति इत्यादि 'कुन्थति' (३२) वत्।

[११४] क्रीडृ=विहारे। अकर्म०। सेट्। परस्मै० ॥

१. क्रीडति ॥ २. क्रीडतु ॥ ३. अक्रीडत् ॥ ४. क्रीडेत् ॥ ५. चिक्रीड। चिक्रीडतुः ॥ ६. क्रीडिता। ७. क्रीडिष्यति ॥ ८. क्रीड्यात्[1] ॥ ९. अक्रीडीत् ॥ १०. अक्रीडिष्यत् ॥ सङ्क्रीडते[2]। अनुक्रीडते। परिक्रीडते। आक्रीडते। अव्यक्तशब्दे तु परस्मैपदम्—सङ्क्रीडति[3] चक्रम्। **भावे**—क्रीड्यते। **णिचि**—क्रीडयति-ते। **सनि**—चिक्रीडिषति। **यङि**—चेक्रीड्यते। **यङ्लुकि**—चेक्रीडीति-चेक्रेट्टि ॥ **कृत्सु**—क्रीडितव्यम्। क्रीडनीयम्। क्रीड्यम्। क्रीडन्। क्रीडितुम्। क्रीडित्वा। सङ्क्रीड्य। क्रीडनम्। क्रीडा। आक्रीडन्त्यत्रेति आक्रीडः=उद्यानम् ॥

[११५] तिपृ=क्षरणे। सकर्म०। अनिट्। आत्मने० ॥

१. तेपते ॥ २. तेपताम् ॥ ३. अतेपत ॥ ४. तेपेत ॥ ५. प्र० तितिपे। तितिपाते। तितिपिरे ॥ म० तितिपिषे। तितिपाथे। तितिपिध्वे ॥ उ० तितिपे। तितिपिवहे। तितिपिमहे ॥ ६. तेप्ता ॥ ७. तेप्स्यते ॥ ८. तिप्सीष्ट[4] ॥ ९. अतिप्त[5]। अतिप्साताम्। अतिप्सत ॥ १०. अतेप्स्यत ॥ **कर्मणि**—तिप्यते। **णिचि**—तेपयते-ति। **यङि**—तेतिप्यते। **यङ्लुकि**—तेतिपीति-तेतेप्ति। **सनि**—तितिप्सते ॥ **कृत्सु**—तेपितव्यम्। तेपनीयम्। तेप्यम्। तिप्तः। तेपमानः। तेपितुम्। तेपित्वा। संतिप्य ॥

१. सप्तमो लकारः। २. **क्रीडोऽनुसम्परिभ्यश्च**। अन्वादिपूर्वकात् चकारादाङ्पूर्वाच्च क्रीडतेस्तङ्। ३. **समोऽकूजने** इति वक्तव्यम्। अत्र संक्रीडतीत्यस्य कूजतीत्यर्थः। ४. **लिङ्सिचावात्मनेपदेषु**। इक्समीपाद्धलः परौ झलादी लिङ् आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः। कित्वान्न गुणः। ५. **झलो झलि (२५)**। इति सलोपः। लुङि दशमी विधा।

[११६] **टुवेपृ**=कम्पने । अकर्म० । सेट् । आत्मने० ॥

१. वेपते ॥ २. वेपताम् ॥ ३. अवेपत ॥ ४. वेपेत ॥ ५. विवेपे । विवेपाते । विवेपिरे ॥ **म०** विवेपिषे । विवेपाथे । विवेपिध्वे ॥ **उ०** विवेपे । विवेपिवहे । विवेपिमहे ॥ ६. वेपिता ॥ ७. वेपिष्यते ॥ ८. वेपिषीष्ट ॥ ९. अवेपिष्ट[1] ॥ १०. अवेपिष्यत ॥ कर्मादौ **'तेपति'** (११५) वत् ॥ वेपथुः[2] ॥

[११७] **त्रपूष्**=लज्जायां । अकर्म । सेट् । आत्मने० ॥

१. त्रपते ॥ २. त्रपताम् ॥ ३. अत्रपत ॥ ४. त्रपेत ॥ ५. **प्र०** त्रेपे[3] । त्रेपाते । त्रेपिरे ॥ **म०** त्रेपिषे[4]-त्रेप्से । त्रेपाथे । त्रेपिध्वे-त्रेब्ध्वे । **उ०** त्रेपे । त्रेपिवहे-त्रेप्वहे । त्रेपिमहे-त्रेप्महे ॥ ६. त्रपिता--त्रप्ता ॥ ७. त्रपिष्यते-त्रप्स्यते ॥ ८. **प्र०** त्रपिषीष्ट-त्रप्सीष्ट । **म०** ध्वम् । ९. **प्र०** अत्रपिष्ट । अत्रपिषाताम् । अत्रपिषत ॥ **पक्षे**—अत्रप्त[5] । अत्रप्साताम् । अत्रप्सत ॥ **म०** अत्रपिष्ठाः । अत्रपिषाथाम् । अत्रपिध्वम् । **पक्षे**—अत्रब्धाः । अत्रप्साथाम् । अत्रब्ध्वम् ॥ **उ०** अत्रपिषि । अत्रपिष्वहि । अत्रपिष्महि ॥ **पक्षे**—अत्रप्सि । अत्रप्स्वहि । अत्रप्स्महि ॥ १०. अत्रपिष्यत-अत्रप्स्यत ॥ **भावे**—त्रप्यते । **णिचि**—त्रपयति[6] । अतित्रपत् । **सनि**—तित्रपि-

---

१. लुङि एकादशी विधा । २. ट्वितोऽथुच् । ३ **तॄफलभजत्रपश्च** । एषामत एकारोऽभ्यासलोपश्च किति लिटि सेटि थलि च । ४. **स्वरतिसूती-**(३५)ति वेट् । ५. **झलो झलि** (३५) इति सिचो लोपः । ६. घटादित्वान्मित्वम् । तस्माद्ध्रस्वः ।

षते-तित्रप्सते । **यङि**— तात्रप्यते । **यङ्लुकि**—तात्रपीति-तात्रप्ति । **कृत्सु**—त्रपितव्यम्-त्रप्तव्यम् । त्रपणीयम् । त्राप्यम्[1] । त्रप्तः[2] । त्रपितुम्-त्रप्तुम् । त्रपित्वा-त्रप्त्वा । त्रपा[3] । अपत्रपिष्णुः । त्रपु ।

[११८] **कपि=चलने** । अकर्म० । सेट् । आत्मने० ॥

१. कम्पते ॥ २. कम्पताम् ॥ ३. अकम्पत ॥ ४. कम्पेत ॥ ५. चकम्पे । चकम्पाते । चकम्पिरे ॥ म० चकम्पिषे ॥ उ० चकम्पे । चकम्पिवहे ॥ ६. कम्पिता ॥ ७. कम्पिष्यते ॥ ८. कम्पिषीष्ट ॥ ९. अकम्पिष्ट ॥ ध्वम्-ढ्वम् ॥ १०. अकम्पिष्यत ॥ अनुकम्पते=दयते । **भावे**—कम्प्यते । ९. अकम्पि । **णिचि**—कम्पयति[4] । **सनि**—चिकम्पिषते । **यङि**—चाकम्प्यते । **यङ्लुकि**—चाकम्पीति-चाकम्प्ति ॥ **कृत्सु**—कम्पितव्यः । कम्पनीयः । कम्पमानः । कम्पितः । कम्पित्वा । प्रकम्प्य । कम्पितुम् । कम्प्रः[5] । कम्पनः । कपिः[6] । वृषाकपिः[7] । कपिलः । कम्बलः ॥

[११९] **क्लीबृ=अधाष्ट्र्ये** । अकर्म० । सेट् । आत्मने० ॥

१. क्लीबते ॥ २. क्लीबताम् ॥ ३. अक्लीबत ॥ ४. क्लीबेत ॥ ५. चिक्लीबे ॥ ६. क्लीबिता ॥ ७. क्लीबिष्यते ॥ ८. क्लीबिषीष्ट ॥ ९. अक्लीबिष्ट ॥ म० ढ्वम्-ध्वम् ॥ १०. अक्लीबिष्यत । **भावे**—

१ **आसुयुवपिरपिलपित्रपिचमश्च** । इति भावे ण्यत् । २. **यस्य विभाषा** (३५। इति इण्निषेधः । ३ **षिद्भिदादिभ्योऽङ्** । ४. **निगरणचलनार्थेभ्यश्च** । ५. **नमिकम्पिस्म्यजसकमहिंसदीपो रः** । इति रः । अकम्प्रं मारुतिर्दीप्रम् (भट्टिः ७। २३) । ६. **कुटिकम्प्योर्नलोपश्च** । इति इन्प्रत्ययो नलोपश्च । ७. **वृषो धर्मः** तस्य अकपिः अकम्पिता वृषाकपिः । विष्णुः रुद्रश्च ।

**याङि**—**यङ्लुकि**—**कृत्सु**—च 'क्षीबति' (११४) वत्। विशेषस्तु **णिचि**—क्षीबयति ते॥ **सनि** – चिक्षीबिषते। क्षीबमानः। क्षीबः॥

[१२०] **क्षीबृ**=मदे। अकर्म०। सेट्। आत्मने०॥ क्षीबते इत्यादि 'क्षीबति' (११९) वत्॥

[१२१] **ष्टभि**=प्रतिबन्धे। अकर्म०। सेट्। आत्मने०॥

१. स्तम्भते[1]॥ २. स्तम्भताम्॥ ३. अस्तम्भत॥ ४. स्तम्भेत॥ ५. तस्तम्भे॥ ६. स्तम्भिता॥ ७. स्तम्भिष्यते॥ ८. स्तम्भिषीष्ट॥ ९. अस्तम्भिष्ट॥ ढ्वम्–ध्वम्॥ १०. अस्तम्भिष्यत॥ उत्तम्भते[2]॥ **भावे**—स्तम्भ्यते। **णिचि**—स्तम्भयति–ते। ९. अतस्तम्भत्–त। **सनि**—तिस्तम्भिषते। **याङि**—तास्तम्भ्यते। **यङ्लुकि**—तास्तम्भीति–तास्तम्भ्धि। **कृत्सु**—स्तम्भितव्यम्। स्तम्भनीयम्। स्तम्भ्यम्। स्तम्भमानः। स्तम्भितः। स्तम्भित्वा। संस्तभ्य। स्तम्भितुम्॥

[१२२] **जृभि**=गात्रविनामे। गात्रविनामो जृम्भणम्। अकर्म०। सेट्। आत्मने०॥

१. * जृम्भते॥ ५. जजृम्भे॥ ६. जृम्भिता॥ ८. जृम्भिषीष्ट॥ ध्वम्॥ ९. अजृम्भिष्ट॥ **भावे**—जृम्भ्यते। **णिचि**—जृम्भयति–ते। ९. अजजृम्भत्–त। **सनि**—जिजृम्भिषते। **याङि**—जरीजृम्भ्यते[3]। **यङ्लुकि**—जरीजृम्भीति–जरीजृम्भ्धि॥

---

१. **धात्वादेः षः सः**। इति सत्वम्। टकारं प्रति निमित्तभूतषकाराभावात् टकारः तकारो भवति। २ **उदः स्थास्तम्भोः पूर्वस्य**। इति पूर्वसवर्णः। * मयूरगलकाहलीकलकलः समुज्जृम्भते (चम्पू रा. ४। २७)। ३. **रीगृदुपधस्य च** (७३)।

[१२३] **गुपू**=रक्षणे। सकर्म०। वेट्। परस्मै०॥

१. **प्र०** गोपायति[1]। गोपायतः। गोपायन्ति॥ **म०** गोपायसि॥ **उ०** गोपायामि॥ २. गोपायतु॥ ३. अगोपायत्॥ ४. गोपायेत्॥ ५. **प्र०** गोपायाञ्चकार[2]–गोपायाम्बभूव–गोपायामास॥ **म०** गोपायाञ्चकर्थ–गोपायाम्बभूविथ–गोपायामासिथ॥ **उ०** गोपायाञ्चकार–गोपायाञ्चकर–गोपायाम्बभूव–गोपायामास॥ **पक्षे**—**प्र०** जुगोप[3]। जुगुपतुः। जुगुपुः॥ **म०** जुगोपिथ–जुगोप्थ[4]। जुगुपथुः। जुगुप॥ **उ०** जुगोप। जुगुपिव–जुगुप्व। जुगुपिम–जुगुप्म॥ ६. **प्र०** गोपायिता–गोपिता–गोप्ता॥ **म०** गोपायितासि–गोपितासि–गोप्तासि॥ **उ०** गोपायितास्मि–गोपितास्मि गोप्तास्मि॥ ७. गोपायिष्यति–गोपिष्यति–गोप्स्यति॥ ८. गोपाय्यात्–गुप्यात्। गोपाय्यास्ताम्–गुप्यास्ताम्॥ ९. अगोपायीत्[5]–अगोपीत्[6]–अगौप्सीत्[7]॥ १०. अगोपायिष्यत्–अगोपिष्यत्–अगोप्स्यत्॥ **कर्मणि**—गोपाय्यते–गुप्यते। ९. अगोपायि–अगोपि। **णिचि**—गोपाययति–ते–गोपयति–ते। ९. अजुगोपायत्–त–अजूगुपत्–त। **सनि**—जुगोपायिषति–जुगुपिषति–जुगोपिषति जुगुप्सति॥ **यङि**—जोगुप्यते[8]। **यङ्लुकि**—जोगुपीनि–

१. **गुपूधूपविच्छिपणिपनिभ्य आयः**। एभ्य आयप्रत्ययः स्यात्स्वार्थे। गुप्+आय इत्यत्र पुगन्तलक्षणगुणे **सनाद्यन्ता धातवः**। इति 'गोपाय' इत्यस्य धातुत्वाल्लडादयः। २. 'गोपाय' इत्यस्य अनेकाच्त्वात् आम् कृभ्वस्त्यनुप्रयोगश्च। **अतो लोपः** (पृ० २६) इति अकारलोपः। ३. **आयादय आर्धधातुके वा**। इति 'आय' प्रत्ययस्य वैकल्पिकत्वात् आयाभावपक्षे रूपम्। ४. इडभावपक्षे रूपम्। ५. लुङि सप्तमी त्रिधा। ६ अगोपिष्टां पुरीं लङ्कां अगोप्तां रक्षसां बलम् (भट्टिः १५। ११३)। ७. षष्ठो लुङ्। **वदव्रजे**—(पृ० १२) इति वृद्धिः। ८. आयप्रत्ययान्तस्य अनेकाच्त्वात् 'गोपाय' इत्यस्मात् न यङ्-यङ्लुकौ।

जोगोप्ति ॥ **कृत्सु**—गोपायितव्यः—गोपितव्यः। गोपायनीयः—गोपनीयः। गोप्यः। गोपायितः—गुप्तः। गोपायन्। गोपायितुम्—गोप्तुम्। गोपायनम्। गोपायित्वा—गोपित्वा—गुप्त्वा। सङ्गोपाय्य—सङ्गुप्य—सङ्गोप्य ॥ गुप्तिः। कुप्यम्[1]=धनम् ॥

[१२४] **धूप**=सन्तापे। सकर्म०। सेट्। परस्मै० ॥

१. धूपायति ॥ ५. दुधूप। दुधूपतुः। दुधूपुः ॥ **पक्षे**—धूपायाञ्चकारेत्यादि। **'गोपायति'** (१२३) वत् ॥

[१२५] **जप**=व्यक्तायां वाचि मानसे च। सकर्म०। सेट्। परस्मै० ॥

१. जपति ॥ २. जपतु ॥ ३. अजपत् ॥ ४. जपेत् ॥ ५. **प्र०** जजाप। जेपतुः। जेपुः ॥ **म०** जेपिथ। जेपथुः। जेप ॥ **उ०** जजाप—जजप। जेपिव। जेपिम ॥ ६. जपिता ॥ ७. जपिष्यति ॥ ८. जप्यात्। जप्यास्ताम् ॥ ९. अजापीत्[2]—अजपीत्। अजापिष्टाम्—अजपिष्टाम् ॥ १०. अजपिष्यत् ॥ **कर्मणि**—जप्यते। **णिचि**—जापयति-ते। ९. अजीजपत्-त। **सनि**—जिजपिषति। **यङि** जञ्जप्यते[3]। **यङ्लुकि**—जञ्जपीति-जञ्जप्ति। **कृत्सु**—जपितव्यः। जपनीयः। जप्यः। जपितः। जपन्। जपितुम्। जपित्वा—जप्त्वा। सञ्जप्य ॥ जञ्जपूकः[4]। कर्णेजपः[5]=सूचकः। उपजपति[6]=भेदयतीत्यर्थः। अभिजपति=मन्त्रयतीत्यर्थः ॥

१. **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः**। इति गुपू धातोः क्यप् प्रकृतेरादिवर्णस्य ककारश्च निपात्यते। २. लुङि सप्तमी विधा। **अतो-हलादेः**—(११२)रिति वृद्धिविकल्पः। ३. **जपजभदहदशभञ्जपशां च**। एषामभ्यासस्य नुक्। ४ **यजजपदशां यङः**। एभ्यो यङन्तेभ्य ऊकः स्यात् तच्छीलादिषु। जञ्जपूकोऽक्षमालावान् (भट्टिः ५। ६१)। ५. **स्तम्बकर्णयोरमिजपोः**। इत्यलुक्। ६. मुख्याः कपीनामपि नोपजाप्याः (भट्टिः १२। ४९)।

[१२६] **जल्प**=व्यक्तायां वाचि । सक० । परस्मै० ॥

१. जल्पति ॥ ५. जजल्प ॥ ६. जल्पिता इत्यादि **'जपति'** (१२५) वत् ॥ जल्पाक[1]:=वाचालः ॥

[१२७] **लप**=व्यक्तायां वाचि । सकर्म० । सेट् । परस्मै ० ॥

१. लपति ॥ ५. ललाप । लेपतुः । लेपुः ॥ ६. लपिता ॥ इत्यादि **'गदति'** (३७) वत् । आलापः । प्रलापः । अनुलापः । विलापः[2] । विप्रलापः । सल्लापः । सुप्रलापः । अपलापः ॥

[१२८] **चुबि**=वक्त्रसंयोगे । सकर्म० । सेट् । परस्मै० ॥

१. चुम्बति ॥ ५. चुचुम्ब । इत्यादि **'कुन्थति'** (५२) वत् ॥

[१२९] **शुभ**=भासने । अकर्म० । सेट् । परस्मै० ॥ शोभति ॥ शुशोभ ॥ इत्यादि **'शोचति'** (७६) वत् । शुभम् । शोभनम् । शुभ्रम् ॥

[१३०] **घूर्ण**=भ्रमणे । अकर्म० । सेट् । आत्मने० ॥

१. घूर्णते ॥ ५. जुघूर्णे ॥ ६. घूर्णिता ॥ ७. घूर्णिष्यते ॥ ८. घूर्णिषीष्ट ॥ ९. अघूर्णिष्ट[3] ॥ १०. अघूर्णिष्यत ॥ **भावे**—घूर्ण्यते । **णिचि**—घूर्णयति-ते । इत्यादि । **सनि**—जुघूर्णिषते । **यङि**—जोघूर्ण्यते । **यङ्लुकि**—जोघूर्णीति-जोघूर्न्ति इत्यादि ॥

[१३१] **पण**=व्यवहारे स्तुतौ च । सकर्म० । सेट् । व्यवहारार्थे आत्मने० । स्तुतौ परस्मै० ॥

१. जल्पाकीभिः सहासीनः (भट्टिः ७ । १९) २. विनष्टचेता विललाप रामः (चम्पू० रा ३ । ३५) । ३ एकादशो लुङ् ।

**व्यवहारार्थे**—१. पणते ॥ २. पणताम् ॥ ३. अपणत ॥ ४. पणेत ॥ ५. पेणे । पेणाते । पेणिरे ॥ ६. पणिता ॥ **म०** पणितासे ॥ ७. पणिष्यते ॥ ८. पणिषीष्ट ॥ ९. अपणिष्ट ॥ १०. अपणिष्यत ॥

**स्तुत्यर्थे**—१. पणायति[1] ॥ २. पणायतु ॥ ३. अपणायत् । ४. पणायेत् । ५. पणायाञ्चकार–पणायामासेत्यादि । ६. पणायिता ॥ पणायितासि ॥ ७. पणायिष्यति ॥ ८. पणाय्यात् ॥ ९. अपणायीत् ॥ १०. अपणायिष्यत् । **आयादय आर्धधातुके वा** इति आयप्रत्ययाभावपक्षे आत्मने० । ५. पेणे ॥ ६. पणितासे ॥ ७. पणिष्यते ॥ ८. पणिषीष्ट ॥ ९. अपणिष्ट ॥ १०. अपणिष्यत ॥ **कर्मणि**—स्तुतौ पणाय्यते–पण्यते । व्यवहारे पण्यते । ९. अपणायि । अपाणि । **णिचि**—पणाययति–ते पणायति–ते । **सनि**—पिपणायिषति । पिपणिषते । **यङि**—पम्पण्यते । **यङ्लुकि**—पम्पणीति–पम्पण्टि । **कृत्सु**—'**धूपायति**' (१२४)वत् । पण्यो[2]=गौः । व्यवहर्तव्य इत्यर्थः । पाण्यः[3]=स्तुत्यः । विपणिः[4] । आपणः । वणिक्[5] ॥

[१३२] **भाम**=क्रोधे । अकर्म० । सेट् । आत्मने० ॥

भामते ॥ ५. बभामे ॥ इत्यादि '**गाधति**' (४) वत् । **सनि**—बिभामिषते । **यङि**—बाभाम्यते । **यङ्लुकि**—बाभामीति–बाभान्ति । भामः=क्रोधः । भामिनी । देवदत्ताय भामते ॥

---

१. **गुपूधूपे**—(१२३)ति आयप्रत्ययः । २. **अवद्यपण्ये**—ति व्यवहर्तव्ये निपातः । ३ अन्यत्र ण्यति रूपम् । ४. विविधमत्र पणन्ते इति विपणिः । ५. **पणेरिजादेश्च वः** । इति इज प्रत्ययः आदेः पकारस्य च वकारः ।

[१३३] **क्षमूष्**=सहने । सकर्म० । वेट् । परस्मै० ॥

१. क्षमते ॥ २. क्षमताम् ॥ ३. अक्षमत ॥ ४. क्षमेत ॥ ५. **प्र०** चक्षमे । चक्षमाते । चक्षमिरे ॥ **म०** चक्षमिषे—चक्षंसे । चक्षमाथे । चक्षमिध्वे—चक्षंध्वे ॥ **उ०** चक्षमे । चक्षमिवहे—चक्षण्वहे । चक्षमिमहे—चक्षण्महे ॥ ६. क्षमिता—क्षन्ता ॥ **म०** क्षमितासे—क्षन्तासे ॥ **उ०** क्षमिताहे—क्षन्ताहे ॥ ७. क्षमिष्यते—क्षंस्यते ॥ ८. क्षमिषीष्ट—क्षंसीष्ट ॥ ९. अक्षमिष्ट । अक्षमिषाताम् । अक्षमिषत ॥ **पक्षे**—अक्षंस्त । अक्षंसाताम् । अक्षंसत । इत्यादि ॥ १०. अक्षमिष्यत—अक्षंस्यत ॥

**कर्मणि**—क्षम्यते । २. क्षम्यताम् । ९. अक्षमि ॥ **णिचि**—क्षमयति । ९. अचिक्षमत् । **सनि**—चिक्षमिषते—चिक्षंसते । **यङि**—चंक्षम्यते । **यङ्लुकि**—चंक्षमीति—चंक्षन्ति ॥ **कृत्सु**—क्षमितव्यम्—क्षन्तव्यम् । क्षमणीयम् । क्षम्यम् । क्षान्तम् । क्षमितुम्—क्षन्तुम् । क्षमित्वा—क्षान्त्वा । क्षममाणः । क्षमकः । क्षमा । क्षान्तिः । क्षमः ।

[१३४] **कमु**=कान्तौ । कान्तिरिच्छा । सकर्म० । सेट् । आत्मने० ॥

१. कामयते ॥ २. कामयताम् ॥ ३. अकामयत ॥ ४.

१. **म्वोश्च** । मान्तस्य धातोर्नकारादेशः स्यात् मकारे वकारे च परे । **अट्कुप्वाङ्नुम् व्यवायेपि** । इति नस्य णः । २. **नोदात्तोपदेशस्य मान्तस्यानाचमेः** । उपधाया वृद्धिर्न स्यच्चिणि ञिति णिति कृति च । **कमेर्णिङ्** स्वार्थे । **अत उपधायाः** (पृ० ७) इति वृद्धिः ।

कामयेत ॥ ५. कामयाञ्चक्रे–याम्बभूव–यामास ॥ **पक्षे—प्र०** चकमे। चकमाते। चकमिरे ॥ **म०** चकमिषे। चकमाथे। चकमिध्वे ॥ **उ०** चकमे। चकमिवहे। चकमिमहे ॥ ६. कामयिता--कमिता ॥ ७. कामयिष्यते--कमिष्यते ॥ ८. कामयिषीष्ट ॥ ढ्वम्--ध्वम्--कमिषीष्ट ॥ ढ्वम्--ध्वम् ॥ ९. अचीकमत--अचकमत। १०. अकामयिष्यत--अकमिष्यत ॥ **कर्मणि**—काम्यते--कम्यते। ९. अकामि। **णिचि**—कामयति। **सनि**—चिकामयिषते--चिकमिषते। यङि चंकम्यते। **यङ्लुकि**—चङ्कमीति--चङ्कन्ति। **कृत्सु**—कामयितव्यः--कमितव्यः, कामनीयः--कमनीयः। काम्यः--कम्यः। कामितः–कान्तः। कामयमानः। कामयितुम्–कमितुम्। कामयित्वा–कमित्वा–कान्त्वा। प्रकाम्य–प्रकम्य। कम्रः। कामयिता--कमिता। कमनः। कामुकः। कामुकी। कन्तुः। कम्सः ॥

[१३५] **क्वण**=शब्दे। अकर्म० सेट् परस्मै०

१. **कास्यनेकाज्ग्रहणं कर्तव्यम्**। इति आमि **अयामन्ताल्वाय्येत्न्विष्णुषु**। आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्। उपधावृद्धिः। 'कामयाम्' इति स्थितम्। ततः **कृञ्चानुप्रयुज्यते लिटि**। (पृ० ८) इति कृभ्वस्त्यनुप्रयोगे रूपम्। २. **आयादय आर्धधातुके वा**। इति णिङभावपक्षे रूपम्। ३. **णिश्री** (पृ० ११) ति कर्तरि चङि, काम् इ अत इति स्थिते, **णेरनिटि** (पृ० २५) इति णिलोपे, काम् अत इति जाते, **णौ चङी** (पृ० ४१) ति ह्रस्वे **चङी** (पृ० ११) ति द्वित्वे हलादिशेषे च ककम् अत इति भवति। ततः **सन्वल्लघुनि चङ्परेऽनग्लोपे**। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीवाऽङ्गकार्यं स्याण्णावग्लोपेऽसति। इति सन्वत्त्वे सन्यतः (पृ० १७) इति इत्वे दीर्घो लघो (पृ० १५) रिति दीर्घे अभ्यासचुत्वे अडागमे च अचीकमत इति रूपसिद्धिः। ४. णिङन्तस्य **धातोरेकाच** (पृ० १७) इति एकाच्त्वाभावाद्यङ् न। किं तु णिङभावपक्ष एव। ५. **नमिकम्पि**—(११८) इति रः। कम्राभिरावृतः स्त्रीभिः (भट्टिः ७। २४)। ६. युच्। ७ **लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्**। ८. **अर्जिदृशिकम्यमि**—इत्यादिना उप्रत्ययस्तुगागमश्च।

१. क्वणति ॥ २. क्वणतु ॥ ३. अक्वणत् ॥ ४. क्वणेत् ॥ ५. चक्वाण ॥ ६. क्वणिता ॥ ७. क्वणिष्यति ॥ ८. क्वण्यात् ॥ ९. [1]अक्वाणीत् ॥ १०. अक्वणिष्यत् ॥ **भावे**—क्वण्यते । ९. अक्वाणि । **णिचि**—क्वणयति । **सनि**—चिक्वणिषति । **यङि**—चाक्वण्यते । **यङ्लुकि**—चाक्वणीति-चाक्वन्ति । **कृत्सु**—क्वणित्वा । प्रक्वण्य । क्वणितुम् । निक्वाणः, निक्वणः । इत्यादि ॥

[१३६] **भण**=शब्दे । सकर्म० । सेट् । परस्मै० ॥

१. भणति ॥ ५. बभाण[2] । बभणतुः[3] ॥ इत्यादि **'गदति'** (३७) वत् । भाणः । भणितिः ॥

[१३७] **ओणृ**=अपनयने । सकर्म० । सेट् । परस्मै० ॥

१. ओणति ॥ ३. औणत् ॥ ५. ओणाञ्चकार[4] ॥ ६. ओणिता ॥ ९. औणीत् ॥ इत्यादि ॥

[१३८] **कनी**=दीप्तिकान्तिगतिषु । अकर्म० । सेट् । परस्मै० ॥

१. कनति ॥ ५. चकान । चकनतुः । इत्यादि **'गदति'** (३७) वत् । कन्या । कन्याया अपत्यम्=कानीनः व्यासः कर्णश्च । कनकम् । कनीन्[5] ॥

[१३९] **ष्टन**=शब्दे । अकर्म० । सेट् । परस्मै० ॥

१. स्तनति[6] ॥ ५. तस्तान । तस्तनतुः । इत्यादि **'गदति'** (३७) वत् । अभिनिष्टानः[7]-वर्णः । स्तनः । स्तन्यम् । स्तनितम् ॥

---

१. **वदव्रजेति**—(पृ० १२) वृद्धिः । लुङि सप्तमी विधा । २. बभाण च न मे मायाम् (भट्टिः १४ । ४६) । ३. आदेशादित्वादेत्वाभ्यासलोपौ न । ४. **इजादेश्च गुरुमत**—(पृ० ८) इत्याम् । ५. कनद्धनयशोभरान्कविवरान्कृपानिर्भरान् । इति वल्लीपरिणये । ६. ष्टकारस्य स्तकारभावे प्रक्रिया **'स्तम्भते'** (१२१) इति वत् । ७. **अभिनिसः स्तनः शब्दसंज्ञायाम्** । अस्मात्स्तनः सस्य मूर्धन्यः स्यात् शब्दसंज्ञायाम् ।

[१४०] **चमु**=अदने । सकर्म० । सेट् । परस्मै० ॥

१. चमति ॥ २. चमतु ॥ ३. अचमत् ॥ ४. चमेत् ॥ ५. चचाम । चेमतुः ॥ ६. चमितासि ॥ ७. चमिष्यति ॥ ८. चम्यात् ॥ ९. अचमीत् ॥ १०. अचमिष्यत् ॥

आचामति ॥ २. आचामतु ॥ ३. आचामत् ॥ ४. आचामेत् ॥ ५. आचचाम । आचेमतुः ॥ ६. आचेमिता ॥ ७. आचमिष्यति ॥ ८. आचम्यात् ॥ ९. आचमीत् ॥ १०. आचमिष्यत् ॥ **कर्मणि**—चम्यते । आचम्यते । ५. चेमे—आचेमे । ९. अचामि—आचामि । **णिचि**—चामयति—आचामयति । **सनि**—चिचमिषति । **यङि**—चञ्चम्यते । **यङ्लुकि**—चञ्चमीति—चञ्चन्ति ॥ **कृत्सु**—चमितव्यम् । चमनीयम्—आचमनीयम् । चाम्यम्-आचाम्यम् । चान्तः—आचान्तः । चमन्—आचामन् । चमित्वा-चान्त्वा । आचम्य । चमितुम् ।

[१४१] **क्रमु**=पादविक्षेपे । सकर्म० । सेट् । परस्मै० ।

१. क्रामति ॥ २. क्रामतु ॥ ३. अक्रामत् ॥ ४. क्रामेत् ॥ ५. **प्र०** चक्राम । चक्रमतुः । चक्रमुः । **म०** चक्रमिथ ॥ **उ०** चक्राम—चक्रम ॥ ६. क्रमिता ॥ ७. क्रमिष्यति ॥ ८. क्रम्यात् ॥ ९. अक्रमीत् ॥ १०. अक्रमिष्यत् ॥

---

१. **ष्ठिवुक्लमुचमां शिति** । एषामचो दीर्घः स्यात् शिति । **आङि चम इति वक्तव्यम्** । २. शित्वाभावान्न दीर्घः । ३ **नोदात्तोपदेशस्य**—(१३३) त्यत्र अनाचमेरिति पर्युदासान्न वृद्धिनिषेधः । ४. **न कम्यमिचमाम्** । इति मित्त्वनिषेधः । ५. **क्रमः परस्मैपदेषु** । क्रमेर्दीर्घः स्यात्परस्मैपदपरे शिति । ६. शिद्भिन्नपरस्मैपदपरत्वान्न दीर्घः । ७. सप्तमो लुङ् । **स्नुक्रमोरनात्मनेपदनिमित्ते** । अत्रेवट् । **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** । हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । इति न वृद्धिः ।

१. क्राम्यति ॥ २. क्राम्यतु ॥ ३. अक्राम्यत् ॥ ४. क्राम्येत् ॥ १. क्रमते ॥ २. क्रमताम् ॥ ३. अक्रमत ॥ ४. क्रमेत ॥ ५. चक्रमे । चक्रमाते । चक्रमिरे ॥ म० चक्रमिषे । चक्रमाथे । चक्रमिध्वे ॥ उ० चक्रमे । चक्रमिवहे । चक्रमिमहे ॥ ६. क्रन्ता ॥ ७. क्रंस्यते ॥ ८. क्रंसीष्ट ॥ ९. अक्रंस्त ॥ १०. अक्रंस्यत ॥

**कर्मणि**— १. क्रम्यते । २. क्रम्यताम् । ३. अक्रम्यत । ४. क्रम्येत । ५. चक्रमे । ९. अक्रमि । **णिचि**—क्रमयति- ते ॥ **सनि**—चिक्रमिषति । चिक्रंसते । **यङि**—चङ्क्रम्यते । **यङ्लुकि**—चङ्क्रमीति--चङ्क्रन्ति ॥ **कृत्सु**—क्रमितव्यम् । क्रमणीयम् । क्रम्यम् । क्रान्तः । क्रान्त्वा--क्रन्त्वा--क्रमित्वा । क्रमः । क्रिमिः । प्र, उप--आरम्भे प्रक्रमते प्रक्रम्यते । उपक्रमते उपक्रम्यते । परा पराक्रमे=पराक्रमते । आ आक्रमते क्रम्यते वा, सूर्यः । "**आङ उद्गमने**" इत्यात्मनेपदम् । सम् सङ्क्रमे, संक्राम्यति संक्रामति । वि=विक्रमे, विक्राम्यति, विक्रामति, पादकरणकविक्रमे तु **वेः पादविहरणे** । इत्यात्मनेपदं स्यात् । साधु "विक्रमते" वाजी ॥ उत्--उत्क्रमणे उत्क्रामति । अनु=अनुक्रमणे (अनुसरणे) अनुक्रामति अति=अतिक्रमणे (लङ्घने) वि+अति=व्यतिक्रमे । निः=निष्क्रमे । परि--परिक्रमे इत्यादि ॥ **वृत्तिसर्गतायनेषु क्रमः** । एष्वर्थेषु क्रमुधातोः आत्मनेपदम् । वृत्तिः

१. **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** । एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे । २. **अनुपसर्गाद्वा** । इति क्रमो विकल्पेनात्मनेपदम् । ३. अस्यात्मनेपदित्वात् **स्नुक्रमो** (पृ० ८३) । इति इण्नभवति । ४. **पोरदुपधात्** । पवर्गान्तादद्उपधात् यत् । ५ **यस्य विभाषा** । ६. **क्रमश्च क्त्वि** । क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे ।

अप्रतिबन्धः, सर्ग उत्साहः, तायनं स्फीतता । वृत्त्यादिविषयमात्मनेपदं परोपाभ्यां योग एव भवति ॥

[१४२] **अय**=गतौ । सकर्म० । सेट् । आत्मने० ॥

१. अयते ॥ २. अयताम् ॥ ३. आयत ॥ ४. अयेत ॥ ५. अयाञ्चक्रे-बभूव-आस ॥ ६. अयिता ॥ ७. अयिष्यते ॥ ८. अयिषीष्ट ॥ ९. *आयिष्ट ॥ ढ्वम्--ध्वम् ॥ १०. आयिष्यत ॥ प्लायते । पलायते । **कर्मणि**—अय्यते । ९. आयि । **णिचि**—आययति--ते । **सनि**—अयियिषते । **कृत्सु**—अयितव्यम् । अयनीयम् । अय्यम् । अयितः । अयमानः । अयितुम् । अयित्वा । पलाय्य । परा—अपसरणे, पलायते ।

[१४३] **दय**=दानगतिरक्षणहिंसादानेषु । सकर्म० । सेट् । आत्मने० ॥

१. दयते ॥ ५. दयाञ्चक्रे । 'दधति'(७)वत् ॥ दयालुः । दया ॥

[१४४] **ऊयी**=तन्तुसन्ताने । सकर्म० । सेट् । आत्मने० ॥

१. ऊयते ॥ २. ऊयताम् ॥ ३. औयत ॥ ४. ऊयेत ॥ ५. ऊयाञ्चक्रे ॥ ६. ऊयिता ॥ ७. ऊयिष्यते ॥ ८. ऊयिषीष्ट । ९. औयिष्ट औयिषाताम् ॥ १०. औयिष्यत ॥ **कर्मणि**—ऊय्यते । **णिचि**—ऊययति—ते । **सनि**—ऊयियिषते । **कृत्सु**—ऊयितव्यम् । ऊयनीयम् । ऊय्यम् । ऊतः । ऊयमानः । ऊयितुम् । ऊयित्वा, समूय्य । ऊतिः ॥

१ **दयायासश्च** । इत्याम् । * आयिष्ट मारुतिस्तत्र (भट्टि: १५ । १०४) । २. **विभाषेटः** (पृ० २३) । ३. **"उपसर्गस्यायतौ"** इति लत्वम् । ४. **दयायासश्च** । ५. **स्पृहिगृहीत्यादिना** आलुच् । ५. लुङि **एका**दशी विधा । ६ ईदित्वात् **श्वीदित** —इति निष्ठायामनिट् ।

[१४५] **पूयी**=विशरणे दुर्गन्धे च । अकर्म० । सेट् । आत्मने० ।

१. पूयते ॥ पूयताम् ॥ ३. अपूयत ॥ ४. पूयेते ॥ ५. पुपूये ॥ ६. पूयिता ॥ ७. पूयिष्यते ॥ ८. पूयिषीष्ट । ढ्वम्-ध्वम् ॥ ९. अपूयिष्ट । ढ्वम्-ध्वम् ॥ १०. अपूयिष्यत ॥ **भावे**—पूय्यते । **णिचि**—पूययति-ते । **सनि**—पुपूयिषते । **यङि**—पोपूय्यते । **यङ्लुकि**—पोपूयीति-पोपोति । **कृत्सु**—पूयितव्यम् । पूयनीयम् । पूय्यम् । पूतः । पूयित्वा । पूतिः । पूयः ॥

[१४६] **स्फायी**=वृद्धौ । अकर्म० । सेट् । आत्मने० ॥

१. स्फायते ॥ ५. पस्फाये ॥ ६. स्फायिता ॥ ७. स्फायिष्यते ॥ ८. स्फायिषीष्ट ॥ ढ्वम्-ध्वम् ॥ ९. अस्फायिष्ट ॥ ढ्वम्-ध्वम् ॥ १०. अस्फायिष्यत ॥ **भावे**—स्फाय्यते । **णिचि**—स्फाव[1]यति । **सनि**—पिस्फायिषते । **यङि**—पास्फाय्यते-**यङ्लुकि**—पास्फायीति । पास्फाति[2] ॥ **कृत्सु**—स्फायितव्यम् । स्फायनीयम् । स्फाय्यम् । स्फायमानः । स्फीतः[3] । स्फीतवान् । स्फायितुम् । स्फायित्वा । विस्फाय्य । स्फारः ।

[१४७] **तायृ**=सन्तानपालनयोः । सकर्म० । सेट् । आत्मने० ।

१. तायते ॥ २. तायताम्[4] ॥ ५. तताये '**स्फायि**' (१४६) वत् । ९. अतायि[5]-अतायिष्ट । **णिचि** तायय‍ति-ते । **यङ्लुकि**—तातायीति-तातति ॥

१. **स्फायो वः** । णौ । २. इडभावे पास्फात् ति इति स्थिते **लोपो व्योर्वलि** । इति यलोपः । ३ **स्फायः स्फी निष्ठायाम्** । ४. कामास्तेऽन्यत्र तायन्ताम् । ५. **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्** । एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे । **चिणो लुक्** (पृ० २२) इति चिणि रूपम् । एकादशो लुङ् ।

[१४८] **वल**=संवरणे । सञ्चरणे च । सकर्म० । सेट् । आत्मने० ॥

वलते । वलताम् । इत्यादि **'चकति'** (५७) वत् । विशेषस्तु--वैवले[1] ॥ वालः । वारः । वलिः । वलयः । इत्यादि ॥

[१४९] **कल**=शब्दसंख्यानयोः । शब्देऽकर्म० । संख्याने सकर्म० । सेट् । आत्मने० ॥

१. कलते ॥ २. कलताम् ॥ ३. अकलत ॥ ४. कलेत ॥ ५. चकले । चकलाते । चकलिरे ॥ ६. कलिता ॥ ७. कलिष्यते ॥ ८. कलिषीष्ट । ९. अकलिष्ट । १०. अकलिष्यत । अन्यत्सर्वं **'चकति'** (५७) वत् । कालः । काली । कलिः । कलिका ॥

[१५०] **देवृ**=देवने । अकर्म० । सेट् । आत्मने० ॥

१. देवते ॥ २. देवताम् ॥ ३. अदेवत ॥ ४. देवेत ॥ ५. दिदेवे ॥ ६. देविता ॥ ७. देविष्यते ॥ ८. देविषीष्ट ॥ ९. अदेविष्ट ॥ १०. अदेविष्यत ॥ इत्यादि **'वेष्टति'** (९४) वत् । **कृत्सु**—देवनीयम्, देवितुम् देवनमित्यादि । परि–विलापे । परिदेवते । पर्यदेविष्ट[2] । इत्यादि ।

[१५१] **ईर्ष्य**=ईर्ष्यायाम् । सकर्म० । सेट् । परस्मै० ॥

१. ईर्ष्यति ॥ २. ईर्ष्यतु ॥ ३. ऐर्ष्यत् ॥ ४. ईर्ष्येत् ॥ ५. ईर्ष्याञ्चकार–र्ष्याम्बभूव–र्ष्यामास ॥ ६. ईर्ष्यिता ॥ ७. ईर्ष्यिष्यति ॥ ८. ईर्ष्यात् । ईर्ष्यास्ताम् । ९. ऐर्ष्यीत् । ऐर्ष्यिष्टाम् । ॥ १०. ऐर्ष्यिष्यत् ॥ **कर्मणि**—ईर्ष्यते । ९. ऐर्ष्यि ।

१. **न शसददवादिगुणानम्** । इति लिटि एत्वाभ्यासोपौ न । २. पर्यदेविष्ट सा पुरः । इति भट्टिः ।

**णिचि**—ईर्ष्ययति । **सनि**--ईर्ष्यियिषति–ईर्ष्यिषिषति । **कृत्सु**—ईर्ष्यितव्यम् । ईर्ष्यणीयम् । ईर्ष्यम् । ईर्ष्यितः । ईर्ष्यन् । ईर्ष्यितुम् । ईर्ष्यित्वा । समीर्ष्य । ईर्ष्या । देवदत्ताय ईर्ष्यति ॥

[१५२] **अल**=भूषणपर्याप्तिवारणेषु । सकर्म० । सेट् । परस्मै० ॥

सर्वं **'अटति'** (१०२) वत् । ९. मा भवान् आलीत् । अलकम् । अलका । आलिः । आली ॥

[१५३] **ञि फला**=विशरणे । अकर्म० । सेट् । परस्मै० ॥

१. फलति ॥ २. फलतु ॥ ३. अफलत् ॥ ४. फलेत् ॥ ५. पफाल । फेलतुः । फेलुः ॥ **म०** फेलिथ । फेलथुः । **उ०** पफाल–पफल । फेलिव ॥ ६. फलिता । ७. फलिष्यति । ८. फल्यात् । ९. अफालीत् । १०. अफलिष्यत् ॥ **भावे**—फल्यते । **णिचि**—फालयति । ९. अपीफलत् । **सनि**—पिफलिषति । **यङि**—पम्फुल्यते । **यङ्लुकि**—पम्फुलीति--पम्फुल्ति । **कृत्सु**—फलितव्यम् । फलनीयम् । फाल्यम् । फुल्लः । फुल्लवान् । फलितुम् । फलित्वा । प्रफुल्य ॥

[१५४] **मील**=निमेषणे । सकर्म० । सेट् । परस्मै० ॥

१. मीलति ॥ २. मीलतु ॥ ३. अमीलत् ॥ ४. मीलेत् ॥

---

१. **ईर्ष्यतेस्तृतीयस्य** । तृतीयैकाच इति पक्षे । २ तृतीयव्यञ्जनस्येति पक्षे । ३ **क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः** । ४. **अतो ल्रान्तस्य** । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात् परस्मैपदपरे सिचि । ५ **तृफले** (११७) ति एत्वाभ्यासलोपौ । ६ **चरफलोश्च** । इति यङि यङ्लुकि च अभ्यासस्य नुक् । **उत्परस्यातः** । इत्यभ्यासात्परस्य चरफलयोरकारस्य उत्वम् । ७. **अनुपसर्गात्फुल्ल**(१४१)ेति निपातः ।

५. मिमील ॥ ६. मीलिता ॥ ७. मीलिष्यति ॥ ८. मील्यात् ॥ ९. अमीलीत्॥ १०. अमीलिष्यत्॥ **कर्मणि**—मील्यते। **णिचि**—मीलयति-ते । **सनि**—मिमीलिषति । **यङि**—मेमील्यते । **यङ्-लुकि**—मेमीलीति । मेमील्ति । **कृत्सु**—मीलितव्यम्—मीलनीयम् । मील्यम् । मीलित्वा । सम्मील्य । मीलितुम् । प्र—प्रमीलायाम्—प्रमीलति । प्रमीला । तन्द्री प्रमीलेत्यमरः । नि--निमीलने । निमीलति । उत्-उन्मीलने, उन्मीलति ।

[१५५] **शूल**=रुजायाम् । सङ्घाते च । अकर्म० । सेट् । परस्मै० ॥ शूलति । शुशूल । इत्यादि **'कूजति'** (८५) वत् । शूलाकरोति[1] ।

[१५६] **मूल**=प्रतिष्ठायाम् । अकर्म० । सेट् । परस्मै० ॥

मूलति । मुमूल । इत्यादि **'कूजति'** (८५) वत् । उन्मूलयति=उत्पाटयति इत्यर्थः ॥

[१५७] **फल**=निष्पत्तौ । अकर्म० । सेट् । परस्मै० ॥

१. फलति ॥ ५. पफाल । फेलतुः । फेलुः[2] ॥ शेषं **'गदति'** (३७) वत् । फलतीति फलम् । फलिनः[3] ॥ प्रतिफलति=प्रतिबिम्ब्यते ।

[१५८] **फुल्ल**=विकसने । अकर्म० । सेट् परस्मै० ॥

फुल्लति । पुफुल्ल । इत्यादि **'कुञ्चति'** (७७) वत् ।

[१५९] खेल्ल=चलने । अकर्म० सेट् । परस्मैप० ॥

---

१. **"शूलात्पाके"** इति डाच्प्रत्ययः । २. कल्पद्रुमा योगबलेन फेलुः (भट्टिः ३ । ४२) । ३. **फलबर्हाभ्यामिनज्वक्तव्यः** । इति वत्वर्थे इनच् ।

१. खेलति ॥ २. खेलतु ॥ ३. अखेलत् ॥ ४. खेलेत् ॥ ५. चिखेल । चिखिलतुः ॥ ६. खेलिता । ७. खेलिष्यति ॥ ८. खेल्यात् ॥ ९. अखेलीत् ॥ १०. अखेलिष्यत् ॥ **भावे**–खेल्यते । **णिचि**-खेलयति । **सनि**-चिखेलिषति । **यङि**–चेखेल्यते । **यङ्लुकि**–चेखेलीति--चेखेल्ति । **कृत्सु**-खेलितव्यम् । खेलनीयम् । खेल्यम् । खेलन् । खेलितुम् । खेलित्वा । प्रखेल्य । खेला ।

[१६०] **स्खल**=सञ्चलने । अकर्म० । सेट्० । **परस्मै०** ॥

१. स्खलति ॥ ५. चस्खाल ॥ चस्खलतुः । **'गदति'** (३७) वत् । **णिचि**- स्खलयति ॥

[१६१] **दल**=विशरणे । अकर्म० । सेट् । परस्मै० ॥

१. दलति ॥ २. ददाल । देलतुः ॥ इत्यादि **'ददति'** (३८) वत् । **णिचि**--दलयति ॥

[१६२] **चर**=गतौ भक्षणे च । गतावकर्मकः । सेट् । परस्मै० ।

१. चरति ॥ २. चरतु ॥ ३. अचरत् ॥ ४. चरेत् ॥ ५. चचार । चेरतुः । चेरुः ॥ **म०** चेरिथ । चेरथुः । चेर ॥ उ० चचार चचर । चेरिव । चेरिम ॥ ६. चरिता ॥ ७. चरिष्यति ॥ ८. चर्यात् । चर्यास्ताम् ॥ ९. अचारीत् ॥ १०. अचरिष्यत् ॥ उत्पूर्वकस्य, उच्चरते, सम्-सञ्चरते । **कर्मणि**—चर्यते । **णिचि**—

---

१. **निगरणचलनार्थेभ्यश्चे**ति परस्मैपदम् । २. घटादित्वान्मित्वम् । ३. घटादित्वान्मित्वम् । ४. सप्तमो लुङ् । **वदव्रजे**ति वृद्धिः । ५. **उदश्चरः सकर्मकात्** । **समस्तृतीयायुक्तात्** । पितृवाक्यमुच्चरते । रथेन सञ्चरते ।

चारयति–ते । **सनि**—चिचरिषति । **यङि**— चञ्चूर्यते[1] । **यङ्लुकि**— चञ्चुरीति–चञ्चूर्ति । **कृत्सु** —चरितव्यम् । चरणीयम् । चर्यम्[2] । सञ्चार्यम्[3] । आचर्यः[4] । आचार्यः[5] । चरितः । चरन् । चरितुम् । चरित्वा । सञ्चर्य । चराचरः । चरिष्णुः । चरित्रम्[6] । चारित्रम्[7] । गोचरो=विषयः । सञ्चरो=मार्गः ।

[१६३] **ष्ठिवु**=निरसने । सक० । सेट् । पर० ॥

१. ष्ठीवति[8] ॥ २. ष्ठीवतु ॥ ३. अष्ठीवत् ॥ ४. ष्ठीवेत् ॥ ५. टिष्ठेव–तिष्ठेव । टिष्ठिवतुः–तिष्ठिवतुः ॥ ६. ष्ठेविता ॥ ७. ष्ठेविष्यति ॥ ८. ष्ठीव्यात्[9] ॥ ९. अष्ठेवीत् ॥ १०. अष्ठेविष्यत् ॥ **कर्मणि**—ष्ठीव्यते । **णिचि**—ष्ठेवयति–ते । **यङि**—टेष्ठीव्यते–तेष्ठीव्यते । ऊठ्भाविनां वकारान्तानां यङ्लुङ्नास्ति । **सनि**— टेष्ठिविषति–तेष्ठिविषति–टुष्ठ्यूषति[10]–तुष्ठ्यूषति । **कृत्सु**—ष्ठेवितव्यम् । ष्ठीवनीयम् । ष्ठीव्यम् । ष्ठेवित्वा–ष्ठ्यूत्वा[11] । निष्ठीव्य । ष्ठ्यूतः[12] । ष्ठ्यूतिः । ष्ठीवनम्–ष्ठेवनम् ।

---

१. **लुपसदचरे**– ति भावगर्हायामेव यङ् । **चरफलोश्च (१५३)** । इत्यभ्यासस्य नुक् । **उत्परस्यातः** । (१५३) इत्युत्वम् । **हलि चे**ति दीर्घः । २ **गदमदचरयमश्चानुपसर्गे** । इति यत् । ३. **अनुपसर्गे** इति वचनात्सोपसर्गे ण्यदेव । ४ **आङि चागुरौ** । इति गुरुभिन्नार्थे यत् । ५. गुर्वर्थे तु ण्यत् । ६. **आर्तिलूधूसूखनसहचर इत्रः** । ७ स्वार्थेऽण् । ८. **ष्ठिवुक्लम्वि**ति दीर्घः । **सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्य** इति सत्वनिषेधः । ९ **हलि च** इति दीर्घः । १०. **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि सनाम्** । इवन्तेभ्यः ऋधादिभ्यश्च सन इड्वा स्यात् । इति इट्पक्षे 'टेष्ठिविषति' इडभावपक्षे **छ्वोश्शूडनुनासिके च** । सतुक्कस्य छस्य वस्य च क्रमात् श् ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । इति ऊठि यणादेशे द्विर्वचनम् । ११. उदित्वादिटो विकल्पात् इट्पक्षे **न क्त्वा सेडि**—ति कित्वनिषेधाद्गुणः । इडभावपक्षे तु कित्त्वादूठि यणादेशः । १२. **यस्य विभाषा (३५)** इत्यनिट् ।

[१६४] **जि**=जये । अकर्म० । अनिट् । परस्मै० ॥

१. **प्र०** जयति ॥ **म०** जयसि ॥ **उ०** जयामि ॥ **२.** जयतु-तात् ॥ **३.** अजयत् ॥ **४.** जयेत् ॥ **५. प्र०** जिगाय[1] । जिग्यतुः[2] । जिग्युः ॥ **म०** जिगयिथ[3]-जिगेथ । जिग्यथुः । जिग्य ॥ **उ०** जिगाय[4]-जिगय । जिग्यिव[5] । जिग्यिम ॥ ६. **प्र०** जेता । **म०** जेतासि । **उ०** जेतास्मि । ७. जेष्यति ॥ ८. * जीयात् । जीयास्ताम् । **९.** अजैषीत्[6] । अजैष्टाम् । अजैषुः । १०. अजेष्यत् ॥ **भावे**-जीयते । **५.** जिग्ये । ९. अजायि । **णिचि**-जापयति[7] । ९. अजीजपत् । **सनि**-जिगीषति[8] । ९. अजिगीषीत् । **यङि**—जेजीयते । **यङ्लुकि**--जेजयीति-जेजेति । विजयते[9] । पराजयते । **कृत्सु**--जेतव्यम् । जयनीयम् । जय्यम् । जेयम् । जितम् । जितः । जयन् । जेतुम् । जित्वा । विजित्य । जिष्णुः ॥

[१६५] **जीव**=प्राणधारणे । कर्मणो धात्वर्थेनोपसंग्रहादकर्मकः । सेट् । परस्मै० ॥

१. **सन्लिटोर्जेः** । जेः सन्लिण्णिमित्तो योऽभ्यासः ततः परस्य कुत्वं स्यात् । २. जि गि अतुस्=**इको यणचि** । ३ भारद्वाजनियमादिड्विकल्पः । ४. **णलुत्तमो वा** (पृ० ७) । ५ क्रादिनियमादिट् । **एरनेकाचः** इति यण् * **अकृत्सार्वधातुकयो**—(९४)रिति दीर्घः । ६. ल्विङि षष्ठी विधा । ७ जि+णिच् इत्यत्र । **सार्वधातुकार्धधातुकयो**रिति गुणे, जे+इ इति स्थिते **क्रीङ्जीनां णौ** । एषामेच आत्वं स्याण्णौ । इत्यात्वे जा इ इति भवति । ततः **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुक् णौ** । इति पुगागमे जाप्+इ=जापि=शप्=जापयति । ८ **इको झल्** । इगन्तात् झलादिः सन् कित्स्यात् इति कित्वान्न गुणः । **अज्झनगमां सनि** । अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । **सन्लिटो**रिति कुत्वम् । ९. **विपराभ्यां जेः** । आभ्यां परस्य जिधातोरात्मनेपदं स्यात् ।

१. जीवति ॥ ५. जिजीव । जिजीवतुः ॥ ६. जीविता ॥ ७. जीविष्यति ॥ ८. जीव्यात् ॥ ९. अजीवीत् ॥ १०. अजीविष्यत् ॥ **भावे**— जीव्यते । **णिचि**—जीवयति । अजिजीवत्[1]–अजीजिवत् ॥ **सनि**—जिजीविषति । **यङि**—जेजीव्यते । ऊठ्भाविवकारान्तत्वाद्यङ्-लुङ् नास्ति । **कृत्सु**—जीवितव्यम् । जीवनीयम् । जीव्यम् । जीवितः । जीवन् । जीवितुम् । जीवितम् । जीवनम् । जीवित्वा । उपजीव्य । यावज्जीवम्[2] । जीविका । जीवातुः[3] । जैवातृकः–आयुष्मान् । उप– आश्रये, उपजीवति=आश्रयति । उपजीवी । उपजीव्यः ।

[१६६] **पीव**=स्थौल्यै । अकर्म० । सेट् । परस्मै० ॥

१. पीवति ॥ ५. पिपीव ॥ ६. पीविता इत्यादि **'जीवति'** (१६५)वत् । **णिचि**—चङि अपीपिवत् । पीवा । पीवरः ॥

[१६७] **पुर्व**=पूरणे । सकर्म० । सेट् । परस्मै० ॥

पूर्वति[4] ॥ ५. पुपूर्व । पुपूर्वतुः ॥ ६, पूर्विता ॥ ७. पूर्विष्यति ॥ ८. पूर्व्यात् ॥ ९. अपूर्वीत् ॥ १०. अपूर्विष्यत् ॥ **कर्मणि**—पूर्व्यते । **णिचि**—पूर्वयति-ते । **सनि**—पुपूर्विषति । **यङि**—पोपूर्व्यते । **यङ्लुकि**—पोपूर्वीति–पोपूर्ति । **कृत्सु**—पूर्वितव्यम् । पूर्वणीयम् । पूर्व्यम् । पूर्वितः । पूर्वन् । पूर्वितुम् । पूर्वित्वा । प्रपूर्व्य । पूर्वः । पूः । पुरी ।

[१६८] **चर्व**=अदने । सकर्म० सेट् । परस्मै० ॥

---

१. **भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्** । एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । इति उपधाह्रस्वविकल्पः । २. **यावति विन्दजीवोः** । इति णमुल् । ३. **जीवेरातुः** । ४. **उपधायां च** (१७) इति दीर्घः ।

चर्वति ॥ चचर्व । चचर्वतुः । इत्यादि **'नर्दति'** (४१) वत् । **यङ्लुकि**—चाचर्वीति-चाचर्ति । **णिचि** चर्वयति[1] ॥

[१६९] **इवि**=व्याप्तौ । सकर्म० । सेट् । परस्मै० ॥

१. इन्वति[2] ॥ २. इन्वतु ॥ ३. ऐन्वत् ॥ ४. इन्वेत् ॥ ५. इन्वाञ्चकार ॥ ६. इन्विता ॥ ७. इन्विष्यति ॥ ८. इन्व्यात् । इन्व्यास्ताम् ॥ ९. ऐन्वीत्[3] । ऐन्विष्टाम् ॥ १०. ऐन्विष्यत् ॥ **कर्मणि**—इन्व्यते । ९. ऐन्वि । ऐन्विषाताम् । **णिचि**—इन्वयति-ते । **सनि**—इन्विविषति । कर्मादिषु **'धिन्वति'** (१७०) वत् ।

[१७०] **धिवि**=प्रीणने । सक० । सेट् । परस्मै० ॥

१. **प्र०** धिनोति[4] । धिनुतः । धिन्वन्ति ॥ **म०** धिनोषि । धिनुथः । धिनुथ ॥ **उ०** धिनोमि । धिनुवः[6]--धिन्वः । धिनुमः धिन्मः ॥ २. **प्र०** धिनोतु ॥ **म०** धिनु[7] ॥ **उ०** धिनवानि ॥ ३. **प्र०** अधिनोत् । अधिनुताम् ॥ **म०** अधिनोः ॥ **उ०** अधिनवम् । अधिनुव-अधिन्व । अधिनुम-अधिन्म ॥ ४. धिनुयात् ॥ लिडादिषु **'इन्वति'** (१६९) वत् ॥ ९. अधिन्वीत् ॥ **कर्मणि**—धिन्व्यते । **णिचि**—धिन्वयति-ते । ९. अदिधिन्वत । **सनि**—दिधिन्विषति

१. निगरणार्थत्वाण्णिचि परस्मैपदमेव । २ इदित्वान्नुम् । ३ ममर्मो लुङ् । ४ धिव + अ + ति इति स्थिते । इदित्वान्नुमि धिन्व + अ + ति इति जाते **धिन्विकृण्व्योर च** । कृतनुमोरनयोः अकारान्तादेशः स्यात् उप्रत्ययश्च शब्विषये । इति धिन उ ति इति भवति । ततः **अतो लोपः** (पृ० २३) इत्यलोपे धिनु ति इति जाते, उप्रत्ययस्य पित्सु गुणे च रूपम् । ५ तसो ङित्त्वादुकारस्य न गुणः । ६. **लोपश्चास्यान्यतरस्यां म्वोः** । असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यान्म्वोः परयोः । ७ **उतश्च प्रत्ययादसंयोगपूर्वात्** । असंयोगपूर्वो यः प्रत्ययोकारः तदन्तादङ्गात्परस्य हेर्लुक् स्यात् ।

**यङि**—देधिन्व्यते **यङ्लुकि**—देधिन्वीति-देधिन्ति । **कृत्सु**—धिन्वितव्यः । धिन्वनीयः । धिन्व्यः । धिन्वितः । धिन्वन् । धिन्वन्ती - धिन्वितुम् । धिन्वनम् । धिन्वित्वा । सन्धिन्व्य ॥

[१७१] **अव**=रक्षणगतिकान्तिप्रीत्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनाक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । सकर्म० । सेट् । परस्मै० ॥

१. अवति ॥ ५. आव ॥ ६. अविता ॥ इत्यादि **'अटति'** (१०२) वत् ॥ ऊः[1] । उवौ । उवः । ऊतिः । ऊनः । ओम्[2] । ओतुः[3] । कृष्णोतुः[4]-कृष्णौतुः । अविः । अवनिः[5] । अवनी । अवीः[6]=ऋतुमती ॥

[१७२] **धावु**=गतिशुद्ध्योः । गतावकर्मकः । सेट् । उभय० ॥

१. धावति ॥ २. धावतु । ३. अधावत् ॥ ४. धावेत् ॥ ५. दधाव ॥ ६. धाविता ॥ ७. धाविष्यति ॥ ८. धाव्यात् ॥ ९. अधावीत्[9] ॥ १०. अधाविष्यत् ॥ **आत्मनेपदे** १. धावते २. धावताम् ॥ ३. अधावत ॥ ४. धावेत ॥ ५. दधावे ॥ ६. धाविता ॥ ७. धाविष्यते ॥ ८. धाविषीष्ट ॥ ९. अधाविष्ट[9] ॥ १०. अधाविष्यत **कर्मणि**—धाव्यते । ९. अधावि । **णिचि**—धावयति[9] । **सनि**—दिधाविषति-ते । **यङि**—दाधाव्यते । यङ्लुक् नास्ति । **कृत्सु**—धावितव्यम् । धावनीयम् । धाव्यम् । धौतः[10,11] । धौतवान् । धावित्वा-धौत्वा[11] ।

---

१. **ज्वरत्वरस्रिव्यविमवामुपधायाश्च** । ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये । इति क्विपि ऊठ् । २. **अवतेष्टिलोपश्च** । इति मन् । ३. **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्** । इति तुन् । ऊठ् । ४. **ओत्वोष्ठयोः समासे वा** । ५. **अर्तिसृधृधम्यश्यवितृभ्योऽनिः** । इत्यनिः । ६. **अवितृस्तृतन्त्रिभ्य ईः** । इति ईः । ७. सप्तमी विधा । ८. एकादशी विधा । ९. चलनार्थत्वात्परस्मैपदमेव १०. **यस्य विभाषा** । इत्यनिट्त्वात् । **च्छ्वोः शूठ्** (१६३) **एत्येधत्यूठ्सु** इति वृद्धिः । ११. **उदितो वा** (३५) इति इड्विकल्पः । इडभावे **च्छ्वोः शूठ्** ।

अनुधाव्य । धावितुम् । धावन् । धावमानः । अनु–अनुधावने ; अनुधावति । अप-पलायने ; अपधावति । निर्–मार्जने ; निर्धावति ।

[१७३] **शिक्ष**=विद्योपादाने । सकर्म० । सेट् । आत्मने० ॥

१. शिक्षते ॥ २. शिक्षताम् ॥ ३. अशिक्षत । ४. शिक्षेत ॥ ५. शिशिक्षे । शिशिक्षाते ॥ ६. शिक्षिता ॥ ७. शिक्षिष्यते ॥ ८. शिक्षिषीष्ट ॥ ९. अशिक्षिष्ट ॥ १०. अशिक्षिष्यत ॥ **कर्मणि**–शिक्ष्यते । **णिचि**--शिक्षयति–ते । **सनि**–शिशिक्षिषते । **यङि**–शेशिक्ष्यते । **यङ्लुकि**–शेशिक्षीति–शेशिष्टि । **कृत्सु**–शिक्षितव्यम् । शिक्षणीयम् । शिक्ष्यम् । शिक्षमाणः । शिक्षितुम् । शिक्षित्वा । संशिक्ष्य । शिक्षा ॥

[१७४] **भिक्ष**=याञ्चायाम् । सकर्म० । सेट् । आत्मने० ॥ भिक्षते । इत्यादि‘**शिक्षति**’(१७३)वत् । भिक्षुः[1] । भिक्षाकः । भिक्षाकी । भैक्षम् ।

[१७५] **दक्ष**=वृद्धौ शीघ्रार्थे च । अकर्म० । सेट् आत्मने० ॥ दक्षते । ददक्षे । इत्यादि ‘**कत्थति**’ (२६) वत् । दक्षिणः । दक्षिणा । दक्षिणीयः । दक्षिण्यः ॥

[१७६] **दीक्ष**=मौण्ड्येज्योपनयननियमव्रतादेशेषु । अकर्म० । सेट् । आत्मने० ॥

१. दीक्षते । इत्यादि ‘**शिक्षति**’ (१७३) वत् ॥

[१७७] **ईक्ष** दर्शने । सकर्म० । सेट् आत्मने० ॥

1. **सनाशंसभिक्ष उः** (पृ० २६) ।

ईक्षते ॥ ५. ईक्षाञ्चक्रे ॥ ६. ईक्षिता ॥ ७. ईक्षिष्यते ॥ ८. ईक्षिषीष्ट ॥ ९. ऐक्षिष्ट ॥ १०. ऐक्षिष्यत ॥ **कर्मणि**-ईक्ष्यते । ९. ऐक्षि । **णिचि**-ईक्षयति-ते । ९. ऐचिक्षत्-त । **सनि**-ईचिक्षिषते । **कृत्सु**-ईक्षितव्यम् । ईक्षणीयम् । ईक्ष्यम् । ईक्षितः । ईक्षमाणः । ईक्षितुम् । ईक्षित्वा समीक्ष्य । ईक्षणम् ॥ प्रति-प्रतीक्षायां-प्रतीक्षते । उप-उपेक्षते । परि-परीक्षायां--परीक्षते । उत्+प्र. उत्प्रेक्षायां--उत्प्रेक्षते । अनु--अन्वीक्षते । इत्यादि ॥

[१७८] ईष=गतिहिंसादर्शनेषु । सकर्म० । सेट् । आत्मने० ॥

ईषते इत्यादि'**ईक्षति**'(१७७)वत् । **सनि**-ईषिषते । ईषा । मनीषा ।

[१७९] **भाष**=व्यक्तायां वाचि । सकर्म० । सेट् । आत्मने० ॥

भाषते ॥ ५. बभाषे ॥ इत्यादि '**गाधति**' (४) वत् । आ--आलापे--आभाषते । अप--निन्दायां--अपभाषते । वि--विभाषा--विकल्पः । परि-परिभाषा-सङ्केतः । परिभाषणं-सानिन्द उपालम्भः ।

[१८०] **भासृ**=दीप्तौ । अकर्म० । सेट् आत्मने० ॥

भासते । बभासे । इत्यादि '**गाधति**' । (४) वत् ॥ **णिचि**-अबीभसत्-अबभासत् । भाः भासौ भासः । भास्वरः । भासुरः ।

[१८१] **णासृ**=शब्दे । अकर्म० । सेट् । आत्मने० । नासते । ननासे । इत्यादि'**गाधति**'(४)वत् । **णिचि**--अननासत्-त । नासा । नासिका । नास्यं । नस्यम् ।

---

१. लुङि एकादशी विधा । २ **स्थेशभासपिसकसो वरच्** । ३. **णो नः** । धातोरादेर्नस्य णः स्यात् ।

[१८२] **आङः शसि**=इच्छायाम् । सकर्म० । सेट् । आत्मने० ॥

१. आशंसते ॥ २. आशंसताम् ॥ ५. आशशंसे[1] । आशशंसाते । इत्यादि '**कम्पति**' (११८) वत् । **सनि**—आशिशंसिषते । आशंसुः[2] । आशंस्य[3] ॥

[१८३] **ग्रसु**=अदने । सकर्म० । सेट् । आत्मने० ॥

ग्रसते ॥ ५. जग्रसे ॥ ६. ग्रसिता ॥ ७. ग्रसिष्यते ॥ ८. ग्रसिषीष्ट ॥ ९. अग्रसिष्ट[4] ॥ १०. अग्रसिष्यत ॥ **कर्मणि**—ग्रस्यते । **णिचि**—ग्रासयति[5] । **सनि**—जिग्रसिषते । **यङि**—जाग्रस्यते । **यङ्लुकि**—जाग्रसीति–जाग्रस्ति । **कृत्सु**—ग्रसितव्यम् । ग्रसनीयम् । ग्रस्यम् । ग्रस्तः[6] । ग्रसित्वा[7]–ग्रस्त्वा । ग्रसितुम् । ग्रसमानः । ग्रासः । ग्रसिष्णुः ।

[१८४] **ईह**=चेष्टायाम् । अकर्म० । सेट् । आत्मने० ।

१. ईहते ॥ २. ईहताम् ॥ ३. ऐहत ॥ ४. ईहेत ॥ ५. ईहाञ्चक्रे[8] ॥ ६. ईहिता ॥ ९. ऐहिष्ट[9] । इत्यादि '**ईक्षति**' (१७७) वत् । **सनि**—ईजिहिषते । ईहा ॥

[१८५] **महि**=वृद्धौ । अकर्म० । सेट् । आत्मने० ॥

१. **न शसदद्वादिगुणानाम्** । इत्यत्वाभ्यासलोपौ न । २. **सनाशंसभिक्ष उः** (पृ० २६) । आशंसुः क्षेममात्मनः (भट्टिः ७ । २४) । ३. ल्यपि-रूपम् । ४. लुङि एकादशी विधा । ५ **निगरणचलनार्थेभ्यश्च** । ६. **यस्य विभाषा** । ७. **उदितो वा** (३५) इटो विकल्पः । ८. **इजादेश्च गुरुमतोऽनृच्छः** । ९. ऐहिष्ट तं कारयितुं कृतात्मा (भट्टिः १ । ११) ।

मंहते ॥ २. मंहताम् ॥ ५. ममंहे ॥ ६. मंहिता ॥ ९. अमंहिष्ट[1] ॥ इत्यादि **'शङ्कति'** (५५) वत् ॥ **सनि**—मिमंहिषते । **यङि**—मामंह्यते । **यङ्लुकि**—मामंहीति-मामण्ठि ॥

[१८६] **गर्ह्**=कुत्सायाम् । सकर्म० । सेट् । आत्मने० ॥

१. गर्हते ॥ ५. जगर्हे ॥ इत्यादि **'स्पर्धति'** (३) वत् । गर्हा । **सनि**—जिगर्हिषते ॥

[१८७] **काशृ**=दीप्तौ । अकर्म० । सेट् । आत्मने० ॥

१. काशते ॥ ५. चकाशे[2] ॥ इत्यादि **'गाधति'** (४) वत् । काशः । नीकाशः । काशिः । काशी ॥

[१८८] **ऊह्**=वितर्के । सकर्म० सेट् । आत्मने० ॥

१. ऊहते ॥ २. ऊहताम् ॥ ३. औहत ॥ ५. ऊहाञ्चक्रे ॥ ६. ऊहिता ॥ ८. ऊहिषीष्ट ॥ ९. औहिष्ट[3] ॥ इत्यादि **'ईहति'** (१८४) वत् । **सनि**—ऊजिहिषते ॥ समूहते-समूहति[4] । ८. समुह्यात्[5] । समुह्य ॥

[१८९] **गाह्**=विलोडने । सकर्म० । वेट् । आत्मने० ॥

१. गाहते ॥ २. गाहताम् ॥ ३. अगाहत ॥ ५. **प्र०**

१ लुङि एकादशी विधा । २. चकाशिरे दौहृदलक्षणानि (चम्पू० रा. १ । २५) । ३. लुङि एकादशी विधा । औहिष्ट तान्वीरविरुद्धबुद्धीन् (भट्टिः १३ । ४८) । ४. **उपसर्गादस्यत्यूह्योर्वा वचनम्** । इति सोपसर्गादस्मादुभयपदम् । ५. **उपसर्गाद्ध्रस्व ऊहतेः** ।

जगाहे ॥ जगाहाते । जगाहिरे ॥ **म०** जगाहिषे–जघाक्षे[1] । जगाहाथे । जगाहिढ्वे[2]–ध्वे–जघाढ्वे[3] । **उ०** जगाहे । जगाहिवहे–जगाह्वहे । जगाहिमहे–जगाह्महे ॥ ६. गाहिता–गाढा[4] । ७. गाहिष्यते–घाक्ष्यते । ८. गाहिषीष्ट । ढ्वम्–ध्वम्–घाक्षीष्ट । घाक्षीढ्वम् । ९. अगाहिष्ट–अगाढ । अगाहिषाताम्–अघाक्षाताम् ॥ **म०** अगाहिढ्वम्–ध्वम्–अघाढ्वम् । १०. अगाहिष्यत–अघाक्ष्यत ।

**कर्मणि**—गाह्यते । **णिचि**—गाहयति-ते । **सनि**—जिगाहिषते-जिघाक्षते । **यङि**—जागाह्यते । **यङ्लुकि**—जागाहीति-जागाढि ॥ **कृत्सु**—गाहितव्यः–गाढव्यः । गाहनीयः । गाढ्यः । गाढः । गाहितुम्–गाढुम् । गाहित्वा–गाढ्वा । गाहमानः । अव-अवगाहे=अवगाहते–वगाहते ।

[१९०] **गृहू**=गर्हणे । सकर्म० । सेट् । आत्मने० ॥

१. गर्हते ॥ २. गर्हताम् ॥ ३. अगर्हत ॥ ४. गर्हेत ॥ ५. **प्र०** जगृहे । जगृहाते । जगृहिरे ॥ **म०** जगृहिषे–जघृक्षे । जगृहाथे । जगृहिढ्वे–ध्वे–जघृढ्वे ॥ **उ०** जगृहे । जगृहिवहे–जगृह्वहे । जगृहिमहे–जगृह्महे ॥ ६. गर्हिता–गर्ढा ॥ ७. गर्हिष्यते–घर्क्ष्यते ॥

१. जगाह्+से=**हो ढः** । जगाढ् से=**एकाचो बशो भष् झषन्तस्य स्ध्वोः** । धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे च परे । जघाढ् से=**षढोः कः सि** । षस्य ढस्य च कः स्यात्सकारे परे । जघाक् से=सस्य षत्वे कषयोगे क्षकारे=जघाक्षे । २ **विभाषेटः** । इति ढत्वविकल्पः । ३ जगाह् ध्वे इति स्थिते, हकारस्य ढकारः, धस्य ष्टुत्वेन ढः, गकारस्य भष्घकारः, पूर्वस्य ढकारस्य **ढो ढे लोपः** । ढस्य लोपः स्याड्ढे परे । इति ढलोपः । ४ गाह्+ता=गाढ्+ता=**झषस्तथोर्धोऽधः** । झषः परयोस्तथयोः धः स्यान्नतु दधातेः । गाढ्+धा=ष्टुत्वे=गाढ् ढा=ढलोपे+गाढा ।

८. गर्हिषीष्ट--घृक्षीष्ट ॥ ९. अगर्हिष्ट--अघृक्षत । १०. अगर्हिष्यत--अघर्क्ष्यत ॥ **कर्मणि**--गृह्यते । **णिचि**—गर्हयति–ते । **सनि**—जिगर्हिषते--जिघृक्षते । **यङि**—जरीगृह्यते । **यङ्लुकि**—जर्गृहीति–जरीगृहीति–जर्गर्ढि इत्यादि । **कृत्सु**—गर्हितव्यः–गर्ढव्यः । गर्हणीयः । गर्ह्यः । गर्हमाणः । गर्हित्वा–गृढ्वा । गर्हितः । विगर्ह्य । गर्हितुम्–गर्ढुम् ॥

[१९१] **घुषिर्**=अविशब्दनार्थे । सकर्म० । सेट् । परस्मै० ॥

१. घोषति ॥ २. घोषतु ॥ ३. अघोषत् ॥ ४. घोषेत् ॥ ५. जुघोष । जुघुषतुः ॥ ६. घोषिता ॥ ७. घोषिष्यति ॥ ८. घुष्यात् । घुष्यास्ताम् ॥ ९. अघुषत् । अघुषताम्--अघोषीत् । अघोषिष्टाम् । १०. अघोषिष्यत् । **कर्मणि**— घुष्यते । **णिचि**—घोषयति । ९. अजूघुषत् । **सनि**—जुघुषिषति--जुघोषिषति । **यङि**—जोघुष्यते । **यङ्लुकि**—जोघोष्टि–जोघुषीति ॥ **कृत्सु**—घोषितव्यम् । घोषणीयम् । घोष्यम् । घोषन् । घुषितम्–वाक्यम् । घुष्टा रज्जुः । उत्पादितेत्यर्थः । घुषित्वा--घोषित्वा । घोषितुम् । घोषणम् । घोषः ।

[१९२] **अक्षू**=व्याप्तौ । सकर्म० । सेट् । परस्मै० ॥

१ सेट्त्वे रूपम् । एकादशी विधा । २. अनिट्पक्षे **शल इगुपधादनिटः क्सः** । (पृ० ११) द्वादशो लुङ् । ३. विशब्दनं=प्रतिज्ञानम् । ततोऽन्यस्मिन्नर्थे । ४ **इरितो वा** (पृ० ११) इति अङ् पक्षे द्वितीया विधा । ५. अङभावपक्षे सप्तमी विधा । ६ **रलो व्युपधात्** (१४) इति क्त्वासनोः कित्त्व विकल्पः । ७ **घुषिरविशब्दने** । निष्ठायामनिट् स्यात् विशब्दनभिन्नेर्थे ।

१. अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति ॥ म० अक्ष्णोषि । अक्ष्णुथः । अक्ष्णुथ ॥ उ० अक्ष्णोमि । अक्ष्णुवः । अक्ष्णुमः ॥ २. प्र० अक्ष्णोतु--अक्ष्णुतात् । अक्ष्णुताम् । अक्ष्णुवन्तु ॥ म० अक्ष्णुहि--अक्ष्णुतात् । अक्ष्णुतम् । अक्ष्णुत ॥ उ० अक्ष्णवानि । अक्ष्णवाव । अक्ष्णवाम ॥ ३. प्र० आक्ष्णोत् । आक्ष्णुताम् । आक्ष्णुवन् ॥ म० आक्ष्णोः । आक्ष्णुतम् । आक्ष्णुत ॥ उ० आक्ष्णवम् । आक्ष्णुव । आक्ष्णुम ॥ ४. अक्ष्णुयात् । अक्ष्णुयाताम् । अक्ष्णुयुः ॥ म० अक्ष्णुयाः । अक्ष्णुयातम् । अक्ष्णुयात ॥ उ० अक्ष्णुयाम् । अक्ष्णुयाव । अक्ष्णुयाम ॥ **श्नुप्रत्ययाभावपक्षे शपि**--१. अक्षति ॥ २. अक्षतु ॥ ३. आक्षत् ॥ ४. अक्षेत् ॥

५. आनक्ष । आनक्षतुः । आनक्षुः ॥ म० आनक्षिथ--आनष्ठ । आनक्षथुः । आनक्ष ॥ उ० आनक्ष । आनक्षिव--आनक्ष्व । आनक्षिम--आनक्ष्म ॥ ६. अक्षिता । अक्षितासे- अष्टा । अष्टासे ॥ ७. अक्षिष्यति--अक्ष्यति ॥ ८. अक्ष्यात् । अक्ष्यास्ताम् ॥ ९. आक्षीत् । आक्षिष्टाम् । आक्षिषुः । आक्षीत् । आष्टाम् । आक्षुः । १०. आक्षिष्यत् --आक्ष्यत् ।

**कर्मणि**--अक्ष्यते । ९. आक्षि । **णिचि**---अक्षयति--ते । **सनि**-- अचिक्षिषति--अचिक्षति । **कृत्सु**-- अक्षितव्यम् --अष्टव्यम् ।

१. **अक्षोऽन्यतरस्याम्** । अक्षधातोः वा श्नुप्रत्ययः स्यात् कर्त्रर्थे सार्वधातुके परे । २. **अचिश्नुधातु**--इत्यादिना उवङ् । ३. **आडुत्तमस्य पिच्च** (पृ०५) । नि पित्वाद्गुणः । ४. **आडजादीनाम्** । २ । ५. **तस्मान्नुड्द्विहलः** (पृ० ८) । ६ ऊदित्वाद्वेट् । अनिट्पक्षे आनक्ष् थ=**स्कोः संयोगाद्योरन्ते च** (पृ० ९) इति कलोपे आनष्+थ=**ष्टुना ष्टुः**=आनष्ठ । ७. सेट्पक्षे रूपम् । ८. अनिटपक्षे रूपम् ।

अक्षणीयम् । अक्ष्यम् । अष्टः । अष्टिः । अक्ष्णुवन्--अक्षन् । अक्षितुम्--अष्टुम् । अक्षित्वा--अष्ट्वा । समक्ष्य ॥

[१९३] तक्षू=तनूकरणे । सकर्म० । वेट् । परस्मै० ॥

तक्ष्णोति ॥ २. तक्ष्णोतु ॥ ३. अतक्ष्णोत् ॥ ४. तक्ष्णुयात् । तक्ष्णुयाताम् ॥

१. तक्षति इत्यादि ॥ ५. ततक्ष । ततक्षतुः । ततक्षुः ॥ म० ततक्षिथ--ततष्ठ । ततक्षथुः । ततक्ष ॥ उ० ततक्ष । ततक्षिव--ततक्ष्व । ततक्षिम--ततक्ष्म ॥ ६. तक्षिता--तष्टा ॥ ७. तक्षिष्यति--तक्ष्यति ॥ ८. तक्ष्यात् । तक्ष्यास्ताम् । ९. अताक्षीत् । अताष्टाम् । अताक्षुः । पक्षे--अतक्षीत् । अतक्षिष्टाम् । अतक्षिषुः ॥ १०. अतक्षिष्यत्--अतक्ष्यत् ॥ **कर्मणि**--तक्ष्यते । **णिचि**--तक्षयति--तक्षयते । **सनि**--तितक्षिषति--तितक्षति । **यङि**--तातक्ष्यते । **यङ्लुकि**--तातक्षीति--तातष्टि । **कृत्सु**--तक्षितव्यः--तष्टव्यः । तक्षणीयः । तक्ष्यः । तष्टः । तक्ष्णुवन्--तक्षन् । तक्षितुम् । तष्टुम् । तक्षित्वा--तष्ट्वा । प्रतक्ष्य । तक्षा । पञ्चानां तक्ष्णां समाहारः, पक्षतक्षः । ग्रामस्य तक्षा ग्रामतक्षः ।

[१९४] उक्ष=सेचने । सकर्म० । सेट् । परस्मै० ॥

१. उक्षति ॥ २. उक्षतु ॥ ३. औक्षत् ॥ ४. उक्षेत् ॥ ५. उक्षाञ्चकार ॥ ६. उक्षिता ॥ ७. उक्षिष्यति ॥ ८. उक्ष्यात् ।

---

१. **तनूकरणे तक्षः** । श्नुः स्याद्वा शब्विषये । २. श्नुप्रत्ययाभावे शपि सार्वधातुके रूपम् । ३. आर्धधातुके रूपम् । ४. ऊदित्वादिट् । ५. सिचि इडभावपक्षे **वदव्रजे**ति वृद्धिः । ६. सिचि इट्पक्षे **नेटी**ति वृद्धिनिषेधे रूपम् । ७. औक्षन् शोणितमम्भोदाः (भट्टिः १७ । ९) ।

उक्ष्यास्ताम् ॥ ९. औक्षीत् ॥ १०. औक्षिष्यत् ॥ **कर्मणि**—उक्ष्यते । **णिचि**—उक्षयति-ते । **सनि**—उचिक्षिषति । **कृत्सु**—उक्षितव्यम् । उक्षणीयम् । उक्षितः । उक्षन् । उक्षितुम् । उक्षणम् । उक्षित्वा । प्रोक्ष्य । उक्षा । जातोक्षः, महोक्षः, वृद्धोक्षः । उक्ष्णां समूहः औक्षकम् ।

[१९५] **रक्ष**=पालने । सकर्म० । सेट् । परस्मै० ॥

रक्षति । ररक्ष । इत्यादि **'नर्दति'** (४१) वत् ।

[१९६] **काक्षि**=काङ्क्षायाम् । सकर्म० । सेट् । परस्मै० ॥

१. काङ्क्षति ॥ ५. चकाङ्क्ष ॥ इत्यादि **'वाञ्छति'**(८२) वत् । **कर्मणि**—काङ्क्ष्यते । **णिचि**—काङ्क्षयति-ते । **सनि**—चिकाङ्क्षिषति । **यङि**—चाकाङ्क्ष्यते । **यङ्लुकि**—चाकाङ्क्षीति-चाकांष्टि । **कृत्सु**—काङ्क्षितव्यम् । काङ्क्षितः । काङ्क्षितुम् । काङ्क्षित्वा । आकाङ्क्ष्य ॥

[१९७] **ध्वाक्षि**=घोरवाशिते च । अकर्म० । सेट् । परस्मै० ॥

१. ध्वाङ्क्षति । ५. इत्यादि **'काङ्क्षति'**(१९६) वत् । ध्वाङ्क्षः । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः ।

[१९८] **चूष**=पाने । सकर्म० । सेट् परस्मै० ॥

१. चूषति ॥ ५. चुचूष ॥ इत्यादि 'कूजति' (८५) वत् ॥ चूषणाय तमसां वनमार्गे । इति चम्पूभारते ।

[१९९] **भूष**=अलङ्कारे । सकर्म० । सेट् । परस्मै० ॥

भूषति ॥ ५. बुभूष ॥ इत्यादि **'कूजति'** (८५) वत् ॥

1. **अचतुर**इत्यादिना निपातितः । २. बुज्

[२००] **ईष**=उञ्छे[1] । सकर्म० । सेट् । परस्मै० ॥

१. ईषति । ५. ईषाञ्चकार । इत्यादि **'ईर्ष्यति'** (१५१)वत् ।

[२०१] **उष**=दाहे । सकर्म० । सेट् । परस्मै० ॥

१. ओषति[2] । ३. औषत् । ५. ओषाञ्चकार[3] । उवोष[4] । ऊषतुः । ऊषुः ॥ ९. औषिष्ट ॥ इत्यादि **'ओखति'**(६५) वत् ।

[२०२] **वृषु**=सेचने । सकर्म० । सेट् । परस्मै० ॥

१. वर्षति ॥ २. वर्षतु–तात् ॥ ३. अवर्षत् ॥ ४. वर्षेत् ॥ ५. ववर्ष । ववृषतुः । ववृषुः ॥ **म०** ववर्षिथ । ववृषथुः । ववृष ॥ **उ०** ववर्ष । ववृषिव । ववृषिम ॥ ६. वर्षिता ॥ ७. वर्षिष्यति ॥ ८. वृष्यात् । वृष्यास्ताम् ॥ ९. अवर्षीत्[5] ॥ १०. अवर्षिष्यत् ॥ **कर्मणि**—वृष्यते । ९. अवर्षि । **णिचि**—वर्षयति--ते । **सनि**—विवर्षिषति । **यङि**—वरीवृष्यते[6] । **यङ्लुकि**— वर्वृषीति--वरिवृषीति--वरीवृषीति । **कृत्सु**—वर्षितव्यम् । वर्षणीयम् । वृष्यम्[7]--वर्ष्यम् । वृष्टः[8] । वर्षन् । वर्षित्वा[9]--वृष्ट्वा । अभिवृष्य ।

[२०३] **घृषु**=सङ्घर्षे । सकर्म० । सेट् । परस्मै० ॥

घर्षति । जघर्ष इत्यादि **'वर्षति'** (२०२) वत् ।

---

१. उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् । २. लघूपधगुणः । ३. **उषविदजागृभ्योऽन्यतरस्याम्** । एभ्यो लिट्याम्वा स्यात् । इति विकल्पेन आम् । ओषाञ्चकार कामाग्निः दशवक्त्रम् (भट्टिः ६ । १) । ४. आमभावपक्षे **लिटि धातोरि**ति द्विर्वचनादि । ५ सप्तमो लुङ् । ६. **रीगृदुपधस्य च (७३)** । ७. **विभाषा कृवृषोः** । इति वा क्यप् । पक्षे—ऋहलोर्ण्यत् । ८. **यस्य विभाषा (३५)** । ९. **उदितो वा (३५)** ।

[२०४] **घस्लृँ**=अदने । अकर्म० । सेट् । परस्मै० ॥

१. घसति ॥ २. घसतु ॥ ३. अघसत् ॥ ४. घसेत् ॥ ६. घस्ता ॥ ७. घत्स्यति[2] ॥ ८. आशीर्लिङि अस्य प्रयागो नास्ति ॥ ९. अघसत्[3] ॥ १०. अघत्स्यात् ॥ **सनि**—जिघत्सति । **कृत्सु**—घस्तव्यम् । घस्तम् । घसन् । घस्तुम् । घस्त्वा । निघस्य । घस्मरः ।

[२०५] **हसे**=हसने । अकर्म० । सेट् । परस्मै० ॥

१. हसति ॥ २. हसतु ॥ ३. अहसत् ॥ ४. हसेत् ॥ ५. जहास[4] । जहसतुः । जहसुः ॥ ६. हसिता ॥ ७. हसिष्यति ॥ ८. हस्यात् ॥ ९. अहसीत्[5] ॥ १०. अहसिष्यत् ॥ इत्यादि **'गदति'** (३७) वत् । हसः । हासः । हस्तः । उप-उपहासे (हास्यपूर्वकनिन्दने) उपहसति ॥

[२०६] **शंसु**=स्तुतौ । सकर्म० । सेट् । परस्मै० ॥

१. शंसति ॥ २. शंसतु ॥ ३. अशंसत् ॥ ४. शंसेत् ॥ ५. शशंस । शशंसतुः । शशंसुः ॥ ६. शंसिता ॥ ७. शंसिष्यति ॥ ८. शस्यात्[6] ॥ ९. अशंसीत्[7] ॥ १०. अशंसिष्यत् ॥ **कर्मणि**—शस्यते । **णिचि**—शंसयति-ते । **सनि**—शिशंसिषति । **यङि**—शाशस्यते । **यङ्लुकि**—शाशंसीति-शाशंस्ति । **कृत्सु**—शंसितव्यः ।

---

१. अयं न सार्वत्रिकः । **लिट्यन्यतरस्याम्**इत्यदेर्घस्लादेशविधानात् । अत एव अस्य लिटि प्रयोगो नास्ति । २. **सस्यार्धधातुके** । सस्य तः स्यात्सादावार्धधातुके परे । ३. लृदित्वादङ् । द्वितीयो लुङ् । ४. परानीकं जहास च (भट्टिः १४ । ४४) । ५. सप्तमो लुङ् । एदित्वात् **ह्म्यन्तक्षण**—(१४१)ति न वृद्धिः । ६. **अनिदिताम्**इति नलोपः । ७. सप्तमो लुङ् । प्राशंसीत्तं निशाचरः (भट्टिः १५ । १५) ।

शंसनीयः । शस्यः[1]-शंस्यः । शस्तः । शंसन् । शंसितुम् । शंसित्वा-शस्त्वा । प्रशस्य । नृशंसः । प्रशस्यः । श्रेयान्[2] । श्रेष्ठः । ज्यायान्[3] । ज्येष्ठः ॥

[२०७] मह=पूजायाम् । सकर्म० । सेट् । परस्मै० ॥

१. महति ॥ ममाह । मेहतुः । मेहुः ॥ इत्यादि **'गदति'** (३७) वत् । ९. अमहीत्[4] । मही । महिषः । महान्[5] । महती । महतो भावः-महिमा ।

[२०८] रह=त्यागे । सकर्म० । सेट् । परस्मै० ॥

१. रहति ॥ ५. रराह । रेहतुः । रेहुः । इत्यादि **'रदति'** (३८) वत् ॥ ९. अरहीत् । रहः । रहस्यम् । विरहः ॥

[२०९] बृहि=वृद्धौ । अकर्म० । सेट् । परस्मै० ॥

बृंहति । ५. बबृंह । ६. बृंहिता । ७. बृंहिष्यति । ८. बृंह्यात्[6] । ९. अबृंहीत् । १०. अबृंहिष्यत् । **कर्मणि**—बृंह्यते । **णिचि**—बृंहयति-ते । **सनि**—बिबृंहिषति । **यङि**—बरीबृंह्यते । **यङ्लुकि**—बरीबृंहीति-बरीबृंहीति । बरीबृण्ढि । इत्यादि । **कृत्सु**—बृंहितव्यम् । बृंहणीयम् । बृंह्यम् । बृंहितः । बृंहितम्-करिगर्जितम् । बृंहितुम् । बृंहित्वा प्रबृंह्य । परिबृढः ॥

[२१०] अर्ह=पूजायाम् । सकर्म० । सेट् । परस्मै० ।

---

१. **शंसिदुहिगुहिभ्यो वेति वक्तव्यम्** । इति क्यपि नलोपः । क्यबभावे ण्यत् । २. **प्रशस्यस्य श्रः** । ३. **ज्य च** । ४. सप्तमो लुङ् । ५ **वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च** । इत्यतिप्रत्ययान्तो निपातः । ६. **अनिदितामि**त्युक्तत्वान्नलोपो न ।

१. अर्हति ॥ ५. आनर्ह ॥ ६. अर्हिता ॥ ८. अर्ह्यात् ॥ ९. आर्हीत् ॥ १०. आर्हिष्यत् ॥ **कर्मणि**—अर्ह्यते । **णिचि**—अर्हयति-ते । **सनि**—अर्जिहिषति । **कृत्सु**—अर्हितव्यः । अर्हणीयः । अर्ह्यः । अर्हितः । अर्हन्[२] । अर्हतो भावः—आर्हन्त्यम् । अर्हितुम् । अर्हणम् । अर्हित्वा । समर्ह्य ॥

[२११] **द्युत**=दीप्तौ । अकर्म० । सेट् । आत्मने० ॥

१. द्योतते ॥ २. द्योतताम् ॥ ३. अद्योतत ॥ ४. द्योतेत ॥ ५. दिद्युते[३] । दिद्युताते । दिद्युतिरे ॥ ६. द्योतिता ॥ ७. द्योतिष्यते ॥ ८. द्योतिषीष्ट ॥ ९. अद्योतिष्ट[४] । अद्योतिषाताम् । अद्योतिषत ॥ **पक्षे**—अद्युतत्[५] । अद्युतताम् । अद्युतन् ॥ १०. अद्योतिष्यत ॥ **भावे**—द्युत्यते । ९. अद्योति । **णिचि**—द्योतयति-ते । **सनि**—दिद्युतिषते[६]-दिद्योतिषते । **यङि**—देद्युत्यते । **यङ्लुकि**—देद्युतीति-देद्योत्ति ॥ **कृत्सु**—द्योतितव्यम् । द्योतनीयम् । द्योत्यम् । द्युतितः । द्योतितुम् । द्युतित्वा—द्योतित्वा । विद्युत्य । विद्युत् । ज्योतिः[७] । उद्योतः=औज्ज्वल्यम् ॥

[२१२] **ञि मिदा**=स्नेहने । सकर्म० । सेट् । आत्मने० ॥ द्युतादिः ॥

---

१. सप्तमो लुङ् । २. **अर्हः प्रशंसायाम्** । इति शता । ३ **द्युतिस्वाप्योः संप्रसारणम्** । अनयोरभ्यासस्य सम्प्रसारणं स्यात् । **इग्यणः सम्प्रसारणम्** । यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् । ४ एकादशो लुङ् । ५ **द्युद्भ्यो लुङि** । द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि । इति वा परस्मैपदम् । **परस्मैपदपक्षे—पुषादिद्युता**— पृ० १०) दिति च्लेरङ् । द्वितीयो लुङ् । ६. **रलो व्युपधा**—(१४ दिति सनि क्त्वाप्रत्यये च वा कित्त्वम् । कित्त्वाभावपक्षे गुणः । कित्त्वपक्षे गुणाभावः । ७ **द्युतेरिसन्नादेश्च जः** ।

१. मेर्दते ॥ २. मेदताम् ॥ ३. अमेदत ॥ ४. मेदेत ॥ ५. मिमिदे ॥ ६. मेदिता ॥ ७. मेदिष्यते ॥ ८. मेदिषीष्ट ॥ ९. अमेदिष्ट—अमिर्दत् ॥ १०. अमेदिष्यत ॥ **कर्मणि**—मिद्यते। **णिचि**–मेदयति-ते । **सनि**—मिमिदिषते–मिमेदिषते । **यङि**—मेमिद्यते । **यङ्लुकि**—मेमिदीति-मेमेत्ति । **कृत्सु**—मेदितव्यम् । मेदनीयम् । मेद्यम् । मिदितः[3]-मेदित.—मिन्नम्[4] । मेदन् । मेदितुम् । मेदित्वा–मिदित्वा ।

[२१३] **ञि ष्विदा**=स्नेहनमोचनयोः । सकर्म० । सेट् आत्मने० ॥

स्वेदते ॥ सिष्विदे । इत्यादि **'मेदति'** (२१२) वत् ॥ ९. अस्विदत्-अस्वेदिष्ट । **कर्मणि**—स्विद्यते । **णिचि**—स्वेदयति । ९. असिष्विदत् ॥ **सनि**—सिस्विदिषते—सिस्वेदिषते । **यङि**—सेष्विद्यते । **यङ्लुकि**—सेष्वेत्ति—**कृत्सु**—**'मेदति'** (२१२) वत् ॥

[२१४] **रुच**=दीप्तौ । अभिप्रीतौ च । अकर्म० । सेट् । आत्मने० ॥

रोचते ॥ ५. रुरुचे ॥ ६. रोचिता ॥ ७. रोचिष्यते ॥ ८. रोचिषीष्ट ॥ ९. अरोचिष्ट–अरुचत् । १०. अरोचिष्यत । **कर्मणि**—

१. **मिदेर्गुणः**। मिदेरिको गुणः स्यादित्संज्ञकशकारादौ । २. द्युतादित्वाल्लुङि पूर्ववत्परस्मैपदमङ् च । ३. **उदुपधाद्भावादिकर्मणोरन्यतरस्याम्**। उदुपधात्परा भावादिकर्मणोः सेट् निष्ठा वा किन्न स्यात् । किन्त्वपक्षे गुणाभावः । अकित्त्वपक्षे गुणः । ४. **ञीतः क्तः** । इति वर्तमाने क्तः । **रदाभ्या**–(२१) मिति दकारतकारयोर्नत्वे रूपम् । ५. **द्युद्भ्यो लुङि** (२११) इति वा परस्मैपदम् अङ् च ।

रुच्यते । **णिचि**—रोचयते[1] । **सनि**—रुरुचिषते–रुरोचिषते । अस्य[2] यङ्यङ्लुकौ न स्तः । **कृत्सु**—रोचितव्यम् । रोचनीयम् । रुच्यम् । रोचमानः । रोचितः–रुचितः । रोचितुम्–रुचितुम् । रोचित्वा–रुचित्वा । रोचनः । विरोचनः (सूर्यः) रोचिष्णुः[3] । रोचिः । रुक्मम् । रुचकः ॥

[२१५] **घुट**=परिवर्तने । सकर्म० । सेट् आत्मने० ॥

घोटते । जुघुटे । इत्यादि **'रोचति'** (२१४) वत् । घोटः । घोटकः । घुटिका ॥

[२१६] **शुभ**=दीप्तौ । अकर्म० । सेट् । आत्मने० ॥

शोभते ॥ शुशुभे । इत्यादि **'रोचति'** (२१४) वत् ॥

[२१७] **क्षुभ**=सञ्चलने । अकर्म० । सेट् । आत्मने० ॥

क्षोभते ॥ चुक्षुभे । इत्यादि **'रोचति'** (२१४) वत् । **णिचि**–क्षोभयति[4] । क्षुब्धः[5] । क्षुभितः–क्षोभितः ।

[२१८] **स्रंसु**=अवस्रंसने । अकर्म० । सेट् आत्मने० ॥

स्रंसते ॥ ५. सस्रंसे ॥ ६. स्रंसिता ॥ ७. स्रंसिष्यते ॥ ८. स्रंसिषीष्ट ॥ ९. अस्रंसिष्ट–अस्रसत्[6] ॥ १०. अस्रंसिष्यत ॥

१. **न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः** । एभ्यो ण्यन्तेभ्यः परस्मैपदं न । २. "भृशं रोचते" इत्यत्रैवाऽयं यङ्निषेधः । पौनः पुन्ये तु 'रोरुच्यते' इति स्यादेव । "रोरुचीति, रोरोक्ति" इति यङ्लुगन्तरूपं "भृशं रोचते" इत्यर्थे दृश्यत-इति वृत्त्यादौ । ३ रोचिष्णवः सविस्फूर्जाः (भट्टिः ७ । २) । ४. चलनार्थत्वात्परस्मैपदमेव । ५. **क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु** । इति निपातनादनिट्त्वम् । ६. अस्रसच्चाहतो मूर्ध्नि (भट्टिः १५ । ८४) ।

**कर्मणि**—स्रस्यते । **णिचि**—स्रंसयति । **सनि**--सिस्रंसिषते । **यङि**—सनीस्रस्यते । **यङ्लुकि**-सनीस्रंसीति–सनीस्रंस्ति । **कृत्सु**–स्रंसितव्यः । स्रंसनीयः । स्रंसमानः । स्रंसितुम् । स्रंसित्वा--स्रस्त्वा । विस्रस्य । स्रस्तः ।

[२१९] ध्वंसु=अवस्रंसने । गतौ च । सकर्म० । सेट् आत्मने० । **'स्रंसति'** (२१८) वत् । **यङि**—दनीध्वस्यते । **यङ्लुकि**–दनीध्वंसीति–दनीध्वंस्ति ।

[२२०] **स्रम्भु**=विश्वासे । प्रायेणायं विपूर्वः । अकर्म० । सेट् । आत्मने० । **'स्रंसति'** (२१८) वत् । विस्रम्भते । विस्रम्भः ।

[२२१] **वृतु**=वर्तने । अकर्म० । सेट् आत्मने० ।

१. वर्तते । २. वर्तताम् । ३. अवर्तत । ४. वर्तेत । ५. ववृते । ववृताते । ववृतिरे ॥ ६. वर्तिता । ७. वर्तिष्यते–वर्त्स्यति । ८. वर्तिषीष्ट । ९. अवृतत्–अवर्तिष्ट । १०. अवृत्स्यत्–अवर्तिष्यत । **भावे**–वृत्यते । ६. वर्तिष्यते ॥ **णिचि**–वर्तयति-ते । **सनि**–विवृत्सति–विवर्तिषते । **यङि**—वरीवृत्यते । **यङ्लुकि**—वर्वृतीति–वरिवृतीति–वरीवृतीति । वर्वर्ति इत्यादि । **कृत्सु**—वर्तितव्यम् । वर्तनीयम् । वर्त्यम् । वर्तमानः । वर्तितुम् । वर्तित्वा–वृत्त्वा । आवृत्य ॥ अति–अतिक्रमे–अतिवर्तते । अनु–अनुगमने (अनुगमनं=सहगमनं, अनुरोधः सेवा) अप–अपवर्त्तने (संक्षिप्तीकरणे) वि+अप=निवृत्तौ । आ–आवर्त्तने--आव-

---

१. **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्** । इत्यभ्यासस्य नीक् ।
२. **वृद्भ्यः स्यसनोः** । वृतादिभ्यः परस्मैपदं वा स्यात् स्ये सनि च ।
३. **न वृद्भ्यश्चतुर्भ्यः** । एभ्यः सकारादेरार्धधातुकस्य इण्ण स्यात्तङानयोरभावे ।
४. **रीगृदुपधस्य च** (७३) इति रीगागमः ।

र्तते । आवृत्तिः । वि+आ=व्यावृत्तौ । उद्–उद्वर्तने । निर्–निष्पत्ति.
प्र–प्रवर्तने=प्रवर्तते । वि=विवर्तनम्--घूर्णनम् । परि–परिवर्तने=परिवर्तते
इत्यादि ।

[२२२] **वृधु**=वृद्धौ । अकर्म० । सेट् । आत्मने० ॥

वर्धते । ववृधे । इत्यादि **'वर्तति'** (२२१) वत् ।

[२२३] **स्यन्दू**=प्रस्रवणे । अकर्म० । सेट् । आत्मने० ॥

१. स्यन्दते ॥ २. स्यन्दताम् ॥ ३. अस्यन्दत ॥ ४. स्यन्देत ५. **प्र०** सस्यन्दे सस्यन्दाते । सस्यन्दिरे ॥ **म०** सस्यन्दिषे–सस्यन्त्से । सस्यन्दाथे–सस्यन्दिध्वे–सस्यन्ध्वे ॥ **उ०** सस्यन्दे । सस्यन्दिवहे–सस्यन्द्वहे । सस्यन्दिमहे–सस्यन्द्महे ॥ ६. स्यन्दिता–स्यन्ता ॥ ७. स्यन्दिष्यते–स्यन्त्स्यते–स्यन्त्स्यति । ८. स्यन्दिषीष्ट–स्यन्त्सीष्ट । ९. अस्यन्दिष्ट–अस्यन्त–अस्यदत् । १०. अस्यन्दिष्यत–अस्यन्त्स्यत–अस्यन्त्स्यत् । **भावे**—स्यन्द्यते । **णिचि**—स्यन्दयति-ते । **सनि**—सिस्यन्दिषते–सिस्यन्त्सते–सिस्यन्त्सति । **यङि**—सास्यद्यते । **यङ्लुकि**—सास्यन्दीति–सास्यन्ति । **कृत्सु**—स्यन्दितव्यम् । स्यन्तव्यम् । स्यन्दनीयम् । स्यन्द्यम् । स्यन्नः । स्यन्दमानः । स्यन्दितुम् । स्यन्दित्वा--स्यन्त्वा । प्रस्यन्द्य । स्यदः । स्यन्दः । सिन्धुः । स्यन्दनः । अनुष्यन्दः–अनुस्यन्दः । निष्यन्दः इत्यादि ।

१. **"वृद्भ्यः स्यसनोः"** । इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यात् **"न वृद्भ्यः चतुर्भ्यः"** । इति निषेधः । २. **"अनुविपर्यभिनिभ्यःस्यन्दतेरप्राणिषु"** । इति विभाषा षत्वम् ।

[२२४] क्रृपू=सामर्थ्ये । अकर्म० । वेट् । आत्मने० ॥

१. कल्पते[1] ॥ २. कल्पताम् ॥ ३. अकल्पत ॥ ४. कल्पेत ॥ ५. प्र० चक्लृपे । चक्लृपाते । चक्लृपिरे । म० चक्लृपिषे–चक्लृप्से । चक्लृपाथे । चक्लृपिढ्वे–ध्वे–चक्लृब्ध्वे । उ० चक्लृपे । चक्लृपिवहे–चक्लृप्वहे । चक्लृपिमहे–चक्लृप्महे ॥ ६. प्र० कल्प्ता[2] । म० कल्प्तासि । उ० कल्प्तास्मि ॥ प्र० कल्प्ता–कल्पिता । म० कल्प्तासे[3]–कल्पितासे उ० कल्प्ताहे–कल्पिताहे ॥ ७. कल्प्स्यति–कल्प्स्यते–कल्पिष्यते । ८. कल्पिषीष्ट--क्लृप्सीष्ट । कल्पिषीयास्ताम्–क्लृप्सीयास्ताम् । ९. अक्लृपत्[4]--अकल्पिष्ट--अक्लृप्त । १०. अकल्प्स्यत्--अकल्पिष्यत--अक्लृप्स्यत । भावे--क्लृप्यते । णिचि–कल्पयति--ते । सनि–चिक्लृप्सति–चिक्लृप्सते--चिकल्पिषते । यङि—चलीक्लृप्यते । यङ्लुकि--चल्कृपीति[5]--चलिक्रृपीति--चलीक्लृपीति । इत्यादि । कृत्सु--कल्पितव्यम्–कल्प्तव्यम् । कल्पनीयम् । कल्प्यम्[6] । क्लृप्तः[7] । कल्पमानः । कल्पितुम् । कल्पनम् । कल्पित्वा--क्लृप्त्वा । परिक्लृप्य ॥ सं-सङ्कल्पे=सङ्कल्पते । मानसवृत्त्या विषयीकरोति । वि–सन्देहे-विकल्पते । द्युतादिर्वृतादिश्च सम्पूर्णौ ॥

---

१ **कृपो रो लः** । कृपो यो रेफस्तस्य लः स्यात् । २. **लुटि च क्लृपः** । लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् । **तासि च क्लृपः** । क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेण्ण स्यात्तङानयोरभावे । ३ ऊदित्वात् आत्मनेपदे वेट् । ४. **द्युद्भ्यो लुङि** । (२११) इति परस्मैपदम् । द्युतादित्वादङ् । द्वितीयो लुङ् । ५. **रीगृदुपधस्य च** । (७३) ६. **ऋदुपधाच्चाक्लृपिचृतेः** । इति सूत्रे अक्लृपीत्युक्तत्वान्न क्यप् । ७ **यस्य विभाषा** (३५) ।

[२२५] **घट**=चेष्टायाम् । अकर्म० । सेट् । आत्मने० ॥ मित् ॥

१. घटते ॥ ५. जघटे ॥ ६. घटिता ॥ ९. अघटिष्ट । इत्यादि **'कलति'** (१४९) वत् । **णिचि**--घटयति--ते । **सनि**--जिघटिषते । **यङि**-जाघट्यते । **यङ्लुकि**--जाघट्टि । घटः । घटी । सं+घटि=योजने=सङ्घटयति । वि —वियोजने=विघटयति ।

[२२६] **व्यथ**=भयसञ्चलनयोः । अकर्म० । सेट् । आत्मने० ॥

व्यथते । ५. विव्यथे । विव्यथाते । विव्यथिरे । ६. व्यथिता । ७. व्यथिष्यते । ८. व्यथिषीष्ट । ९. अव्यथिष्ट । इत्यादि **'स्वदति'** (१६)वत् । व्यथा । विधुरः ।

[२२७] **प्रथ**=प्रख्याने । अकर्म० । सेट् । आत्मने० । मित् ।

१. प्रथते । पप्रथे । इत्यादि **'त्रपति'** (११७) वत् ॥ अत्र सर्वं सेट् । इयानेव विशेषः । **णिचि**—प्रथयति । पृथिवी । प्रथा । पृथुः । प्रथिमा ॥

[२२८] **ञि त्वरा**=संभ्रमे । अकर्म० । सेट् । आत्मने० । मित् ।

१. त्वरते ॥ ५. तत्वरे ॥ ६. त्वरिता ॥ ८. त्वरिषीष्ट ॥ ९. अत्वरिष्ट ॥ **भावे**—त्वर्यते । **णिचि**—त्वरयति-ते । ९. अतित्वरत्-त । **यङि**—तात्वर्यते । **यङ्लुकि**—तात्वरीति । तातूर्ति । **सनि**—तित्वरिषते । **कृत्सु**—त्वरितव्यम् । त्वरणीयम् । त्वार्यम् ।

१. **घटादयो मितः** । **मितां ह्रस्वः** । मितामुपधाया ह्रस्वः स्याण्णौ ।
२ **व्यथो लिटि** । व्यथोऽभ्यासस्य सम्प्रसारणं स्यात् लिटि ।

तूर्णः[1]- त्वरितः । त्वरमाणः । त्वरित्वा । प्रत्वर्य । त्वरा । सत्वरम् । तूः[2] । तुरौ । तुरः ॥

[२२९] **ज्वर**=रोगे । अकर्म० । सेट् । परस्मै० । मित् ॥

१. ज्वरति । ५. जज्वार । जज्वरतुः । ६. ज्वरिता । इत्यादि '**व्रजति**' (९३) वत् । **णिचि**—ज्वरयति-ते । ९. अजिज्वरत्-त ॥

[२३०] **चक**=तृप्तौ । अकर्म० । सेट् । परस्मै० । मित् ॥

चकति । चचाक । इत्यादि '**गदति**' (२७) वत् ॥ **णिचि**—चकयति ॥

[२३१] **लगे**=सङ्गे । सकर्म० । सेट् । परस्मै० । मित् ॥

१. लगति ॥ ५. ललाग । लेगतुः ॥ ९. अलगीत्[3] ॥ इत्यादि '**चरति**' (१६२) वत् ॥ **णिचि**—लगयति । **कृत्सु**— लगितम् – लग्नम् ॥

[२३२] **राजृ**=दीप्तौ । अकर्म० ॥ सेट् । उभ० । फणादिः ॥

१. राजति-ते ॥ २. राजतु--ताम् ॥ ३. अराजत्--त ॥ ४. राजेत्--त ॥ ५. पर० प्र० रराज । रेजतुः--रराजतुः[4] । रेजुः--रराजुः ॥ म० रराजिथ--रेजिथ । रराजथुः--रेजथुः । रराज--रेज ॥ उ० रराज । रराजिव--रेजिव । रराजिम--रेजिम । **आत्म**० प्र०

---

१ **रुष्यमत्वरसंघुषाऽऽस्वनाम्** । इति निष्ठायां वेट् । अनिट्पक्षे **ज्वरत्वरे** । (१७१) ति वकारस्य ऊठि तूर्णः । २. पूर्ववदूठ् ।

३. एदित्वात् **ह्म्यन्ते**-(१४१ ति न वृद्धिः । ४ **क्षुब्धस्वान्ते** (२१७) ति सक्तार्थे अनिट्त्वनत्वे निपात्येते । ५ **फणां च सप्तानाम्** । फणादीनां सप्ता-

रेजे। रेजाते। रेजिरे ॥ **म०** रेजिषे। रेजाथे। रेजिध्वे ॥ **उ०** रेजे। रेजिवहे। रेजिमहे ॥ **पक्षे**—रराजे। रराजाते। रराजिरे। इत्यादि ॥ ६. **प्र०** राजिता ॥ **म०** राजितासि--से ॥ उ० राजितास्मि–राजिताहे ॥ ७. राजिष्यति–ते। ८. राज्यात्–राजिषीष्ट ॥ ९. [1]अराजीत्--[2]अराजिष्ट ॥

**भावे**—राज्यते। **णिचि**—राजयति--ते। **सनि**—रिराजिषति--ते। **यङि**—राराज्यते। **यङ्लुकि**—राराजीति–राराष्टि। **कृत्सु**—राजितव्यम्। राजनीयम्। नीराजनीयम्। राज्यम्। राजितः। राजन्। राजमानः। नीराजनम्। राजितुम्। राजित्वा। नीराज्य ॥ राजा। अधिको राजा=अधिराजः। दन्तानां राजा=राजदन्तः। शोभनो राजा=सुराजः। कुत्सितो राजा=किंराजः। राजते इति राट्। संराट्। राज्ञां समूहो राजकम्।

[२३३] **टुभ्राजृ**=दीप्तौ। अक०। सेट्। आत्म०। फणादि ॥

१. भ्राजते ॥ २. भ्राजताम् ॥ ३. अभ्राजत ॥ ४. भ्राजेत ॥ ५. **प्र०** [3]बभ्राजे। बभ्राजाते। बभ्राजिरे। पक्षे–भ्रेजे। भ्रेजाते। भ्रेजिरे ॥ ६. भ्राजिता ॥ ७. भ्राजिष्यते ॥ ८. भ्राजिषीष्ट ॥ ९. अभ्राजिष्ट ॥ १०. अभ्राजिष्यत ॥ इत्यादि '**काशति**' (१८७) वत् ॥

[२३४] **स्वन**=शब्दे। अकर्म०। सेट्। परस्मै०। फणादि ॥

१. स्वनति ॥ २. स्वनतु ॥ ५. **प्र०** सस्वान। [4]सस्वनतुः–स्वेनतुः। [5]सस्वनुः–[6]स्वेनुः ॥ **म०** सस्वनिथ–स्वेनिथ। सस्वनथुः–

नाम् एत्वाभ्यासलोपौ वा स्तः। १ लुङि सप्तमी विधा। २. एकादशो लुङ् ॥ ३. फणादित्वादेत्वाभ्यासलोपौ। ४. पूर्ववत्। ५. पूर्णाः पौराश्च सस्वनुः (भट्टिः। १४। ३)। ६. मृदङ्गा धीरमास्वेनुः (भट्टिः १४। ४)।

स्वेनथुः । सस्वन-स्वेन ॥ उ० सस्वान-सस्वन । सस्वनिव-स्वेनिव । सस्वनिम-स्वेनिम ॥ शेषं **'गदति'** (३७) वत् । विष्वणति[1] । अवष्वणाति । स्वनः । स्वानः । निस्वनः । निस्वानः ॥

[२३५] **ध्वन**=शब्दे । अकर्म० । सेट् । परस्मै० ॥

ध्वनति ॥ दध्वान । दध्वनतुः ॥ इत्यादि **'गदति'** (३७) वत् ॥ ध्वान्तम्[2]—ध्वनितम् । ध्वनिः ॥

[२३६] **ज्वल**=दीप्तौ । अकर्म० सेट् । परस्मै० ॥ मित् ॥

१. ज्वलति ॥ ५. जज्वाल[3] । जज्वलतुः । जज्वलुः ॥ **'ज्वरति'** (२२९) वत् ॥ **णिचि**—ज्वलयति-ते[4]-ज्वालयति-ते । प्रज्वलयति-ते[5] । **सनि**—जिज्वालिषति । **यङि**—जाज्वल्यते । **यङ्लुकि**—जाज्वलीति—जाज्वल्ति । **कृत्सु**—जलितव्यम् । ज्वलनीयम् । ज्वाल्यम् । ज्वलितः । ज्वलन् । ज्वलितुम् । ज्वलनम् । ज्वलित्वा । प्रज्वल्य ॥ ज्वाला । ज्वलनः ।

[२३७] **चल**=कम्पने । अकर्म० । सेट् । परस्मै० । मित् ॥

चलति । चचाल । चेलतुः[6] । चेलुः ॥ इत्यादि **'चरति'**(१६२) वत् । **णिचि**—चलयति[7] शाखाम् । चालयति शिलाम् । **सनि**—

१. **वेश्च स्वनो भोजने** । व्याभ्यां स्वनतेः सस्य षः स्याद्भोजने । २. **क्षुब्धस्वान्ते**- २१७ इति तमस्यर्थे निष्ठायामनिट्त्वम् । ३. जज्वाल लोकस्थितये स राजा (भट्टिः १।४)। ४. **ज्वलह्वलह्मलनमामनुपसर्गाद्वा** । इति वा मित्त्वम् । ५ सोपसर्गस्य तु नित्यं मित्त्वम् । ६. **अत एकहल्मध्ये** – (पृ० ८) इति एत्वाभ्यासलोपौ । ७ **कम्पने चलिः** । मित् ॥ कम्पनादन्यत्र न मित् ।

चिचलिषति । **यङि**— चाचल्यते । **यङ्लुकि**—चाचलीति–चाचल्ति । चलितव्यम् । चलनीयम् । चाल्यम् । चलितः । चलितुम् । चलित्वा । सञ्चल्य ॥ चलः । चालः । चलाचलः । चलनः ।

[२३८] **बल**=प्राणने । अकर्म० । सेट् । परस्मै० ॥

१. बलति ॥ ५. बबाल । बेलतुः । **'गदति'** (३७) वत् । बालः । बाला । बलम् । कुबेराय बलिः ।

[२३८] **पत्लृ**=गतौ । अकर्म० । सेट् । परस्मै० ॥

१. पतति ॥ २. पततु ॥ ३. अपतत् ॥ ४. पतेत् ॥ ५. **प्र०** पपात । पेततुः । पेतुः ॥ **म०** पेतिथ । पेतथुः । पेत ॥ **उ०** पपात । पेतिव । पेतिम ॥ ६. पतिता ॥ ७. पतिष्यति ॥ ८. पत्यात् । पत्यास्ताम् ॥ ९. अपप्तत्[1] । अपप्तताम् । अपप्तन् ॥ १०. अपतिष्यत् ॥ **भावे**—पत्यते । **णिचि**—पातयति–ते । ५. पातयाञ्चकार । ९. अपाति । **सनि**—पित्सति[2]–पिपतिषति । **यङि**—पनीपत्यते । **यङ्लुकि**—पनीपतीति–पनीपत्ति । **कृत्सु**—पतितव्यम् । पतनीयम् । पात्यम् । पतितः । पतन् । पतितुम् । पतित्वा । निपत्य । प्रणिपतति । उत्पतिष्णुः । पातुकः । पतत्रम् । पतङ्गः । पताका ॥ पन्थाः । उत्—ऊर्ध्वपतने । उत्पतति । उत्पातः=भूकम्पादिरुपसर्गः । प्र+नि ; नमस्कारे । प्रणिपतति । अनु–अनुगमने=अनुपतति । नि–अधःपतने । निपतति ॥

[२४०] **क्थे**=निष्पाके । अकर्म० । सेट् । परस्मै० ॥

१ लृदित्वादङ् । द्वितीयो लुङ् । **पतः पुम्** । अङि परे पुमागमः । न्यपप्तन् मुसले गृध्राः (भट्टि: १५ । २७) । २. **तनिपतिदरिद्रातिभ्यस्सन इड्वा**

कथति ॥ ५. चकाथ । चकथतुः ॥ ९. अकथीत् । अन्यत्सर्वं '**कणति**' (१३५) वत् । काथः ॥

[२४१] टु **वमु**=उद्गिरणे । सकर्म० । सेट् परस्मै० ॥

१. वमति ॥ ५. ववाम । ववमतुः । ववमुः ६. वमिता ॥ ७. वमिष्यति ॥ ८. वम्यात् ॥ ९. अवमीत् । १०. अवमिष्यत् । **णिचि**--वमयति-ते । वामयति-ते । उद्वमयति । **कर्मणि**--वम्यते । ववमे । ९. अवामि । **सनि**--विवमिषति । **यङि**--वंवम्यते । **यङ्लुकि**--वंवमीति--वंवन्ति । **कृत्सु**-वमितव्यम् । वमनीयम् । वम्यम् । वान्तः । वमन् । वमितुम् । वमित्वा- वान्त्वा । वमथुः ।

[२२४] **भ्रमु**=चलने । अकर्म० । सेट् । परस्मै० ॥

१. भ्रमति ॥ २. भ्रमतु ॥ ३. अभ्रमत् ॥ ४. भ्रमेत् ॥ **श्यन्पक्षे** १. भ्राम्यति ॥ भ्राम्यतु ॥ ३. अभ्राम्यत् ॥ ४. भ्राम्येत् ॥ ५. बभ्राम । बभ्रमतुः--भ्रेमतुः । बभ्रमुः--भ्रेमुः ॥ **म०** बभ्रमिथ--भ्रेमिथ । बभ्रमथुः--भ्रेमथुः । बभ्रम--भ्रेम ॥ **उ०** बभ्राम--बभ्रम । बभ्रमिव--भ्रेमिव । बभ्रमिम-भ्रेमिम ॥ ६. भ्रमिता ॥ ७. भ्रमिष्यति ॥ ८. भ्रम्यात् । भ्रम्यास्ताम् ॥ ९. अभ्रमीत् । १०. अभ्रमिष्यत् ॥

**वक्तव्यः** । १. एदित्वात् **ह्म्यन्तक्षणे**-(१४१)ति न वृद्धिः । २. **न शसददे**—(१५) ति वादित्वान्न एत्वाभ्यासलोपौ ।

३. मान्तत्वात् **ह्म्यन्तक्षणे**—(१४१) ति न वृद्धिः । ४. **ग्लास्नावनुवमामनुपसर्गाद्वा** । इति मित्त्वविकल्पः । ५. **नुगतोनुनासिकान्तस्य** । अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक्स्यात् । ६. **उदितो वा** (३५) । ७. **ड्वितोऽथुच्** । ८. **वा भ्राश**—(१४१)ति वा श्यनि रूपाणि । ९. **वा जॄभ्रमुत्रसाम्** । एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । १०. **ह्म्यन्तेति**(१४१)न वृद्धिः ।

भावे-भ्रम्यते । **णिचि**-भ्रमयति **सनि**-बिभ्रमिषति । **यङि**-बम्भ्रम्यते । **यङ्लुकि**-बम्भ्रमीति-बम्भ्रन्ति । **कृत्सु**-भ्रमित्वा-भ्रान्त्वा । भ्रान्तिः । परि-परिभ्रमणे परिभ्रमति । उद्-उद्भ्रमति ।

[२४३] **क्षर**=सञ्चलने । अकर्म० । सेट् । परस्मै० ॥

क्षरति ॥ ५. चक्षार । चक्षरतुः ॥ इत्यादि **'गदति'** (३७) वत् **सनि** —चिक्षरिषति । **यङि** —चाक्षर्यते । **यङ्लुकि** —चाक्षर्ति-चाक्षरीति इत्यादि ॥ क्षारः ॥ प्र- प्रक्षरणम् । प्रच्युतिः । (३७) वत् ।

[२४४] **षह**=मर्षणे । सकर्म० । सेट् । आत्मने० ॥

१. सहते ॥ २. सहताम् ॥ ३. असहत ॥ ४. सहेत ॥ ५. सेहे । सेहाते । सेहिरे ॥ ६. सहिता-सोढा ॥ **म०** सहितासे-सोढासे ॥ ७. साहिष्यते ॥ ८. सहिषीष्ट ९. असहिष्ट ॥ **कर्मणि**—सह्यते । **णिचि**—साहयति-ते । **सनि**—सिसहिषते । **यङि**—सासह्यते । **यङ्लुकि**—सासहीति-सासोढि । परिषासोढि ।

**[**—सहितव्यम्—सोढव्यम् । सहनीयम् । सह्यम् । सोढः । सहमानः । सोढुम्-सहितुम् । सहनम् । सहित्वा—सोढ्वा । विषह्य

१. अमन्तत्वान्मित्त्वम् । चलनार्थत्वात् परस्मैपदमेव । २. उदित्वाद्वेट् । ३. **यस्य विभाषा**(३५) ४. **धात्वादेः षः सः**(१९) । ५. नोत्सेहिरे भटाः (भट्टिः १४ । २८) । ६. **तीषसहलुभरुषरिषः** । इच्छत्यादेः परस्य तादेरार्धधातुकस्य इड्वा स्यात् । ७. इडभावपक्षे—सह्+ता=**हो ढः** । सढ्+ता **झषस्तथोर्धो धः**(१८९)इति तकारस्य धत्वे सढ् धा । धस्य ष्टुत्वेन ढः=सढ् ढा= **ढो ढे लोपः** । स ढा । **सहिवहोरोदवर्णस्य** । अनयोरवर्णस्य ओत्स्याड्ढलोपे सति । 'सोढा' । ८. **शकिसहोश्च** । इति यत् । ९. **तीषसहे**—ति वेट् ।

सहः । सर्वंसहा । सहिष्णुः । सहनः । सासहिः । सहित्रम् । षट् । उद्--उत्सोहे=उत्सहते ॥

[२४५] **रमु**=क्रीडायाम् । अकर्म० । अनिट् । आत्मने० ॥

१. रमते ॥ २. रमताम् ॥ ३. अरमत ॥ ४. रमेत ॥ ५. प्र० रेमे । रेमाते । रेमिरे ॥ म० रेमिषे । रेमाथे । रेमिध्वे ॥ उ० रेमे । रेमिवहे । रेमिमहे ॥ ६. रन्ता ॥ ७. रंस्यते ॥ ८. रंसीष्ट ॥ ९. अरंस्त ॥ १०. अरंस्यत ॥ **भावे**—रम्यते । **णिचि**—रमयति--ते । ९. अरीरमत्--त । **सनि**—रिरंसते । **यङि**—रंरम्यते । **यङ्लुकि**—रंरन्ति--रंरमीति । **कृत्सु**—रन्तव्यम् । रमणीयम् । रम्यम् । रतः । रममाणः । रमणम् । रमित्वा--रत्वा । विरम्य ॥ विरमति । आरमति । परिरमति । उप--निवृत्तौ, नाशे कर्मत्यागे च । वा--परस्मैपदम् । उपरमति--ते । उपरतिः । उपरतः । उप+आ=निवृत्तौ प्रत्यागतौ च । उपारमते । रमः । रामः--आरामः=उपवनम् । रमणः । रन्तिः । रत्नम् । सुरतः । सूरतः । रथः । रथ्या । स्तम्बेरमः=हस्ती ।

[२४६] **षद्लृ**=विशरणगत्यवसादनेषु । गतौ सकर्म० । अनिट् । परस्मै० ॥

१. रविकिरणसहिष्णु क्लेशलेशैरभिन्नम्--इति शाकुन्तले । तान्विलोक्य सहिष्णुः सन् (भट्टिः ७ । ४) । २. **सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ** । ३. **अर्तिलू--(१६२)** इति इत्रः । ४. क्षणमप्युत्सहते न मां विना (कुमारसम्भवम् (४ । ३६) । ५. क्रादिनियमादिट् । ६. व्यजेष्ट षड्वर्गमरंस्त नीतौ (भट्टिः १ । २) । ७. नुगतोनुनासिकान्तस्य (२४१) । ८. रमुधातुः उदित् इति केचिदभिप्रयन्ति । तन्मते **उदितो वा** । इति इड्विकल्पः । ९. **व्याङ्परिभ्यो रमः** । परस्मैपदं स्यात् । १०. **स्तम्बकर्णयोरमिजपोः** । स्तम्बेरमः परिणिनंसुरसावुपैति । (शिशुपालवधम् । ५ । ३४) ।

१. सीदति[1] । २. सीदतु ॥ ३. असीदत् ॥ ४. सीदेत् ॥ ५. ससाद[2] । सेदतुः । सेदुः ॥ म० सेदिथ--ससत्थ[3] । सेदथुः । सेद ॥ उ० ससाद--ससद । सेदिव । सेदिम ॥ ६. सत्ता ॥ ७. सत्स्यति ॥ ८. सद्यात् । सद्यास्ताम् ॥ ९. असदत्[4] । असदताम् ॥ १०. असत्स्यत् ॥ निषीदति ॥ **कर्मणि**—सद्यते । **णिचि**—सादयति-ते । **सनि**—निषित्सति —**यङि**—सासद्यते । **यङ्लुकि**—सासदीति-सासत्ति । **कृत्सु**—सत्तव्यम् । सदनीयम् । साद्यम् । सन्नः । सीदन् । सत्तुम् । सत्त्वा । निषद्य । सेदिवान् । परिषत् । द्विषत् । सदः । प्र–प्रसादे । प्रसीदति । वि–विषादे । विषीदति । उद्–उत्सीदति । आ । नैकट्ये । आसीदति ।

[२४७] **शद्लृ**=शातने । अकर्म० । सेट् । परस्मै० ॥

१. शीयते[5] ॥ २. शीयताम् ॥ ३. अशीयत ॥ ४. शीयेत ॥ ५. शशाद[6] । शेदतुः ॥ म० शेदिथ[7]-शशत्थ ॥ ६. शत्ता । शत्तासि । ७. शत्स्यति । ८. शद्यात् । शद्यास्ताम् । ९. अशदत् ।

१. **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** । पादीनां पिबादयः स्युः इत्संज्ञकशकारादौ प्रत्यये परे । नाथ हरे जय नाथ हरे सीदति राधा वासगृहे—इति **जयदेवः** ।
२. इत्संज्ञकशकारादिप्रत्ययाभावात् न सीदादेशः । ३. थलि भारद्वाजनियमादिट्पक्षे **थलि च सेटि** (पृ० ८) इत्येत्वाभ्यासलोपौ । इडभावपक्षे द्वित्वादि ससत्थ ।
४. लृदित्वादङ् । द्वितीयो लुङ् । समासदत्सादितदैत्यसम्पदः (माघ – १ । ११) ।
५. **पाघ्राध्मे(२४६)**ति शीयादेशः । **शदेः शितः** । शिद्भाविनोऽस्मादात्मनेपदं स्यात् । वैरायते महद्भिश्च शीयते वृद्धिमानपि (भट्टिः १८ । ९) । ६. शिद्भावित्वाभावान्नात्मनेपदम् । प्रक्रिया 'शसादे'(२८६)ति वत् । ७. सेदिथेति वत् ।

१०. अशत्स्यत् । भावे—शद्यते । णिचि—शादयति[1]-शातयति । सनि—शिशत्सति । यङि—शाशद्यते । यङ्लुकि—शाशत्ति-शाशदीति । कृत्सु—शत्तव्यम् । शदनीयम् । शाद्यम् । शन्नः । शीयमानः । शत्तुम् । शदनम् । शत्त्वा । विशद्य ॥

[२४८] क्रुश=आह्वाने रोदने च । आद्ये सकर्म० । अनिट् । परस्मै० ॥

१. क्रोशति ॥ २. क्रोशतु ॥ ३. अक्रोशत् ॥ ४. क्रोशेत् । ५. चुक्रोश । चुक्रुशतुः । चुक्रुशुः[2] ॥ म० चुक्रोशिथ ॥ उ० चुक्रोश । चुक्रुशिव ॥ ६. क्रोष्टा । क्रोष्टारौ ॥ म० क्रोष्टासि ॥ ७. क्रोक्ष्यति ॥ ८. क्रुश्यात् ॥ ९. अक्रुक्षत्[3] ॥ १०. अक्रोक्ष्यत् । अनुक्रोशति=दयते । आक्रोशति=क्रुध्यति, शपते वा । उपक्रोशति=निन्दति । कर्मणि—क्रुश्यते । णिचि—क्रोशयति-ते । सनि—चुक्रुक्षति । यङि—चोक्रुश्यते । यङ्लुकि—चोक्रुशीति-चोक्रोष्टि । कृत्सु—क्रोष्टव्यः । क्रोशनीयः । क्रोश्यः । क्रुष्टः । क्रोशन् । क्रोष्टुम् । क्रुष्ट्वा । आक्रुश्य । उपक्रुश्य । उपक्रोशः[4] । क्रोष्टा--हे क्रोष्टो । क्रोष्ट्री ।

[२४९] बुध=अवगमने । सकर्म० सेट् । परस्मै० ॥

बोधति । ५. बुबोध । इत्यादि **'क्रोशति'** (२४८) वत् । सनि—बुबुधिषति--बुबोधिषति । यङि—बोबुध्यते । णिचि—बोधयति[5] । यङ्लुकि—बोबुधीति--बोबोद्धि ॥

१. **शदेरगतौ तः** । शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ । शातयति=नाशयतीत्यर्थः । शादयति=गमयतीत्यर्थः । २. विचुक्रुशुः भूमिपतेर्महिष्यः (भट्टिः ३ । २२) । ३. पञ्चमो लुङ् । ४. प्राणैरुपक्रोशमलीमसैर्वा (रघु — २ । ५३) । ५ **अणावकर्मकात्**—(२८)**बुधयुध**—इति परस्मैपदमेव ।

[२५०] रुह=बीजजन्मनि प्रादुर्भावे च अकर्म० अनिट् परस्मै० ॥

१. रोहति[1] ॥ ५. रुरोह । रुरुहतुः ॥ म० रोहिथ । रुरुहथुः । रुरुह ॥ उ० रुरोह । रुरुहिव ॥ ६. रोढा ॥ ७. रोक्ष्यति ॥ ८. रुह्यात् ॥ ९. अरुक्षत् । १०. अरोक्ष्यत् । **भावे**—रुह्यते । **णिचि**—रोहयति[2]-रोपयति । **सनि**—रुरुक्षति । **यङि**—रोरुह्यते । **यङ्लुकि**—रोरोढि-रोरुहीति । **कृत्सु**—रोढव्यम् । रोहणीयम् । रोह्यम् । रूढः । रोहन् । रोढुम् । रूढ्वा । आरुह्य । रोहितः । लोहितः । आ-आरोहति । अव-अवरोहे-(ऊर्ध्वस्थानदधोगमने । अवरोहति अवरुह्य[3] ॥ प्र-प्ररोहति । प्ररोहः[4] ।

[२५१] अञ्चु=गतौ याचने च । सकर्म० । सेट् । उभय० ॥

**परस्मैपदे**—अञ्चतीत्यादि[5] (७९) वत् । **आत्मनेपदे**—अञ्चते इत्यादि 'अङ्कति' (५६) वत् ॥ अन्यत्सर्वं परस्मैपदवत् । **सनि**—अञ्चिचिषते--ति इति । अञ्चमानः शानच्च विशेषः ॥ प्र-अव-उद् इत्याद्युपसर्गयोगे-प्राञ्चतीत्यादि सिद्धिः ।

[२५२] टु याचृ=याञ्चायाम् । सकर्म० । उभय० ॥

१. याचति[6]--ते ॥ २. याचतु-ताम् ॥ ३. अयाचत्--चत ॥ ४. याचेत्--चेत ॥ ५. ययाच--चे ॥ ६. याचितासि--से ॥ ७.

१. छिन्नोपि रोहति तरुः—इति **भर्तृहरिः** । २. रुहः **पोऽन्यतरस्याम्** । ३ यानासनस्थश्चैवैनमवरुह्याभिवादयेत् । इति मनुः । ४. लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान्—रघुः—(१३ । ७१ । ५ स्वच्छा मौक्तिकसंहतिर्धवलिमा हैमीं लतामञ्चति—इति पुष्पबाणविलासे । ६. तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन—इति मालतीमाधवे ।

याचिष्यति--ते ॥ ८. याच्यात्--याचिषीष्ट ॥ ९. अयाचीत्--अयाचिष्ट । अयाचिष्टाम्--अयाचिषाताम् ॥ १०. अयाचिष्यत्--त । **कर्मणि**--याच्यते । इत्यादि **'काशति'** (१८७) वत् । याचथुः । याचितकम् । याच्ञा[1] । याच्यम् ॥

[२५३] **मेधृ**=सङ्गमे । अकर्म० । सेट् । उभय० ॥

१. मेधति--मेधते ॥ ५. मिमेध--मिमिधे ॥ ८. मेध्यात्--मेधिषीष्ट ॥ ९. अमेधीत्[2]--अमेधिष्ट[3] । **कर्मणि**--मेध्यते । **णिचि**--मेधयति--ते । मेधा[4] । गृहमेधी[5] । गृहमधीयम् । मेध्यम्=शुद्धम् ॥

[२५४] **बुधिर्**=बोधने । सकर्म० । सेट् । उभय० ॥

**परस्मैपदे**--बोधति--ते इत्यादि **'क्रोशति'** (२४८) वत् । आत्मनेपदे । **'द्योतति'** (२११) वत् । **लुङि** ९. अबोधीत्--अबुधत्--अबोधिष्ट । इति विशेषः ॥

[२५५] **खनु**=अवदारणे । सकर्म० । सेट् । उभय० ॥

१. खनति--ते ॥ ५. **प्र०** चखान[7] । चख्नतुः[6] । चख्नुः । **म०** चखनिथ । चख्नथुः । चख्न ॥ **उ०** चखान--चखन । चख्निव । चख्निम । **आत्मने०** **प्र०** चख्ने । चख्नाते । चख्निरे ॥ **म०**

१. याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा--इति मेघसन्देशे । २. सप्तमो लुङ् । ३. एकादशो लुङ् । ४. धीर्धारणावती मेधा--इत्यमरः । ५ गृहैः दारैः मेधते सङ्गच्छते इति गृहमेधी । प्रजायै गृहमेधिनाम्--(रघुः १ । ७) । ६. **गमहनजनखनघसां लोपः क्ङित्यनङि** । इत्यादौ क्ङित्युपधालोपः । ७ निचखान जयस्तम्भान् गङ्गास्रोतोन्तरेषु सः । (रघुः ४ । ३६) । तं विनिष्पिष्य ...... वसुधायां निचख्नतुः--(रघुः १२ । २०) । तं तौ भुवि निचख्नतुः (भट्टिः ४ । ३)।

चखनिषे । चखनाथे । चखनिध्वे ॥ उ० चखने । चखनिवहे । चखनिमहे ॥ खनिता ॥ ६. खनितासि–से ॥ खनितास्मि–ताहे ॥ ७. खनिष्यति–ष्यते ॥ ८. खायात्–खन्यात् ॥ खायास्ताम्–खन्यास्ताम् । **आत्मने**—खनिषीष्ट । खनिषीयास्ताम् । ९. अखानीत्–अखनीत् । **आत्म०**—अखनिष्ट ॥ १०. अखनिष्यत–अखनिष्यत ॥ **कर्मणि**—खायते–खन्यते । **णिचि**—खानयति । **सनि**—चिखनिषति-ते । **यङि**—चङ्खन्यते-चाखायते । **यङ्लुकि**—चङ्खनीति-चङ्खन्ति । **कृत्सु**—खनितव्यः । खननीयः । खेयम् । खातः । खनन्-खनमानः । खनितुम् । खननम् । खनित्वा । निखाय-निखन्य । खनकः । खनकी । खनित्रम् । आखुः । मुखम् । परिखा ॥

[२५६] **व्यय**=गतौ । सकर्म० । सेट् । परस्मै० ॥ अयं वित्तत्यागे नित्यमात्मनेपदी ॥

१. व्ययति–व्ययते ॥ ५. वव्याय–वव्यये ॥ ६. व्ययिता–सि–स्मि । व्ययिता–से–हे ॥ ७. व्ययिष्यति–ते । ८. व्ययिषीष्ट । अव्ययीत्–अव्ययिष्ट । १०. अव्ययिष्यत्–त ॥ **कर्मणि**—व्यय्यते । **णिचि**—व्याययति--ते । **यङि**—वाव्यय्यते । **यङ्लुकि**—वाव्ययीति–वाव्यति । **कृत्सु**—व्ययितव्यम् । व्ययनीयम् । व्येयः-अप-

१. ये विभाषा । जनसनखनामात्त्वं वा स्याद्यादौ क्ङिति । २ **अतो हलादेर्लघोः** (११२) । ३. एकादशी विधा । ४. **ईच खनः** । ५ **यस्य विभाषा** । ६. **अर्तिलूधू**-(१६२) इति **इत्रः** । ७. लङ्कायाः परिखालघुम्—(रघुः १२ । ६६) । ८. **लोपो व्योः**—(पृ० १२)रिति यलोपः । ९. भूयस्तपोव्ययो माभूद्वाल्मीकेरिति सोत्सगात् । (रघुः–१५ । ३७) ।

व्ययः । व्यय्यम् । व्ययन् । व्ययमानः । व्ययितः । व्ययित्वा । संव्यय्य । व्ययितुम् । व्ययी, मितव्ययी ॥

[२५७] **दाभृ**=दाने । सकर्म० । सेट् । उभय० ॥

१. दाशति–ते ॥ ५. ददाश–शे ॥ ६. दाशिता ॥ ९. अदाशीत्–अदाशिष्ट ॥ **कर्मणि**—दाश्यते । अन्यत्सर्वं **'काशति'** (१८७) वत् ॥

[२५८] **गुहू**=संवरणे । इह-संवरणं-गोपनम् आच्छादनम् अपह्नवः । सकर्म० । वेट् । उभय० ॥

१. गूहति–ते ॥ २. गूहतु–गूहताम् ॥ ३. अगूहत्–त ॥ ४. गूहेत्–त ॥ ५. **प्र०** जुगूह । जुगुहतुः । जुगुहुः ॥ जुगुहे । जुगुहाते । जुगुहिरे ॥ **म०** जुगूहिथ–जुगोढ । जुगुहथुः ॥ जुगुहिषे–जुघुक्षे । जुगुहाथे । जुगुहिढ्वे–ध्वे–जुघुढ्वे ॥ **उ०** जुगूह । जुगुहिव–जुगुह्व । जुगुहिम–जुगुह्म ॥ जुगुहे । जुगुहिवहे–जुगुह्वहे । जुगुहिमहे–जुगुह्महे ॥ ६. गूहिता–गोढा ॥ **म०** गूहितासि–गोढासि । गूहितासे–गोढासे ॥ **उ०** गूहितास्मि–गोढास्मि ॥ गूहिताहे–गोढाहे ॥ ७. गूहिष्यति–ते । घोक्ष्यति–ते ॥ ८. गुह्यात् । गुह्यास्ताम् ॥ गूहिषीष्ट–घुक्षीष्ट । गूहिषीयास्ताम् । ९. अगूहीत् । अगूहिष्टाम् । अगूहिषुः ॥ अघुक्षत् । अघुक्षताम् । अघुक्षन् । अगूहिष्ट । अगूहिषाताम् । अगू-

१. **ऊदुपधाया गोहः** । गुह उपधाया ऊत्स्यात् गुणहेतावजादौ प्रत्यये परे । २. **एकाच**-(१८९) इति गकारस्य घकारः । ३. सप्तमो लुङ् । इट्-पक्षे सिज्लोपे ऊत्वे रूपम् । ४. इडभावे **शलइगुपधा**- (पृ० ११) दिति क्सः । पञ्चमो लुङ् । प्रक्रिया **'जघाक्षे'** (१८९) । इत्यत्र द्रष्टव्या ।

हिषत ॥ [3]अगूढ--अघुक्षत । अघुक्षाताम् । अघुक्षन्त ॥ म० अगूढाः-- अघुक्षथाः । अघुक्षाथाम् । अघूढ्वम्-अघुक्षध्वम् ॥ उ० अघुक्षि । अघुह्वहि--अघुक्षावहि । अघुह्महि--अघुक्षामहि ॥ १०. अगूहिष्यत्-त । अघोक्ष्यत्--त ॥ **कर्मणि**=गुह्यते । **णिचि**—गूहयति-ते । **सनि**— [2]जुघुक्षति--ते । **यङि**—जोगुह्यते । **यङ्लुकि**—जोगुहीति–जोगोढि ॥ **कृत्सु**—गूहितव्यम्--गोढव्यम् । गूहनीयम् । [3]गुह्यम्--गोह्यम् । गूढः । गूहन्--गूहमानः । गूहनम् । गूहित्वा--गूढ्वा । निगूह्य । गुहा । उप- आलिङ्गने=[4]

[२५९] **श्रिञ्**=सेवायाम् । सकर्म० । सेट् । उभय० ॥

१. श्रयति[5]–ते ॥ २. श्रयतु--ताम् ॥ ३. अश्रयत्--त ॥ ४. श्रयेत्--त ॥ ५. **परस्मै**० प्र० शिश्राय । शिश्रियतुः[6] । शिश्रियुः । म० शिश्रयिथ । शिश्रियथुः । शिश्रिय ॥ उ० शिश्राय--शिश्रय । शिश्रियिव । शिश्रियिम ॥ **आत्मने**० प्र० शिश्रिये । शिश्रियाते । शिश्रियिरे ॥ म० शिश्रियिषे । शिश्रियाथे । शिश्रियिढ्वे--ध्वे ॥ उ० शिश्रिये । शिश्रियिवहे । शिश्रियिमहे ॥ ६. श्रयिता ॥ ७. श्रयिष्यति--ते ॥ ८. श्रीयात्--श्रयिषीष्ट ॥ ९. [7]अशिश्रियत्--अशिश्रियत[8] ॥

१. **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** । एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । द्वादशो लुङ् । २. **हलन्ताच्च** । इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । ३. **शंसिदुहिभ्यो वा** । इति क्यप् ण्यच्च । ४. शिशिरानिलैर्मी तरङ्गहस्तैरुपगूहतीव । (रघु—१३ । ६३) । ५. **सार्वधातुकार्धधातुकयोः** (पृ० ३) इति गुणे अवादेशे च रूपम् । ६. कित्वान्न गुणः । इयङ् । ७. **णिश्री-** (पृ० ११) ति चङ् । तृतीयो लुङ् । ८. नवमो लुङ् ।

१०. अश्रयिष्यत्-त ॥ **कर्मणि**—श्रीयते । ५. शिश्रिये । ६. श्रयिता ॥ **णिचि**—श्राययति–ते ॥ **सनि**—शिश्रयिषति–षते । शिश्रीषति--ते ॥ **यङि**—शेश्रीयते । **यङ्लुकि**—शेश्रयीति--शेश्रेति ॥ **कृत्सु**—श्रयितव्यः । श्रयणीयः । श्रयः । श्रितः । श्रयन्--श्रयमाणः । श्रयितुम् । श्रयणम् । श्रयित्वा । आश्रित्य । श्रीः । श्रेणिः । श्मश्रु । आ--आलम्बने ; आश्रयति । प्र--प्रागल्भ्ये ; प्रश्रयति । उद्--उच्चभवने =उच्छ्रयति ।

[२६०] **भृञ्**=भरणे । सकर्म० । अनिट् । उभय० ॥

१. भरति--ते ॥ ५. बभार । बभ्रतुः । बभ्रुः ॥ **म०** बभर्थ । बभ्रथुः । बभ्र ॥ **उ०** बभार--बभर । बभृव । बभृम ॥ **आत्म०** बभ्रे । बभ्राते । बभ्रिरे ॥ **म०** बभृषे । बभ्राथे । बभृढ्वे--ध्वे ॥ **उ०** बभ्रे । बभृवहे । बभृमहे ॥ ६. भर्ता । ७. भरिष्यति--ते । ८. भ्रियात्-भृषीष्ट ॥ ९. अभार्षीत्--अभृत । १०. अभरिष्यत्--ष्यत ॥ **कर्मणि**—भ्रियते । **णिचि**—भारयति–ते । **सनि**—बिभरिषति–ते–बुभूर्षति--ते । **यङि**—बेभ्रियते । **यङ्लुकि**—बर्भर्ति–बर्भरीति–बरीभ-

१. **सनीवन्त**—(१६३) इति सन इड्वा । इडभावे **हलन्ताच्चे**(१५८)ति कित्वम् । २. **ऋद्धनोः स्ये** । ऋतो हन्तेश्च स्यस्य इट् स्यात् । इतीट् । ३. **रिङ्शयग्लिङ्क्षु** । शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । इति रिङादेशः । ४. **उश्च** । ऋवर्णात्परौ झलादी लिङ् तङ्परः सिच्च इत्येतौ कितौ स्तः । इति कित्वान्न गुणः । ५. षष्ठो लुङ् । ६. दशमो लुङ् । **ह्रस्वादङ्गात्** । सिचो लोपः स्याद्झलि । ७ **सनीवन्तर्ध**—(१६३)ति वेट् । ८. **इको झल्** (पृ० २६) । इति कित्वे **अज्झनगमा(९४)**मिति दीर्घे भृ इति जाते, **उदोष्ठ्यपूर्वस्य** इति उत्वे रपरत्वे **हलि चे**ति दीर्घे रूपम् ।

रीति--बरिभरीति इत्यादि । **कृत्सु**—भर्तव्यः । भरणीय. । भृत्यः[1] । सम्भृत्यः[2]--सम्भार्यः । भृतः । भरन्--भरमाणः । भर्तुम् । भरणम् । भृत्वा । सम्भृत्य । आत्मम्भरिः[3] । कुक्षिम्भरिः- उदरम्भरिः[4] । भारः । भरुः । भरतः । बभ्रुः । अपो भरतीत्यभ्रम्=मेघः ॥

[२६१] हृञ्=हरणे[5] । सकर्म० । अनिट् । उभय० ॥

१. हरति–ते ॥ **५. प्र०** जहार । जह्रतुः । जह्रुः ॥ **म०** जहर्थ । जह्रथुः । जह्र ॥ **उ०** जहार–जहर । जह्रिव[6] । जह्रिम ॥ **आत्म०** जह्रे । जह्राते । जह्रिरे । **६.** हर्ता ॥ **७.** हरिष्यति ॥ इत्यादि '**भरति**' (२६०) वत् । प्रहरति । संहरति । विहरति । परिहरति । आहरति । व्यवहरति । अपहरति । उद्धरति । व्याहरति । अभ्यवहरति । निर्हरति । उदाहरति । उपहरति । प्रत्युदाहरति । उपसंहरति । हरिः । हृदयम् । हृदयालुः । सुहृत् । सौहार्दम् । हार्दम् । इत्यादि ।

[२६२] धृञ्=धरणे । सकर्म० । सेट् । उभय० ॥

धरति–ते ॥ **५. प्र०** दधार । दध्रतुः । दध्रुः । **म०** दधर्थ । दध्रथुः । दध्र ॥ **उ०** । दधार–दधर । दधृव । दधृम । **६.** धर्ता ॥

१. **भृञोऽसंज्ञायाम्** । इति क्यप् । २. **समश्च बहुलम्** । इति क्यप्ण्यतौ । ३. **फलेग्रहिरात्मम्भरिश्च** । इति इन्प्रत्ययान्तो निपातः । चकारात् कुक्षिम्भरिः । कुक्षिम्भरि क्षोणिनभःपदव्योः —(हीरसौभाग्यम् । सर्गः ७. श्लोकः ५६) । ४ ज्योत्स्नाकरम्बमुदरम्भरयश्चकोराः–इति मुरारिः । ५. प्रापणं स्वीकारः स्तेयं नाशन च हरणम् । भारं हरति ग्रामम् । प्रापयति इत्यर्थः । अंशं हरति पुत्रः । भागं स्वीकरोतीत्यर्थः । मणिं हरति चोरः । रामनाम पापं हरति । ६. क्रादिनियमादिट् ।

७. धरिष्यति ॥ इत्यादि 'भरति' (२६०) वत् । धरा । वसुन्धरा । धर्मः । धर्मं चरति इति धार्मिकः । धर्मादनपेतं धर्म्यम् ॥

[२६३] **णीञ्**=प्रापणे । सकर्म० । अनिट् । उभय० ॥

१. नयति-ते ॥ २. नयतु—नयताम् ॥ ३. अनयत्—त ॥ ४. नयेत्-त ॥ ५. निनाय[1] । निन्यतुः निन्युः ॥ म० निनयिथ—निनेथ । निन्यथुः । निन्य ॥ उ० निनाय—निनय[2] । निन्यिव[3] । निन्यिम ॥ आत्म० निन्ये । निन्याते । निन्यिरे ॥ ६. नेता ॥ ७. नेष्यति-नेष्यते ॥ ८. नीयात्—नेषीष्ट ॥ ९. अनैषीत्—अनेष्ट ॥ १०. अनेष्यत्—त ॥ **कर्मणि**—नीयते । **णिचि**—नाययति-ते । **सनि**—निनीषति-ते । **यङि**—नेनीयते । **यङ्लुकि**—नेनयीति-नेनेति ॥ **कृत्सु**—नेतव्यम् । नयनीयः । नेयः । नीतः । नयन् । नयनम् । नीत्वा । प्रणीय ॥ प्र—करणे=प्रणयति । अप—दूरीकरणे=अपनयति । उप—उपनयने=उपनयते । उत्—उन्नयने (उत्प्रेक्षायां ऊर्ध्वक्षेपणे च) उन्नयति=उत्प्रेक्षते । अभि ; अभिनये अभिनयति । अनु—अनुनये=अनुनयति । वि—विनये=विनयते इत्यात्मनेपदम् । वि=ऋणशोधनार्थगणनायामपि, आत्मनेपदम् । ऋणं विनयते ; शोधनाय गणयतीत्यर्थः । परि—परिणये परिणयति इत्यादि ॥

[२६४] **धेट्**=पाने । सकर्म० । अनिट् परस्मै० ।

१. धयति ॥ २. धयतु ॥ ३. अधयत् ॥ ४. धयेत् ॥ ५.

---

१ **अचो ञ्णिति** । २ **णलुत्तमो वा** । ३. क्रादिनियमादिट् ।

प्र० दधौ । दधतुः । दधुः ॥ म० दधिथ–दधाथ । दधथुः । दध ॥ उ० दधौ । दधिव । दधिम ॥ ६. धाता ॥ ७. धास्यति ॥ ८. धेयात् । धेयास्ताम् ॥ ९. अदधत् । अदधताम् । अदधन् ।—अधात् । अधाताम् । अधुः ।—अधासीत् । १०. अधास्यत् ॥ **कर्मणि**—धीयते । ९. अधायि । **णिचि**—धापयति–ते । **सनि**—धित्सति । **यङि**—देधीयते । **यङ्लुकि**—दाधेति–दाधाति । कर्म-व्यतिहारे–व्यतिधयते ॥ **कृत्सु**—धातव्यम् । धानीयम् । धेयम् । धीतम् । धयन् । धातुम् । धीत्वा । प्रधाय । धेनुः । स्तनन्धयः ॥

[२६५] **ग्लै**=हर्षक्षये । अकर्म० । अनिट् । परस्मै० ॥

१. ग्लायति ॥ ५. जग्लौ । जग्लतुः । जग्लुः ॥ म० जग्लिथ–जग्लाथ । जग्लथुः । जग्ल ॥ उ० जग्लौ । जग्लिव । जग्लिम ॥

१ **आदेच उपदेशेऽशिति** । उपदेशे एजन्तस्य धातोः आत्वं स्यान्न तु शिति । धे+णल् । द्वित्वादौ कृते लिटोऽशित्त्वात् दधा+अ=**आत औ णलः** । आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ ॥ २. **आतो लोप इटि च** । अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । ३. इट्-पक्षे अतो लोपः । ४ इडभावपक्षे आत्वे दधा+थ='दधाथ' । ५ **दाधा-घ्वदाप्** । दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युः । **एर्लिङि** । घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । ६. **विभाषा धेट्श्व्योः** । (पृ० ११ तृतीयो लुङ्। ७. चङभावपक्षे **विभाषा घ्राधेट् शाच्छासः** (पृ० १०) इति सिचो लुग्वा । लुङि प्रथमा विधा । ८. सिज्लुगभावपक्षे **यमरमनमाता**—(पृ० ११) मिति सक् । चतुर्थो लुङ् । ९. **घुमास्थागापाजहातिसां हलि** । एषामात ईत्स्यात् हलादौ क्ङित्यार्धधातुके । १०. आत्वे **अर्तिह्रीव्ली** (१६४) इति पुक् । ११. **सनिमीमाघुरभलभशकपतपदामच इस्** । एषामच इस् स्यात्सादौ सनि । १२ **न ल्यपि** । ल्यपि परे घुमास्थादेरीत्वं न । १३. हर्ष-क्षयो धातुक्षयः ।

६. ग्लाता । ७. ग्लास्यति । ८. ग्लायात्–ग्लेयात्[1] । ग्लायास्ताम् ग्लेयास्ताम् । ९. अग्लासीत् । १०. अग्लास्यत् । ग्लास्नुः । ग्लौः सुग्लः । **भावे**—ग्लायते । **णिचि**—ग्लपयति–ते[2] । ग्लापयति–ते प्रग्लपयात **सनि**—जिग्लासति । **यङि**—जाग्लायत **यङ्लुक**—जाग्लेति–जाग्लाति । **कृत्सु**—ग्लातव्यम् । ग्लानीयम् । ग्लेयम् । ग्लानः[3] । ग्लायन् । ग्लातुम् । ग्लात्वा । प्रग्लाय ॥

[२६६] **म्लै**=हर्षक्षये । अकर्म० । अनिट् । परस्मै० ॥

सर्वं **'ग्लायति'** (२६५) वत् ॥

[२६७] **ध्यै**=चिन्तायाम् । सकर्म० । अनिट् । परस्मै० ॥

१. ध्यायति ॥ ५. **प्र०** दध्यौ । दध्यतुः । दध्युः । **म०** दध्यिथ–दध्याथ ॥ **उ०** दध्यौ । दध्यिव ॥ ६. ध्याता ॥ ७. ध्यास्यति ॥ ८. ध्येयात् ॥ ९. अध्यासीत् ॥ १०. अध्यास्यत् ॥ **कर्मणि**—ध्यायते । **णिचि**—ध्यापयति–ते । **सनि**—दिध्यासति । **यङि**—दाध्यायते । **यङ्लुकि**—दाध्येति । दाध्याति । **कृत्सु**—ध्यातव्यम् । ध्यानीयम् । ध्येयम् । ध्यातः । ध्यातुम् । ध्यात्वा । निध्याय ॥ अभि–परद्रव्येच्छायाम् ("अभिध्या परस्य विषये स्पृहा" इत्यमरः) । अभिध्यायति ; अभिध्यानम् ॥

[२६८] **स्त्यै**=शब्दसङ्घातयोः । अकर्म० । अनिट् । परस्मै० ॥

१. स्त्यायति ॥ ५. तस्त्यौ ॥ इत्यादि **'ग्लायति'** (२६५) वत् । स्त्यायते संहन्यतेऽस्यां गर्भ इति स्त्री ॥

---

१. **वान्यस्य संयोगादेः** । घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि । इत्येत्वं वा । २ **ग्लास्नावनुवमां च** । इति अनुपसृष्टस्य वा मित्वम् । ३. **संयोगादेरातो धातोर्यण्वतः** । निष्ठातस्य नः स्यात् ।

[२६९] **कै**=शब्दे । सकर्म० । अनिट् । परस्मै० ॥

१. कायति ॥ ५. चकौ ॥ ६. काता इत्यादि **'गायति'** (२७०) वत् ॥

[२७०] **गै**=शब्दे । सकर्म० । अनिट् । परस्मै० ॥

गायति ॥ इत्यादि ग्लायति (२६५) वत् । ८. गेयात् ॥ गेयास्ताम् । **कर्मणि**—गीयते[1] । **णिचि**—गापयति । **सनि**—जिगासति । **यङि**—जेगीयते । **यङ्लुकि**—जागेति–जागाति । **कृत्सु**—गातव्यम् । गानीयम् । गेयम् । गीतम् । गायन् । गातुम् । गानम् गीत्वा । प्रगाय[2] । गाथकः[3] । गायनः[4] । गायनी । गायकः । गीतिः । गाथा । अव+ग,–वि+गा=निन्दायां अवगायति विगायति । उद्गायति–उच्चैर्गायति ।

[२७१] **श्रै**=पाके । सकर्म० । अनिट् । परस्मै० ॥

श्रायति ॥ ५. शश्रौ ॥ **म०** शश्रिथ–शश्राथ ॥ **उ०** शश्रौ । शश्रिव ॥ ६. श्राता इत्यादि **'ग्लायति'** (२६५) वत् ॥ श्रृतं क्षीरम् । श्राणा यवागूः ॥

[२७२] **पा**=पाने । सकर्म० । अनिट् । परस्मै० ॥

१. पिबति[5] । २. पिबतु । ३. अपिबत् । ४. पिबेत् । ५. **प्र०** पपौ[6] । पपतुः । पपुः ॥ **म०** पपिथ–पपाथ । पपथुः । पप ॥

१. **घुमास्थे**(२६४ ति इत्वम् । २. **न ल्यपि** । (२६४) इति ईत्वं न । ३. **गः स्थकन्** । ४. **ण्युट् च** । ५. **पाघ्राध्मा**—(२४६) इत्यादिना पिबादेशः । ६. **आत औ णलः** (२६४) ।

उ० पपौ । पपिव । पपिम ॥ ६. पाता ॥ ७. पास्यति ॥ ८. पेयात्[1] ।
९. अपात्[2] । अपाताम् । अपुः । **कर्मणि**—पीयते । ५. पपे । ९.
अपायि । **णिचि**—पाययते[3] । ९. अपीप्यत्[4] । **सनि**—पिपासति ।
**यङि**—पेपीयते । **यङ्लुकि**—पापेति–पापाति । **कृत्सु**—पातव्यम् ।
पानीयम् । पेयम् । पीतम् । पिबन् । पातुम् । पानम् । पीत्वा ।
प्रपाय । प्रपीय, निपीय, इति पीङो रूपे । सुरापः । द्विपः । प्रपा । सपीतिः ।
पायुः । पापम् । पायः । पयः । पात्रम् । पञ्चानां पात्राणां समाहारः
**पञ्चपात्रम्** ।

[२७३] **घ्रा**=गन्धोपादाने । सकर्म० । अनिट् । परस्मै० ॥

१. जिघ्रति[5] ॥ ५. जघ्रौ । जघ्रतुः । जघ्रुः ॥ ६. घ्राता ॥
७. घ्रास्यति ॥ ८. घ्रायात्–घ्रेयात् ॥ ९. अघ्रात्[6]–अघ्रासीत्[7]–
**कर्मणि**—घ्रायते । **णिचि**—घ्रापयति–ते । ९. अजिघ्रिपत्[8]–अजि-
घ्रपत् । **सनि**—जिघ्रासति । **यङि**—जेघ्रीयते । **यङ्लुकि**—
जाघ्रेति–जाघ्राति । **कृत्सु**—घ्रातव्यम् । घ्राणीयम् । घ्रेयम् । घ्रातः[9]–
घ्राणः । जिघ्रन् । घ्रातुम् । घ्रात्वा । आघ्राय । वि+आ जिघ्रतीति
व्याघ्रः ।

---

१. **एर्लिङि** (२६४) इत्येत्वम् । २. प्रथमो लुङ् । गातिस्थे—(पृ० १०)ति सिचो लुक् । ३. **निगरणचलनार्थेभ्यश्च** । इत्यस्य न पादम्याङ्—(२१४) इति निषेधादात्मनेपदमेव । ४. **लोपः पिबतेरीच्चाभ्यासस्य** । पिबतेरुपधाया लोपः स्यात् अभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । ५ **पाघ्रा**—(२४६) इति जिघ्रादेशः । ६. **विभाषा घ्राधेट्**—(पृ० १०) इति सिचो वा लुक् । ७. लुगभावपक्षे षष्ठो लुङ् । ८. आदन्तत्वात्पुक् । **जिघ्रतेर्वा** । उपधाया इदादेशः स्याद्वा चङ्परे णौ । ९. **नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्** । एभ्यो निष्ठा-तस्य नो वा ।

[२७४] **ध्मा**=शब्दे अग्निसंयोगे च । सकर्म० । अनिट् । परस्मै० ॥

१. धमति ॥ २. धमतु ॥ ३. अधमत् ॥ ४. धमेत् ॥ ५. दध्मौ इत्यादि '**जिघ्रति**' (२७३) वत् । ९. अध्मासीत् । **कृत्सु**—ध्मातः । आ-स्फीततायाम्=आधमति । उद्धमः । नाडिन्धमः (स्वर्णकारः) ।

[२७५] **ष्ठा**=गतिनिवृत्तौ । अकर्म० । अनिट् । परस्मै० ॥

१. तिष्ठति ॥ २. तिष्ठतु ॥ ३. अतिष्ठत् ॥ ४. तिष्ठेत् ॥ ५. **प्र०** तस्थौ । तस्थतुः । तस्थुः ॥ **म०** तस्थिथ-तस्थाथ । तस्थथुः तस्थ ॥ **उ०** तस्थौ । तस्थिव । तस्थिम ॥ ६. स्थाता ॥ ७. स्थास्यति ॥ ८. स्थेयात् ॥ ९. अस्थात् । अस्थाताम् । अस्थुः ॥ १०. अस्थास्यत् ।

१. संतिष्ठते । २. संतिष्ठताम् । ३. समतिष्ठत । ४. संतिष्ठेत । ५. संतस्थे । ६. संस्थाता । ७. संस्थास्यते । ८. संस्थासीष्ट । ९. समस्थित । १०. समस्थास्यत । एवं अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । आतिष्ठते । तिष्ठते कन्या छात्रेभ्यः । उपतिष्ठते सूर्यम् । उत्तिष्ठते ॥

**भावे**—स्थीयते । **णिचि**—स्थापयति--ते । ९. त् **सनि**—तिष्ठासति । **यङि**—तेष्ठीयते । **यङ्लुकि**—तास्थति-

१. अग्निसंयोगो नाम मुखवायुनाग्निसंयोगः । २. **पाघ्राध्मे**—(१८६)ति धमादेशः । ३. **पाघ्रे**—(२४६)ति तिष्ठादेशः । ४. प्रथमो लुङ् । ५. **समवप्रविभ्यः स्थः** । ६. **आङः प्रतिज्ञायामुपसंख्यानम्** ७. **प्रकाशनस्थेयाख्ययोश्च** । ८. **उपान्मन्त्रकरणे** । ९. **उदोनूर्ध्वकर्मणि** । कुटुम्बे उत्तिष्ठते तदर्थं घटत इत्यर्थः । १०. **तिष्ठतेरित्** ।

तास्थाति । **कृत्सु**—स्थातव्यम् । स्थानीयम् । स्थेयम् । स्थितः । तिष्ठन् । स्थातुम् । स्थित्वा । उपस्थाय । स्थास्नुः[1] । स्थायुकः[2] । स्थावरः[3] । स्थिरः[4]–युधिष्ठिरः । स्थेयान् । स्थेष्ठः । स्थविरः । स्थाणुः । तस्थिवान् ॥

[२७६] **म्ना**=अभ्यासे । सकर्म० । अनिट् । परस्मै०

**१.** मनति[5] । मनतः ॥ **२.** मनतु ॥ **३.** अमनत् ॥ **४.** मनेत् ॥ **५.** मम्नौ इत्यादि '**ग्लायति**' (२६५) वत् ॥ आम्नायः । आम्नाती व्याकरणे । सुतरां आम्नायते इति सुम्नं=सुखम् ॥

[२७७] **दाण्**=दाने । सकर्म० । अनिट् । परस्मै० ॥

**१.** यच्छति[6] ॥ **२.** यच्छतु ॥ **३.** अयच्छत् ॥ **४.** यच्छेत् ॥ **५.** **प्र०** ददौ । ददतुः । ददुः ॥ **म०** ददिथ–ददाथ । ददथुः । दद ॥ **उ०** ददौ । ददिव । ददिम ॥ **६.** दाता ॥ **७.** दास्यति ॥ **८.** देयात् । देयास्ताम् ॥ **९.** अदात्[7] । अदाताम् । अदुः ॥ **१०.** अदास्यत् ॥ **कर्मणि**—दीयते । **णिचि**—दापयति । **सनि**—दित्सति । **यङि**—देदीयते । **यङ्लुकि**—दादाति–दादेति ॥ **कृत्सु**–दातव्यः । दानीयः[8] । देयम् । दत्तः[9] । यच्छन् । दातुम् । दानम् । दत्त्वा । प्रदाय । गां प्रयच्छतीति गोप्रदः । दास्या मालां संप्रयच्छते[10] ॥

---

१. **ग्लाजिस्थश्चग्स्नुः** । २. **लषपत**-इत्यादिना उकञ् । ३. **स्थेशभासे**(१८०)ति वरच् । ४. **अजिर शिशिर शिथिलस्थिर** इत्यादिना निपातः । ५. **पाघ्राध्मे**(२४६)ति मनादेशः । ६. **पाघ्राध्मे**ति यच्छादेशः । ७. **गातिस्थाघु**-(पृ १०) इति सिचो लुक् । प्रथमो लुङ् । ८. दीयतेऽस्मै दानीयो विप्रः । ९. **दो दद्घोः** । घुसंज्ञकस्य दा इत्यस्य 'दत्' इत्यादेशः स्यात् तादौ किति । चर्त्वम् । १०. **दाणश्च सा चेच्चतुर्थ्यर्थे** । इत्यात्मनेपदम् ।

[२७८] स्वृ=शब्दोपतापयोः । अकर्म० । वेट्[1] । परस्मै० ॥

१. स्वरति ॥ २. स्वरतु ॥ ३. अस्वरत् ॥ ४. स्वरेत् ॥ ५. प्र० सस्वार । सस्वरतुः[2] । सस्वरुः ॥ म० सस्वरिथ–सस्वर्थ । सस्वरथुः । सस्वर ॥ उ० सस्वार–सस्वर । सस्वरिव[3] । सस्वरिम ॥ ६. स्वर्ता–स्वरिता ॥ ७. स्वरिष्यति[4] ॥ ८. स्वर्यात्[5] ॥ ९. अस्वारीत् । अस्वारिष्टाम् । अस्वारिषुः ॥ पक्षे अस्वार्षीत् । अस्वार्ष्टाम् । अस्वार्षुः ॥ १०. अस्वरिष्यत् ॥ कर्मणि—स्वर्यते । णिचि—स्वारयति । सनि—सिस्वरिषति–सुस्वूर्षति[6] । यङि—सास्वर्यते[7] । यङ्लुकि—सस्वरीति–सरिस्वरीति–सरीस्वरीति । इत्यादि । संपूर्वः आत्मनेपदी । संस्वरते । ५. संसस्वरे[8] इत्यादि ॥ कृत्सु—स्वर्तव्यम् । स्वार्यम् । स्वृतः । स्वरितुम्–स्वर्तुम् । स्वरित्वा–स्वृत्वा । संस्वृत्य । स्वरुः ॥

[२७९] स्मृ=चिन्तायाम् । सकर्म० । अनिट् । परस्मै० ॥

१. स्मरति । ५. प्र० सस्मार । सस्मरतुः । सस्मरुः । म० सस्मरिथ–सस्मर्थ । सस्मरथुः । सस्मर ॥ उ० सस्मार–सस्मर । सस्मरिव । सस्मरिम ॥ ६. स्मर्ता ॥ ७. स्मरिष्यति ॥ ८. स्मर्यात् ॥ ९. अस्मार्षीत् । अस्मार्ष्टाम् । अस्मार्षुः ॥ १०. अस्मरिष्यत् ॥

१. **स्वरतिसूती**–(३५)ति वेट् । २. **ऋतश्च संयोगादेर्गुणः** । ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि । ३. **श्र्युकः किति** । श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्ण स्यात् । इति नित्यमनिटं **स्वरतिसूती**—(३५)ति वैकल्पिकमिटं च बाधित्वा क्रादिनियमान्नित्यमिट् । ४. **ऋद्धनोः स्ये** (२६०) इति नित्यमिट् । ५. **गुणोर्तिसंयोगाद्योः** । अर्तेः संयोगादेः ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च । इति गुणः । ६. 'बुभूर्षति'(२६०) वत्प्रक्रिया । ७. **यङि च** । अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि । ८. लुङि षष्ठी विधा ।

**कर्मणि**—स्मर्यते । **णिचि**—स्मरयति-ते । स्मारयति-ते । **सनि**—सुस्मूर्षते । **यङि**—सास्मर्यते । **यङ्लुकि**—सस्मरीति-सरिस्मरीति-सरीस्मर्ति इत्यादि । **कृत्सु**—स्मर्तव्यः । स्मरणीयः । स्मार्यः । स्मृतः स्मृतिः । स्मरन् । स्मर्ता । स्मर्तुम् । स्मरणम् । स्मरः । स्मारकः । स्मृत्वा । विस्मृत्य ॥

[२८०] **सृ**=गतौ । सकर्म० । अनिट् । परस्मै० ॥

१. सरति ॥ ५. ससार । सस्रतुः । सस्रुः ॥ **म०** ससर्थ । सस्रथुः । सस्र ॥ **उ०** ससार-ससर । सस्रिव । सस्रिम ॥ ६. सर्ता ॥ ७. सरिष्यति ॥ ८. स्रियात् । ९. असार्षीत् । १०. असरिष्यत् । **कृत्सु**—सर्तव्यम् । सर्तुम् । सृत्वा । अपसृत्य । सारः । प्रसारः । अभिसारः । अतिसारः । अतीसारः—व्याधिविशेषः । विसारः—मत्स्यः । पुरः सरतीति, पुरस्सरः । अग्रसरः । अग्रेसरः । सृमरः । विसृमरः । सृत्वरः । अद्भ्यः सृता इति अप्सराः । अप्सरा इव आचरति अप्सरायते । (बहुत्वमविवक्षितम्) प्र—प्रसारे=प्रसरति अप=अपसरणे=अपसरति अनु—अनुसरणे=अनुसरति । सं—संसरणे । (स्वादृष्टजन्यदेहधारणे) संसरति । वि—विस्तारे=विसरति । अभि—अभिसरति । (कान्तार्थितया सङ्केतस्थानमभिसरणम्) कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका इत्यमरः । उत्—उत्सरणे अकर्मकः । उत्सरति । (दूरीभवति) **णिचि**—उत्सारयति ।

१. आध्यानार्थकत्वे घटादित्वान्मित्वम् । मित्त्वाद्ध्रस्वः । २. चिन्तार्थकत्वे वृद्धिः । ३. **ज्ञाश्रुस्मृदृशां सनः** । इति सनि आत्मनेपदम् । ४. **यङि च** । (२७८) इति गुणः । ५. क्रादिनियमान्नेट् । ६ **रिङ्शयग्लिङ्क्षु** । (२६०) इति ऋतो रिङादेशः ॥ ७. लुङि षष्ठी विधा ।

[२८१] ऋ=गतिप्रापणयोः । सकर्म० । अनिट् । परस्मै० ॥

१. ऋच्छति[1] ॥ २. ऋच्छतु ॥ ३. आर्च्छत् ॥ ४. ऋच्छेत् ॥ ५. प्र० आर[2] । आरतुः[3] । आरुः ॥ म० आरिथ[4] । आरथुः । आर ॥ उ० आर । आरिव[5] । आरिम ॥ ६. अर्ता ॥ अरिष्यति ॥ ८. अर्यात् ॥ ९. आर्षीत् ॥ आर्ष्टाम् । आर्षुः ॥ म० आर्षीः ॥ उ० आर्षम् ॥ १०. आरिष्यत् ॥ समृच्छते[7] ॥ **कर्मणि**—अर्यते । ५. आरे । ९. आरि । **णिचि**—अर्पयति[8]–ते । ५. अर्पयाञ्चक्रे । ९. आर्पिपत् । **सनि**—अरिरिषति[9] । **यङि**—अरार्यते । **यङ्लुकि**—अरारीति–अरार्ति–अरियर्ति । इत्यादि । **कृत्सु**—अर्तव्यम् । अरणीयम् । अर्यः[10] । आर्यः[11] । ऋणम्[12] । प्रवृद्धं ऋणं प्रार्णम् । ऋणार्णम् । ऋतम्[13] । ऋच्छन् । अर्तुम् । अरणम् । आरा–चर्मप्रभेदिका । आर्त्तः । ऋतिः । आ+ऋतिः=आर्तिः । ऋत्वा । समृत्य । अरित्रम् । अर्भः । अर्भकः । अर्थः । अर्वा । ऋतुः । अररम्=कपाटम् । इरिणम् । अर्णः । अर्णवः ।

[२८२] घृ=सेचने । सकर्म० । अनिट् । परस्मै० ॥

१. अभिघरति[14] ॥ इत्यादि **'सरति'** (१८०) वत् । अभिघारयति ॥

---

१. **पाघ्राध्मा**—(२४६) इत्यादिना ऋच्छादेशः । २. ऋधातोर्लिटि तिपो णलि द्वित्वे **उरत्** (पृ० ८) इति ऋकारस्य अत्वे हलादिशेषे **अत आदेः** । इति दीर्घे रूपम् । ३. ऋ+अतुस् इति स्थिते 'आर' इत्यत्रेव द्वित्वादौ आ ऋ अतुस् इति जाते कित्त्वाद्गुणनिषेधे प्राप्ते **ऋच्छत्यॄताम्** । तौदादिकस्य ऋच्छतेः ऋधातोः ॠतां च गुणः स्याल्लिटि इति गुणे आ+अर्+अतुस् इति स्थिते सवर्ण-दीर्घे आरतुः । ४ **इडत्त्यर्तिव्ययतीनाम्** । अद् ऋ व्येञ् एभ्यस्थलो नित्य-मिट् स्यात् । ५. क्रादिनियमान्नित्यमिट् । ६. षष्ठो लुङ् । ७. **समो गम्यृ-च्छिभ्याम्** । इत्यात्मनेपदम् । ८. **अर्तिह्रीव्ली**—(१६४ इत्यादिना पुक् । ९. **स्मिपूङ्रञ्ज्वशां सनि** । इति इटि रिस् शब्दस्य द्वित्वे हलादिशेषे षत्वे च रूपम् । १०. स्वामी वैश्यो वा । ११. स्वामिवैश्याभ्यामन्यत्र । १२. **ऋण-माधमर्ण्ये** । १३. सत्यमित्यर्थः । १४. प्रायेणायमभिपूर्वः ।

[२८३] **स्रु**=गतौ । सकर्म० । अनिट् । परस्मै० ॥

स्रवति ॥ २. स्रवतु । ३. अस्रवत् ॥ ४. स्रवेत् ॥ ५. सुस्राव । सुस्रुवतुः । सुस्रुवुः ॥ म० सुस्रोथ[1] । सुस्रुव ॥ उ० सुस्राव-सुस्रव । सुस्रुव । सुस्रुम ॥ ६. स्रोता ॥ ७. स्रोष्यति ॥ ८. स्रूयात् ॥ ९. असुस्रुवत्[2] । १०. अस्रोष्यत् । **भावे**– स्रूयते । **णिचि**— स्रावयति । असिस्रवत्[3]--असुस्रवत् । **सनि** – सुस्रूषति । **यङि**-सोस्रूयते । **यङ्लुकि**-सोस्रोति-सोस्रवीति । **कृत्सु**—स्रोतव्यम् । स्रवणीयम् । स्रव्यम्-स्राव्यम्[4] । स्रुतः स्रुतिः । स्रोतः । स्रवन् । स्रोतुम् । स्रुत्वा । संस्रुत्य । स्रवत्यस्माद् घृतमिति स्रुक् ॥

[२८४] **षु**=प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । आद्ये सकर्मकः । त्वकर्मकः । अनिट् । परस्मै० ॥

१. सवति ॥ ५. सुषाव ॥ म० सुषोथ-सुषविथ[5] ॥ ६. सोता ॥ ७. सोष्यति ॥ ८. सूयात् ॥ ९. असावीत्[6] । असाविष्टाम् । असाविषुः ॥ **पक्षे**–असौषीत्[7] । असौष्टाम् । असौषुः । **कर्मणि**–सूयते । **णिचि**-सावयति ते । **सनि**—सुसूषति । **यङि**—सोषूयते । **यङ्**-

---

१. क्रादिषु पाठात् थल्यप्यनिट् । २. **णिश्रिद्रुस्रुभ्य**–(पृ० ११) इति चङ् । तृतीयो लुङ । ऐ वाचं देहि धैर्यं नस्तव हेतोरसुस्रुवत् (भट्टिः । ६ । १८) । ३. **स्रवतिश्रृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनाम् वा** । एषामभ्यासलोपोऽकारस्य इत्त्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे । ४ **ओरावश्यके** । इति ण्यत् । ५. भारद्वाजनियमाद्वेट् । ६. **स्तुसुधूञ्भ्यः परस्मैपदेषु** । एभ्यः सिच इट स्यात्परस्मैपदेषु । इति इटि, **अस्तिसिच**–(२७) इति ईटि, अ सु इस् ईत इति जाते **सिचि वृद्धिः परस्मैपदेषु** । इति वृद्धौ **इट ईटि** (७२ इति सिचो लोपे अवादेशे सवर्णदीर्घे च रूपम् । सप्तमो लुङ् । ७ इडभावपक्षे षष्ठो लुङ् ।

लुकि--सोषोति । **कृत्सु**--सोतव्यम् । सवनीयम् । साव्यः-सव्यः । सुतः । सवन् । सोतुम् । सवनम् । सुत्वा । अभिषुत्य ॥ सुत्या ।

[२८५] श्रु=श्रवणे । सकर्म० । अनिट् । परस्मै० ॥

१. प्र० श्रृणोति[1] । श्रृणुतः । श्रृण्वन्ति[2] ॥ म० श्रृणोषि श्रृणुथः । श्रृणुथ ॥ उ० श्रृणोमि । श्रृणुवः-श्रृण्वः[3] । श्रृणुमः-शृण्मः ॥ २. श्रृणोतु ॥ म० श्रृणु ॥ उ० श्रृणवानि ॥ ३. अश्रृणोत् ॥ ४. श्रृणुयात् ॥ ५. प्र० शुश्राव । शुश्रुवतुः । शुश्रुवुः ॥ म० शुश्रोथ । शुश्रुवथुः । शुश्रुव ॥ उ० शुश्राव-शुश्रव । शुश्रुव । शुश्रुम ॥ ६. श्रोता ॥ ७. श्रोष्यति ॥ ८. श्रूयात् । श्रूयास्ताम् ॥ ९. अश्रौषीत् । अश्रौष्टाम् ॥ १०. अश्रोष्यत् ॥ प्रति, आ,-अङ्गीकारे=प्रतिश्रृणोति, आश्रृणोति । समुपसर्गयोगे आत्म० । अकर्मकः । संश्रृणुते[4] । संश्रृण्वाते इत्यादि । **कर्मणि**--श्रूयते । ५. शुश्रुवे । ९. अश्रावि । **णिचि**--श्रावयति-ते । ९. अशुश्रवत्[5] । अशिश्रवत् । **सनि**--शुश्रूषते[6] । **यङि**--शोश्रूयते । **यङ्लुकि**--शोश्रवीति-शोश्रोति ॥ **कृत्सु**--श्रोतव्यः । श्रवणीयः । श्राव्यः । श्रव्यः । श्रुतः । श्रुतिः । श्रृण्वन् । श्रोतुम् । श्रुत्वा । संश्रुत्य । प्रतिश्रुत्य । शुश्रुवान् ॥

१. **श्रुवः श्रृ च** । श्रुवः श्रृ इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । इति श्नुः । २. **हुश्नुवोः सार्वधातुके** । जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चाऽसंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । इति यण् । उवङोपवादः । ३. **लोपश्चास्यान्यतरस्यां म्वोः** (१७०) इति वा उकारलोपः । ४. स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संश्रृणुते स किंप्रभुः । किरातार्जुनीयम् (१ । ५ ।) ५. **स्रवतिश्रृणोती** (२८४) ति इत्वं वा । ६. **ज्ञाश्रुस्मृदृशां सनः** । इति आत्मनेपदम् ।

[२८६] द्रु[1]=गतौ । सकर्म० । अनिट् । परस्मै० ॥

द्रवति । इत्यादि **'स्रवति'** (२८३) वत् । वि-विद्रवे, पलायने च=विद्रवति । उप--उपद्रवे (अनिष्टोत्पादने) उपद्रवति ।

[२८७] **ष्मिङ्**=ईषद्धसने । अकर्म० । अनिट् । आत्मने० ॥

१. स्मयते ॥ २. स्मयताम् ॥ ३. अस्मयत ॥ ४. स्मयेत ॥ ५. **प्र०** सिष्मिये[2] । सिष्मियाते । सिष्मियिरे ॥ **म०** सिष्मियिषे । सिष्मियाथे । सिष्मियिध्वे ॥ **उ०** सिष्मिये । सिष्मियिवहे । सिष्मियिमहे ॥ ६. स्मेता ॥ ७. स्मेष्यते ॥ ८. स्मेषीष्ट ॥ ९. अस्मेष्ट ॥ १०. अस्मेष्यत ॥ **भावे**—स्मीयते । सिष्मिये । अस्मायि । **णिचि**-जटिलो विस्मापयते[3] । कुञ्चिकयैनं विस्मापयति[4] । **सनि**—विसिस्मयिषते । **यङि-यङ्लुकि-कृत्सु**-च **'क्षयति'** (९२) वत् । स्मितः । स्मयमानः । इति विशेषः ॥ स्मेरं[5] मुखम् ।

[२८८] **गाङ्**=गतौ । सकर्म० । अनिट् । आत्मने० ॥

१. **प्र०** गाते[6] । गाते[7] । गाते[8] ॥ **म०** गासे गाथे । गाध्वे ॥ **उ०** गै[9] । गावहे । गामहे ॥ २. **प्र०** गाताम् । गाताम् । गाताम् ।

१. द्रवार्थकोयमकर्मकः । २. **अचिश्नुधातु**-इति इयङ् । वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये (भट्टिः ५ । ५१) । ३. **भीस्म्योर्हेतुभये** । आभ्यां ण्यन्ताभ्यामात्मनेपदं स्याद्धेतुत एव चेद्भयस्मयौ । रामं विस्मापयेत कः (भट्टिः ५ । १८ ।) ४. ततोन्यत्र परस्मैपदम् । ५. **नमिकम्पी**—(११८)त्यादिना रः । ६. गा+अ+ते=गाते । ७. गा+अ+आते=गाते । ८. गा+अ+अते=गाते । ९. गा+अ+इ=आद्गुणः=गा+ए=वृद्धिः='गै' ।

म० गास्व । गाथाम् । गाध्वम् ॥ उ० [1]गै । गावहै । गामहै ॥ ३. अगात । अगाताम् । अगात ॥ म० अगाथाः । अगाथाम् । अगाध्वम् ॥ उ० अगे । अगावहे । अगामहे ॥ ४. प्र० गेत । गेयाताम् । गेरन् ॥ म० गेथाः । गेयाथाम् । गेध्वम् । उ० गेय । गेवहि । गेमहि ॥ ५. प्र० जगे । जगाते । जगिरे ॥ जगिषे ॥ जगे । जगिवहे ॥ ६. गाता । गातारौ ॥ ७. गास्यते ॥ ८. गासीष्ट ॥ ९. अगा[2]स्त । अगासाताम् । अगासत ॥ **सनि**—जिगासते । अन्यत्सर्वं **'गायति'** (२७०) वत् ।

[२८९] त्रैङ्=पालने । सकर्म० । अनिट् । आत्मने० ।

१. [3]त्रायते । २. त्रायताम् । ३. अत्रायत । ४. त्रायेत । ५. प्र० तत्रे । म० तत्रिषे । [4]ढ्वे—ध्वे । उ० तत्रे । तत्रिवहे ॥ ६. त्राता । ७. त्रास्यते । ८. त्रासीष्ट । ९. अत्रास्त । १०. अत्रास्यत ॥ **कर्मणि**—प्रभृतिषु **'ग्लायति'** (२६५) वत् ॥ विशेषस्तु त्रा॑णः—त्रातः । त्रायमाणः ॥

[२९०] पूङ्=पवने । सकर्म० । सेट् । आत्मने० ॥

१. पवते ॥ ५. पु[5]पुवे ॥ ६. पविता ॥ ९. अप[6]विष्ट ॥

१. ग+अ+ऐ=**वृद्धिरेचि**=गै । २. दशमो लुङ् । ३. त्रै+अ+ते इति स्थिते आयादेशे=त्रायते इति रूपम् । ४. **नुदविदोन्दी—**(२७३) ति नो वा । ५. लिटि द्वित्वे पू पू अ ए इति स्थिते, **ह्रस्वः** (पृ० ७) इति अभ्यासस्य ह्रस्वे पुपू अते इति जाते, उवङि, पुपुव् अ ए इति जाते, **अतो गुणे** पृ० १८) इति पररूपे रूपम् । ६ एकादशो लुङ् ।

[२९१] डीङ्=विहायसा गतौ । अकर्म० । सेट् । आत्मने० ॥

१. डयते ॥ २. डयताम् ॥ ३. अडयत ॥ ४. डयेत ॥ ५. प्र० डिड्ये ॥ म० डिड्यिषे ॥ उ० डिड्ये । डिड्यिवहे ॥ ६. डयिता ॥ ७. डयिष्यते ॥ ८. डयिषीष्ट ॥ ९. अडयिष्ट ॥ १०. अडयिष्यत ॥ **भावे**–डीयते । ९. अडायि । **णिचि**–डाययति–ते । **सनि**—डिडयिषते । **यङि**—डेडीयते । **यङ्लुकि**—डेडयीति डेडेति । **कृत्सु**–डयितव्यम् । डयनीयम् । डेयम् । डयितः । डयमानः । डयितुम् । डयनम् । डयित्वा । उड्डीय । अव--अधोगतौ=अवडयते ।

[२९२] तॄ=प्लवनतरणयोः । सकर्म० । [1]सेट् । परस्मै० ॥

१. तरति ॥ २. तरतु ॥ ३. अतरत् ॥ ४. तरेत् ॥ ५. प्र० ततार । तेरतुः[1] । तेरुः ॥ म० तेरिथ । तेरथुः । तेर । उ० ततार-ततर । तेरिव । तेरिम ॥ ६. तरिता–तरीता[2] । ७. तरीष्यति–तरिष्यति ॥ ८. तीर्यात् ॥ अतारीत् । अतारिष्टाम्[3] । अतारिषुः ॥ म० अतारीः ॥ उ० अतारिषम् ॥ १०. अतरिष्यत्–अतरीष्यत् । वि+अतिपूर्वकोयमात्मनेपदी । व्यतितरते । व्यत्यतरत । इत्यादि । **कर्मणि**—तीर्यते । ५. तेरे । ९. अतारि । **णिचि**—तारयति–ते । **सनि**—[4]तितीर्षति–तितरिषति–तितरीषति । **यङि**—तेतीर्यते । यङ्-

---

१. **ऋच्छत्यॄताम्** (१८१) इति । लिटि गुणः । **तॄफल**–(११७) ति एत्वाभ्यासलोपौ । २. **वॄतो वा** । वृङ्वृञ्भ्यामॄदन्ताच्च धातोरिटो दीर्घो वा स्यान्न तु लिटि । ३. **सिचि च परस्मैपदेषु** । वॄत इटो दीर्घो न स्यात् । सप्तमो लुङ् । उदतारिषुरम्भोधिम् (भट्टिः १५ । ३३) । ४. **इट् सनि वा** । वृङ्-वृञ्भ्याम् ॠदन्ताच्च सन इड्वा स्यात् । इति वा इट् ।

**लुकि**—तातरीति–तातर्ति। **कृत्सु**—तरितव्यम्। तरीतव्यम्–तर्तव्यम्। तरणीयम्। तार्यम्। [१]तीर्णः। तरन्। तरितुम्–तरीतुम्–तर्तुम्। तीर्त्वा। संतीर्य। तर्षः उत्साहः। अवतरति=ऊर्ध्वदेशादधोदेशं गच्छति। अति–अतितरः (अतिक्रमः) उद्–उत्तरणम्। सम्–सन्तरणम्। वितरणम्=दानम्। निर्–निस्तारः। आतरः=तरपण्यम्। प्र–(णिच्) प्रतारणा। प्रतारयति=वञ्चयति।

[२९३] **गुप**[२]=गोपने। सकर्म०। सेट्। आत्मने०॥

१. जुगुप्सते[३]॥ २. जुगुप्सताम्॥ ३. अजुगुप्सत॥ ४. जुगुप्सेत॥ ५. जुगुप्साञ्चक्रे॥ ६. जुगुप्सिता॥ से॥ हे॥ ७. जुगुप्सिष्यते॥ ८. जुगुप्सीष्ट॥ ध्वम्॥ ९. अजुगुप्सिष्ट[४]॥ म० अजुगुप्सिष्ठाः॥ उ० अजुगुप्सिषि॥ १०. अजुगुप्सिष्यत॥ पापाज्जुगुप्सते॥ **कर्मणि**—जुगुप्स्यते। **णिचि**—जुगुप्सयति–ते। **सनि**—जुगुप्सिषते। अनेकाच्त्वाद्यङ्यङ्लुकौ न स्तः। **कृत्सु**—जुगुप्सितव्यम्। जुगुप्सनीयम्। जुगुप्स्यम्। जुगुप्सितः। जुगुप्समानः। जुगुप्सितुम्। जुगुप्सित्वा। संजुगुप्स्य। जुगुप्सा। जुगुप्सुः।

[२९४] **तिज**=निशाने। सकर्म०। सेट् आत्मने०॥

तितिक्षते[५]। तितिक्षाञ्चक्रे। इत्यादि '**जुगुप्सति**' (२९३) वत्॥ तितिक्षा। तितिक्षुः॥

१. **श्युकः किति**(१७८)। इति इण्निषेधः। **रदाभ्यामि**(२१)ति नः। २. अयं **गुप्तिज्किद्भ्यः सन्**। इति निन्दार्थे नित्यसन्। ३. **सन्यङोः**। (पृ० १७) इति द्वित्वम्। ४. एकादशो लुङ्। किं त्वं मामजुगुप्सिष्ठाः (भट्टिः (१५। १९)। ५. तिजिः क्षमायां नित्यसन्।

[२९५] **मान=पूजायाम्** । सकर्म० । सेट् । आत्मने० ॥

मीमांसते । मीमांसाञ्चक्रे । इत्यादि '**जुगुप्सति**' (२९३) वत् ॥ मीमांसा । मीमांसुः ॥

[२९६] **बध**=बन्धने । सकर्म० । सेट् । आत्मने० ।

१. बीभत्सते । बीभत्साञ्चक्रे । इत्यादि '**जुगुप्सति**' (२९३) वत् ॥ बीभत्सा । बीभत्सुः ॥

[२९७] **रभ**=राभस्ये । सकर्म० । अनिट् । आत्मने० ॥

१. आरभते ॥ २. आरभताम् ॥ ३. आरभत ॥ ४. आरभेत ॥ ५. आरेभे ॥ आरेभाते । आरेभिरे ॥ **म०** आरेभिषे । आरेभाथे । आरेभिध्वे ॥ उ० आरेभे । आरेभिवहे । आरेभिमहे ॥ ६. आरब्धा ॥ ७. आरप्स्यते ॥ ८. आरप्सीष्ट ॥ ९. आरब्ध । आरप्साताम् ॥ १०. आरप्सिष्यत ॥ **कर्मणि**—आरभ्यते । **णिचि**—आरम्भयति । **सनि**—आरिप्सते । **यङि**—अरारभ्यते । **यङ्लुकि**—अरारंभीति–आरारब्धि । **कृत्सु**—आरब्धव्यम् । आरम्भणीयम् । आरभ्यम् । आरब्धः । आरभमाणः । आरम्भणम् । रब्ध्वा । आरभ्य । रम्भा । रभसः । आरिप्सा ॥ परि-आलिङ्गने । परिरम्भः–परीरम्भः । सम्–क्रोधे=संरम्भः ॥

[२९८] **डु लभष्**=प्राप्तौ । सकर्म० । अनिट् । आत्मने० ॥

१. **मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य** । एभ्यः सन् स्यात् अभ्यासेकारस्य दीर्घश्च । इति मानिर्जिज्ञासायां नित्यसन् । २ बधिर्वैरूप्ये नित्यसन् । **सन्यतः** । इति अभ्यासस्याऽत इकारः । ३. राभस्यमुपक्रमः । प्रायणायमाङुपसृष्ट **एव** प्रयुज्यते । ४. रावणिश्चाब्यथो योद्धुमारब्ध च महीं गतः ।

लभते ॥ लेभे ॥ इत्यादि । **'रभति'** (२९७) वत् । आलं-भ्या[1] गौः । उपलंभ्यो[2] विद्या । उपालभते[3] ॥ वि+प्र=विसंवादे प्रतारणायां च । विप्रलभते । आ-स्पर्शने घातने च । आलभते । सुलभः । दुर्लभः । लाभः । लब्धिः ।

[२९९] **ष्वञ्ज**=परिष्वङ्गे । सकर्म० । अनिट् । आत्मने० ॥

१. स्वजते[4] ॥ २. स्वजताम् । ३. अस्वजत ॥ ४. स्वजेत ॥ ५. सस्वजे[5]-सस्वञ्जे । सस्वजाथे सस्वञ्जाथे । सस्वजिरे-सस्वञ्जिरे ॥ **म०** सस्वजिषे-सस्वञ्जिषे । इत्यादि ॥ ६. स्वङ्क्ता ॥ ७. स्वङ्क्ष्यते ॥ ८. अस्वङ्क्ताम् । **म०** अस्वङ्क्थाः । अस्वङ्क्षाथाम् । अस्वङ्ग्ध्वम् ॥ **उ०** अस्वङ्क्षि । अस्व-ङ्क्ष्वहि । अस्वङ्क्ष्महि ॥ १०. अस्वङ्क्ष्यत ॥ **कर्मणि**—स्वज्यते । **णिचि**—स्वञ्जयति-ते । असस्वञ्जत्-त । **सनि**—सिस्वङ्क्षते । **यङि**—सास्वज्यते । **यङ्लुकि**—सास्वञ्जीति-सास्वङ्क्ति ॥ **कृत्सु**—स्वङ्क्त-व्यम् । स्वञ्जनीयम् । स्वञ्ज्यम् । स्वक्तः । स्वजमानः । स्वङ्क्तुम् । स्वङ्क्त्वा । परिष्वज्य । प्रायः परिपूर्व एवायं प्रयुज्यते । यथा—परिषस्वजे ॥

[३००] **णम**=प्रह्वत्वे । अकर्म० । सेट् । परस्मै० ॥

१. नमति[7] ॥ २. नमतु ॥ ३. अनमत् ॥ ४. नमेत् ॥

१. **आङो यि** । आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये परे । २. **उपा-त्प्रशंसायाम्** । तथा । ३ निन्दतीत्यर्थः । उपालब्ध स कैकर्या च (भट्टिः ३ । ३०) । ४. **दंशसञ्जस्वञ्जां शपि** । एषां शपि नलोपः । इति नलोपः । ५. **श्रन्थिग्रन्थिदंभिस्वञ्जीनां वेति वक्तव्यम्** । इति कित्त्वविकल्पात्पक्षे अनुनासिकलोपः । ६. दशमो लुङ् । ७. **णो नः** ।

५. प्र० ननाम । नेमतुः । नेमुः । म० नेमिथ—ननन्थ । नेमथुः । नेम ॥ उ० ननाम—ननम । नेमिव । नेमिम ॥ ६. नन्ता ॥ ७. नंस्यति ॥ ८. नम्यात् । ९. अनंसीत् । १०. अनंस्यत् ॥ नमस्यति । **नमो वरिवश्चित्रङः क्यच्** । **भावे**—नम्यते । **णिचि**—नमयति—नामयति । प्रणमयति । **सनि**—निनंसति । **यङि**—नंनम्यते । **यङ्लुकि**—नंनमीति—नंनन्ति । **कृत्सु**—नन्तव्यः । नमनीयः । नम्यः । नतः । नमन् । नन्तुम् । नमनम् । नत्वा । प्रणम्य—प्रणत्य । नम्रः ॥ परिणमते=अन्यथा भवति । तथा विपरिणमते । अवनमति=अधो भवति । लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः । इति अमरुकम् । उन्नमति=उच्चो भवति । स्थितः सर्वोन्नतेनोर्वीम् । इति रघुः । उपनमति=उपतिष्ठते । अचिरोपनतां स मेदिनीम् । इति रघुः ॥

[३०१] **गम्लृ**=गतौ । सकर्म० । अनिट् । परस्मै० ॥

१. गच्छति ॥ २. गच्छतु ॥ ३. अगच्छत् ॥ ४. गच्छेत् ॥ ५. प्र० जगाम । जग्मतुः । जग्मुः ॥ म० जगमिथ—जगन्थ । जग्मथुः । जग्म ॥ उ० जगाम—जगम । जग्मिव । जग्मिम ॥

१. **अत एकहल्मध्ये**—(पृ० ८) इति एत्वाभ्यासलोपौ । २. भारद्वाजनियमात्थलि वेट् । ३ **यमरमनमाता**—(पृ० ११)मिति चतुर्थो लुङ् । ४. **ज्वलह्वलह्मलनमामनुपसर्गाद्वा** । इति मित्त्वविकल्पः । ५ उपसृष्टस्य नित्यं मित्त्वम् । ६. **वा ल्यपि** । अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि । इति वा अनुनासिकलोपः । लोपपक्षे **ह्रस्वस्य पिति कृति तुक्** । इति तुक् । ७. **नमिकम्पि**—(११८) इति रः । ८. **इषुगमियमां छः** । एषां छः स्याच्छिति । ९. **गमहनजन** -(२५५) त्युपधालोपः । १०. क्रादिनियमाद्वेट् ।

६. प्र० गन्ता । गन्तारौ । म० गन्तासि ॥ उ० गन्तास्मि ॥ ७. गमिष्यति[1] । ८. गम्यात् । गम्यास्ताम् ॥ ९. अगमत्[2] । अगमताम् । अगमन् ॥ १०. अगमिष्यत् । सङ्गच्छते[3]=मिलति । क्षणमिह सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका । इति मोहमुद्गरः । अनुगच्छति=अनुसरति । उद्गच्छति=उदेति । आविर्भवति । फलेन सहकारस्य पुष्पोद्गम इव प्रजाः । इति रघुः । आगच्छति=समीपं प्राप्नोति । अपगच्छति=अपसरति । अतिगच्छति=अतिक्रमते । अवगच्छति=जानाति । अधिगच्छति=प्राप्नोति । निर्गच्छति=निस्सरति ॥

**भावे**— गम्यते । ९. अगामि । **णिचि**—गमयति-ते । ९. अजीगमत्-त । **सनि** —जिगमिषति । **यङि**—जङ्गम्यते । **यङ्लुकि**—जङ्गमीति-जङ्गन्ति । **कृत्सु**—गन्तव्यम् । गमनीयम् । गम्यम्[4] । गतः । गच्छन् । गन्तुम् । गमनम् । गत्वा । सङ्गत्य-सङ्गम्य । गत्वरः । जगत् । सर्वत्रगः । पन्नगः । गौः ॥

[३०२] **सृप्लृ**=गतौ । सकर्म० । सेट् । परस्मै० ॥

१. सर्पति ॥ ५. प्र० ससर्प ॥ म० ससर्पिथ[5]-सस्रप्थ । ६. स्रप्ता-सर्प्ता[6] । ७. स्रप्स्यति-सर्प्स्यति । ८. सृप्यात् ॥ ९. असृपत्[8] । असृपताम् ॥ १०. असर्प्स्यत् ॥ **कर्मणि**—सृप्यते । **णिचि**—सर्पयति-ते । **सनि**—सिसृप्सति । **यङि**—सरीसृप्यते ।

---

१. **गमेरिट् परस्मैपदेषु**। गमेः परस्य सादेः प्रत्ययस्येट् स्यात् ।
२. लृदित्वादङ् । द्वितीयो लुङ् । ३. **समो गम्यृच्छिभ्याम्** । इत्यात्मनेपदम् ।
४. **पोरदुपधात्** । ५ प्रणत्ये ३०० ति वत् । ६. क्रादिनियमान्नित्यमिट् ।
७. **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** । उपदेशेऽनुदात्तो य ऋदुपधस्तस्य अम् वा स्याज्झलादावकिति परे । इत्यम्वा । ततो यणादेशः । अन्यदा गुणः ।
८. लृदित्वादङ् । द्वितीयो लुङ् ।

**यङ्लुकि**—सरीसृपीति--सर्सृपीति--सरिसृपीति । **कृत्सु**—स्रप्तव्यः-सर्प्तव्यः । सर्पणीयः । स्रप्ता-सर्प्ता । सृप्यः । सृप्तः । सृप्तिः । सर्पन् । स्रप्तुम्--सर्प्तुम् । सर्पणम् । सृप्त्वा । उपसृप्य । सर्पिः । सर्पः । उत्सर्पति=उल्लङ्घते । अपसर्पति=अपयाति । संसर्पति=व्याप्नोति । अनुसर्पति=अनुगच्छति । उपसर्पति=समीपं प्राप्नोति । विसर्पो=रोगः ।

[३०३] **यम**=उपरमे । अकर्म० । अनिट् । परस्मै० ॥

१. यच्छति[1] ॥ २. यच्छतु ॥ ३. अयच्छत् ॥ ४. यच्छेत् ॥ ५. **प्र०** ययाम । येमतुः[2] । येमुः ॥ **म०** येमिथ[3]--ययन्थ[4] । येमथुः । येम ॥ **उ०** ययाम--ययम । येमिव ॥ ६. यन्ता ॥ ७. यंस्यति ॥ ८. यम्यात् ॥ ९. अयंसीत्[5] । अयंसिष्टाम् । अयंसिषुः ॥ १०. अयंस्यत् ॥ **भावे**—यम्यते । **णिचि**—यमयति[6]-आयामयति[7] । **सनि**—यियंसति । **याङि**—यंयम्यते । **यङ्लुकि**—यंयमीति-यंयन्ति ॥ **कृत्सु**—यन्तव्यः । यमनीयः । यम्यः[8] । प्रयाम्यः । यतः । यच्छन् । यन्तुम् । यमनन् । यत्वा । संयम्य । उपयमः=विवाहः । वाचंयमः ॥ उपयच्छेते[9] सीतां रामः । ९. उपायत[10]—उपायंस्त=उदवोढेत्यर्थः ।

---

१. **इषुगमियमा**—(३०१)मिति च्छः । २. **अत एकहल्मध्य**—(पृ० ८) इत्येत्वाभ्यासलोपौ । ३. **अजन्तोऽकारवा**—(पृ० ७)निति वेट् । इट्पक्षे **थलि च सेटि** (पृ० ८) इति एत्वाभ्यासलोपौ । ४. इडभावपक्षे रूपम् । ५. **यमरमनमाता**—(पृ० ११)मिति सक् । चतुर्थो लुङ् । ६. **यमोऽपरिवेषणे** । इति मित्त्वम् । मितो ह्रस्वः । ७. परिवेषणभिन्नार्थे न मित्त्वम् । ८. **गदमदयमश्चानुपसर्गे** । इति यत् । सोपसर्गाण्ण्यत् । ९. **उपाद्यमः स्वकरणे** । आत्मनेपदं स्यात् । स्वकरणं भार्यात्वेन स्वीकारः । १०. **विभाषोपयमने** । यमः सिच् किद्वा स्यात् ।

संयच्छते[1] व्रीहीन् आयच्छते[2] वस्त्रम्। उद्–उद्यमे=उद्यच्छते। नि–नियमे, (व्यासौ व्रतभेदे च) नियच्छति॥

[३०४] **तप**=सन्तापे। सकर्म०। अनिट्। परस्मै०॥

१. तपति॥ ५. तताप। तेपतुः। तेपुः॥ **म०** तेपिथ–ततप्थ। तेपथुः। तेप॥ **उ०** तताप–ततप। तेपिव। तेपिम॥ ६. तप्ता॥ ७. तप्स्यति॥ ८. तप्यात्॥ ९. अताप्सीत्[3]। अताप्ताम्॥ १०. अतप्स्यत्॥ **कर्मणि**–तप्यते। ५. तेपे। ९. अन्वतप्यत। **तपोऽनुतापे च**। तपश्च्लेश्चिण्न स्यात् कर्मकर्तर्यनुतापे च। **णिचि**–तापयति–तापयते। **सनि**—तितप्सति। **यङि**—तातप्यते। **यङ्लुकि**–तातपीति–तातप्ति। **कृत्सु**—तप्तव्यम्। तपनीयम्। तप्यम्। तप्तः। तपन्। तप्तुम्। तप्त्वा। प्रतप्य। उत्तपते[4]। वितपते। निष्टपति[5]=निष्कृष्य तपतीत्यर्थः। अनुतपति=पश्चात्तपतीत्यर्थः।

[३०५] **त्यज**=हानौ। सकर्म० अनिट्। परस्मै०॥

१. त्यजति॥ २. त्यजतु॥ ३. अत्यजत्॥ त्यजेत्॥ ५. तत्याज। तत्यजतुः॥ **म०** तत्यजिथ–तत्यक्थ॥ **उ०** तत्याज–तत्यज। तत्यजिव॥ ६. त्यक्ता॥ ७. त्यक्ष्यति॥ ८. त्यज्यात्॥ ९. अत्याक्षीत्[6]। अत्याक्ताम्। अत्याक्षुः॥ १०. अत्यक्ष्यत्॥ **कर्मणि**—त्यज्यते। **णिचि**—त्याजयति–ते। **सनि**—तित्यक्षति। **यङि**—

---

१. **समुदाङ्भ्यो यमोऽग्रन्थे**। संयच्छते=संगृह्णातीत्यर्थः। २. कक्ष्यादौ निबध्नातीत्यर्थः। ३. लुङि चतुर्थी विधा। ४. **उद्विभ्यां तपः**। आत्मनेपदं स्यात्। ५. **निसस्तपतावनासेवने**। आसेवनं पौनःपुन्यं ततोन्यस्मिन्विषये। ६. **वदव्रजेति** (पृ० १२) वृद्धिः। षष्ठो लुङ्।

तात्यज्यते । **यङ्लुकि**—तात्यजीति–तात्यक्ति । तात्यक्तः । **कृत्सु**—त्यक्तव्यः । त्यजनीयः । त्याज्यः । त्यक्तः । त्यजन् । त्यागी । त्यागः । त्याजकः । त्यक्तुम् । त्यक्त्वा । सन्त्यज्य ॥

[३०६] **षञ्ज**=सङ्गे । सकर्म० । अनिट् । परस्मै० ॥

सजति[1] । ५. ससञ्ज । ससञ्जतुः । ससञ्जुः ॥ **म०** ससञ्जिथ–ससङ्क्थ ॥ ६. सङ्क्ता । ७. सङ्क्ष्यति ॥ ८. सज्यात् ॥ ९. असाङ्क्षीत्[2] । असाङ्क्ताम् ॥ **कर्मणि**—सज्यते । ९. असञ्जि । **णिचि** सञ्जयति–ते । **सनि**—सिसङ्क्षति । **यङि**—सासज्यते । **यङ्लुकि** सासञ्जीति–सासङ्क्ति । **कृत्सु**—सङ्क्तव्यम् । सञ्जनीयम् । सक्तम् । सञ्जनम् । सङ्क्त्वा[3]–सक्त्वा । संसज्य ॥ प्र–प्रसङ्गे । प्रसजति । अनु–अनुषङ्गे । अनुषजति । अभि–पराभवे=अभिषजति ॥

[३०७] **दृशिर्**=प्रेक्षणे । सकर्म० । अनिट् । परस्मै० ॥

१. पश्यति[4] ॥ २. पश्यतु ॥ ३. अपश्यत् ॥ ४. पश्येत् ॥ ५. **प्र०** ददर्श[5] । ददृशतुः । ददृशुः ॥ **म०** ददर्शिथ[6]–दद्रष्ठ । ददृशथुः । ददृश ॥ **उ०** ददर्श । ददृशिव । ददृशिम ॥ ६. द्रष्टा ॥ ७. द्रक्ष्यति ॥ ८. दृश्यात् ॥ ९. अदर्शत्[7] । अदर्शताम् ।

---

१. **दंशसञ्जस्वञ्जां शपि** (२९९) । इति नलोपः । २ **वदव्रजेति** वृद्धिः । षष्ठो लुङ् । ३. **जान्तनशां विभाषा** । जान्तानां नशेश्च नलोपो वा स्यात् क्त्विपरे । ४ **पाघ्राध्मा**—(२४६) इति पश्यादेशः । ५. लिटि दृश्+ति इति स्थिते **सार्वधातुके**—(पृ० ३)ति गुणे दर्श्+ति इति जाते द्वित्वे दर्श् दर्श ति इति भूते हलादिशेषे तिपो णलि 'ददर्श' इति । ६. **विभाषा सृजिदृशोः** । आभ्यां थल इड्वा स्यात् । **सृजिदृशोर्झल्यमकिति** । अनयोरमागमः स्याज्झलादावकिति । ७. **इरितो वा** (पृ० ११) इति विकल्पेन अङ्पक्षे रूपम् । **ऋदृशोऽङि गुणः** । ऋवर्णान्तानां दृशेश्च गुणः स्यादङि ।

अदर्शन् ॥ **म०** अदर्शः ॥ **उ०** अदर्शम् ॥ **पक्षे प्र०** अद्राक्षीत् । अद्राष्टाम् । अद्राक्षुः ॥ **म०** अद्राक्षीः ॥ उ० अद्राष्टम् ॥ १०. **कर्मणि**—दृश्यते । ५. ददृशे । ९. अदर्शि । **णिचि**—दर्शयति-ते । **सनि**—दिदृक्षते । **यङि**—दरीदृश्यते । **यङ्लुकि**—दर्दृशीति-दरिदृशीति-दरीदृशीति । **कृत्सु**—द्रष्टव्यः । दर्शनीयः । दृश्यः । दृष्टः । पश्यन् । द्रक्ष्यन् । द्रष्टुम् । दर्शनम् । दृष्ट्वा । संदृश्य । पारं दृष्टवान्=पारदृश्वा[२] ॥

[३०८] **दंश**=दशने । दंष्ट्राव्यापारो दशनम् । सकर्म० । अनिट् । परस्मै० ।

१. दशति[३] ॥ २. दशतु ॥ ३. अदशत् ॥ ४. दशेत् ॥ ५. ददंश । ददंशतुः ॥ **म०** ददंशिथ-ददंष्ठ ॥ ६. दंष्टा ॥ ७. दङ्क्ष्यति[४] ॥ ८. दश्यात् । ९. अदांक्षीत् । अदांष्टाम् । अदांक्षुः ॥ **म०** अदांक्षीः ॥ १०. अदङ्क्ष्यत् ॥ **कर्मणि**—दश्यते । **णिचि**—दंशयति-ते । **सनि**—दिदङ्क्षति । **यङि**—दंदश्यते[५] । **यङ्लुकि**—दंदशीति-दंदष्टि । **कृत्सु**—दंष्टव्यः । दंशनीयः । दंश्यः । दंष्टः । दशन् । दंशनम् । दंष्ट्वा । संदश्य । दंष्ट्रा । दन्दशूकः । उप--उपदशे (सहभोजने) उपदशति ।

१. अडभावपक्षे षष्ठो लुङ् । **न दृशः** । 'दृश्' धातोः शलन्तत्वेपि क्सो न । २. **दृशेः क्वनिप्** । ३ **दंशसञ्जस्वञ्जां शपि** (६९९) इति नलोपः । ४. **व्रश्चेति** शस्य षत्वे, तस्य **षढोः कः सि** (१९८) इति कत्वे, अनुस्वारस्य परसवर्णे दङ्क्+स्यति इति जाते, तस्य **आदेशप्रत्यययोः** (पृ० १४) इति षत्वे कषयोगेन क्षकारे रूपम् । ५. **लुपसदचरे**—ति भावगर्हायां यङ् । **जपजभदहे**-(१२५)ति नुक् ।

[३०९] **कृष**=विलेखने । सकर्म० । अनिट् । परस्मै० ।

१. कर्षति ॥ २. कर्षतु ॥ ३. अकर्षत् । ४. कर्षेत् ॥ ५. चकर्ष ॥ चकृषतुः ॥ **म०** चकर्षिथ । चकृषथुः ॥ **उ०** चकर्ष । चकृषिव ॥ ६. क्रष्टा[1]-कर्ष्टा । क्रष्टारौ-कर्ष्टारः ॥ ७. क्रक्ष्यति-कर्क्ष्यति ॥ ८. कृष्यात् ॥ ९. अक्राक्षीत्[2] । अक्राष्टाम् । अक्राक्षुः ॥ **म०** अक्राक्षीः ॥ **उ०** अक्राक्ष्म ॥ **पक्षे**-अकार्क्षीत्[3] । अकार्ष्टाम् । अकार्क्षुः ॥ **म०** अकार्क्षीः । **उ०** अकार्क्ष्म ॥ **पक्षे**-अकृक्षत्[4] । अकृक्षताम् ॥ **म०** अकृक्षः । **उ०** अकृक्षम् ॥ **कर्मणि**—कृष्यते । **णिचि**—कर्षयति-ते । **सनि**—चिकृक्षति । **यङि**—चरीकृष्यते । **यङ्लुकि**—चरीकृषीति-चर्कृषीति-चर्कर्ष्टि इत्यादि । **कृत्सु**—क्रष्टव्यः-कर्ष्टव्यः । कर्षणीयः । कृष्यः । कृष्टः । कर्षन् । क्रक्ष्यन्-कर्क्ष्यन् । क्रष्टुम् । कृष्ट्वा । विकृष्य ॥

[३१०] **दह**=भस्मीकरणे । सकर्म० । अनिट् । परस्मै० ॥

१. दहति ॥ २. दहतु ॥ ३. अदहत् ॥ ४. दहेत् ॥ ५. ददाह । देहतुः । देहुः ॥ **म०** देहिथ[5]-ददग्ध[6] ॥ **उ०** ददाह ।

---

१ कृष्+ता इति स्थिते **अनुदात्तस्य चर्दुपधस्ये**-(३०२)ति कृ+अ+ष+ता इति जाते=**इको यणची**ति यणि, क्रष् ता इति जाते, ष्टुत्वे क्रष्टा इति रूपम् । अमागमाभावे लघूपधगुणे कर्ष्टा इति रूपम् । २. **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः** । इति सिचि, **अनुदात्तस्ये**त्यमागमे रूपम् । ३. अमागमाभावे रूपम् । धनुर्व्यकार्क्षीद्गुरुबाणगर्भम् (भट्टिः २ । ५३) । ४. **शल इगुपधे**-(पृ० ११)ति क्सादेशे पञ्चमो लुङ् । ५. अकारवत्त्वात् भारद्वाजनियमात्थलि विकल्पेन इटि रूपम् । ६ अनिट्पक्षे **दादेर्धातोर्घः** । उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । इति ददघ् थ इति जाते **झषस्तथो**-(१८९)रिति थस्य धकारे घस्य जश्त्वेन गकारे च रूपम् ।

देहिव ॥ ६. दग्धा ॥ ७. धक्ष्यति[1] ॥ ८. दह्यात् ॥ ९. अधाक्षीत्[2] । अदाग्धाम् । अधाक्षुः ॥ **कर्मणि**— दह्यते । ५. देहे । **णिचि**—दाहयति-ते । **सनि**—दिधक्षति । **यङि**—दंदह्यते[3] । **यङ्लुकि**—दंदग्धि-दंदहीति । **कृत्सु**—दग्धव्यः । दहनीयः । दाह्यः । दग्धः । दहन् । धक्ष्यन् । दग्धुम् । दहनम् । दग्ध्वा । संदह्य । दिधक्षा ।

[३११] **मिह**=सेचने । सकर्म० । अनिट् । परस्मै० ॥

१. मेहति ॥ ५. मिमेह । मिमिहतुः ॥ **म०** मिमेहिथ ॥ उ० मिमिहिव ॥ ६. मेढा[4] ॥ ७. मेक्ष्यति[5] ॥ ८. मिह्यात् । मिह्यास्ताम् ॥ ९. अमिक्षत्[6] । अमिक्षताम् ॥ १०. अमेक्ष्यत् ॥ **कर्मणि**—मिह्यते । **णिचि** मेहयति । **सनि**—मिमिक्षति । **यङि**—मेमिह्यते । **यङ्लुकि**—मेमिहीति-मेमेढि । **कृत्सु**—मेढव्यम् । मेहनीयम् । मेह्यम् । मीढः । मेहन् । मेढुम् । मीढम् । मेहनम् । मेढम् । मीढ्वा । अवमिह्य । मेघः । मिहिरः=सूर्यः ॥

[३१२] **कित**=निवासे । रोगापनयने च । सकर्म० । सेट् । परस्मै० ॥

चिकित्सति[7] ॥ ५. चिकित्साञ्चकार ॥ ६. चिकित्सिता ॥ ९. अचिकित्सीत् ॥ विचिकित्सते=संशेते ॥ **कर्मणि**- चिकित्स्यते । **णिचि**—चिकित्सयति-ते । **सनि**—चिकित्सिषति । अनेकाच्त्वान्न यङ् यङ्लुकौ । **कृत्सु**—चिकित्सितव्यम् । चिकित्सनीयम् । चिकित्स्यम् । चिकित्सित. ।

१. क्रुद्धः कुलं धक्ष्यति विप्रवह्निः (भट्टिः १ । २३ । २ पञ्चमो लुङ् । ३. गर्हितं दहतीत्यऽर्थे यङ् । ४ मेह् + ता इति स्थिते । **हो ढः** । इति ढत्वे धकारे ष्टुत्वे ढलोपे च रूपम् । ५ हस्य ढत्वं तस्य **षढो** —(१८९) रिति कत्वं सकारस्य षत्वे च रूपम् । ६. पञ्चमो लुङ् । ७ **गुप्तिज्किद्भ्यः** (२०३) इति नित्यसन् ।

चिकित्सकः । चिकित्सितुम् । चिकित्सित्वा । विचिकित्स्य । चिकित्सा। विचिकित्सा-संशयः ॥

[३१३] डु **पचष्**=पाके । सकर्म० । अनिट्० । उभयपदी ॥

१. पचति-ते ॥ २. पचतु-पचताम् ॥ ३. अपचत्-त ॥ ४. पचेत्-त ॥ ५. **प्र०** पपाच । पेचतुः । पेचुः ॥ **म०** पेचिथ-पपक्थ । पेचथुः । पेच ॥ **उ०** पपाच--पपच पेचिव ॥ **आत्मने०**—पेचे । पेचाते । पेचिरे ॥ ६. पक्ता ॥ पक्तासि ॥ पक्तास्मि--पक्ता ॥ पक्तासे ॥ पक्ताहे ॥ ७. पक्ष्यति-ते ॥ ८. पच्यात्-पक्षीष्ट ॥ ९. अपाक्षीत्[1]-अपाक्ताम् । अपाक्षुः ॥ **म०** अपाक्षीः । अपाक्तम् । अपाक्त ॥ **उ०** अपाक्षम् । आत्मने० । अपक्त अपक्षाताम् ॥ १०. अपक्ष्यत्-त ॥ **कर्मणि**—पच्यते । **णिचि**—पाचयति--ते । **सनि**—पिपक्षति-ते । **यङि**—पापच्यते । **यङ्लुकि**—पापक्ति पापचीति ॥ **कृत्सु**—पक्तव्यम् । पचनीयम् । पाक्यम्[2] । अवश्यपाच्यम्[3] । पक्वः[4] । पचन् । पचमानः । पक्तुम् । पचनम् । पक्त्वा । विपच्य । पक्त्रिमम्[5] । पक्तिः ॥ पाचकः । पाकः । मितम्पचः । प्रस्थंपचः । नखम्पचः । पचेलिमः । उत्पचिष्णुः ॥

[३१४] **भज**=सेवायाम् । सकर्म० । अनिट् । उभय० ॥

१. भजति-ते ॥ ५. बभाज । भेजतुः[6] । भेजुः ॥ **म०** भेजिथ-बभक्थ[7] ॥ **उ०** बभाज-बभज । भेजिव ॥ **आत्मने०** भेजे ।

१. **लुङि षष्ठी विधा** । २ **चजोः कुघिण्यतोः** । ३ **ण्य आवश्यके** । इति कुत्वनिषेधः । ४ **पचो वः** । ५ **ड्वितः क्त्रिः** । ६. **तॄफलभजत्रपश्च** (११७) । इति एत्वाभ्यासलोपौ । ७. अनिटि थलि एत्वाभ्यासलोपौ न स्तः ।

भेजाते । भेजिरे ॥ ६. भक्ता ॥ ७. भक्ष्यति-ते ॥ ८. भज्यात् भक्षीष्ट ॥ ९. अभाक्षीत्[1] । अभाक्ताम् । अभाक्षुः ॥ **आत्मने०** अभक्त[2] । अभक्षाताम् ॥ १०. अभक्ष्यत्-त ॥ **कर्मणि**--भज्यते । **णिचि**—भाजयति-ते । **सनि**—बिभक्षति-ते । **यङि**—बाभज्यते । **यङ्लुकि**—बाभजीति-बाभक्ति । **कृत्सु**—भक्तव्यम् । भाग्यम् । भक्तः । भक्तिः । भजन्-भजमानः । भक्तुम् । भक्त्वा । विभज्य । भागी । भागः । भागधेयम् । भ्राता ॥

[३१५] **रञ्ज**=रागे । अकर्म० । अनिट् । उभय० ॥

१. रजति[3]-ते ॥ २. रजतु-रजताम् ॥ ३. अरजत्-अरजत ॥ ४. रजेत्-त ॥ ५. **प्र०** ररञ्ज । ररञ्जतुः । ररञ्जुः ॥ **म०** ररञ्जिथ-ररङ्क्थ ॥ **उ०** ररञ्जिव ॥ **आत्मने०** ररञ्जे ॥ **म०** ररञ्जिषे ॥ **उ०** ररञ्जिवहे ॥ ६. रङ्क्ता ॥ ७. रङ्क्ष्यति-ते ॥ ८. रज्यात्-रङ्क्षीष्ट ॥ ९. अराङ्क्षीत्[4] । अराङ्क्ताम् । अराङ्क्षुः ॥ **आत्मने०** अरङ्क्त[5] । अरङ्क्षाथाम् । अरङ्क्थ ॥ **भावे**—रज्यते । **णिचि**—रञ्जयति-रजयति[6] । **सनि**—रिरङ्क्षति-ते । **यङि**—रारज्यते । **यङ्लुकि**—रारञ्जीति-राराङ्क्ति । **कृत्सु**—रङ्क्तव्यम् । रञ्जनीयम् । रङ्ग्यम् । अवश्यरङ्ग्यम् । रक्तः । रजन् । रजमानः । रजकः । रञ्जनम् । रक्त्वा-रङ्क्त्वा । रागः । उपरागः । अनुरागः । अनुरज्य ॥

---

१. षष्ठो लुङ् । २. दशमो लुङ् । ३ **रञ्जेश्च** । इति शपि नकारलोपः । ४. षष्ठो लुङ् । ५ दशमो लुङ् । **झलो झलि** (३५) इति सलोपः । ६. **रञ्जेर्णौ मृगरमणे** । इति नलोपः । मृगरमणमात्रेऽत्र्म् । रजयति मृगान् ।

[३१६] **शप**=आक्रोशे । सकर्म० । अनिट् । उभय० ॥

१. शपति-ते ॥ **प्र०** शशाप । शेपतुः[1] । शेपुः ॥ **म०** शेपिथ-शशप्थ[2] ॥ **उ०** शशाप-शशप । शेपिव ॥ **आत्मने०** शेपे । शेपाते ॥ ६. शप्ता ॥ ७. शप्स्यति-ते ॥ ८. शप्यात् । शप्यास्ताम् ।—शप्सीष्ट । शप्सीयास्ताम् ॥ ९. अशाप्सीत्[3] । अशाप्ताम्[4] । अशाप्सुः । **आत्मने०** अशप्त[5] । अशप्साताम् । अशप्सत ॥ **कर्मणि**—शप्यते । **णिचि**—शापयति-ते । **सनि**—शिशप्सति-ते । **यङि**—शाशप्यते । **यङ्लुकि**—शाशपीति-शाशप्ति । **कृत्सु**—शप्तव्यम् । शपनीयम् । शप्यम् । शप्तः । शप्तवान् । शपन्-शपमानः । शप्तुम् । शपनम् । शापः । अभिशापः । शप्त्वा । संशप्य । शब्दः । शपथः ॥ शपथार्थोऽयमात्मनेपदी । शपते ।

[३१७] **यज**=देवपूजासङ्गतिकरणदानेषु । सकर्म० । अनिट् । उभय० ॥

१. यजति-ते ॥ २. यजतु-यजताम् ॥ ३. अयजत्-अयजत  ४. यजेत्-यजेत ॥ ५. इयाज[6] । ईजतुः[7] । ईजुः ॥ **म०**

१ **अत एकहल्मध्ये**— । २. अकारवत्वात्थलि भारद्वाजनियमात् वेट् । ३. षष्ठो लुङ् । ४. **झलो झलि (३५)** इति सलोपः । ५ **झलो झलि (३५)** । ६. लिटि द्वित्वे यज् यज् णल् इति स्थिते **लिट्यभ्यासस्योभयेषाम्** । वच्यादीनां ग्रह्यादीनां च संप्रसारणं स्याल्लिटि । इत्यभ्यासयकारस्य सम्प्रसारणे इ अ यज् अ इति जाते, **सम्प्रसारणाच्च** । सम्प्रसारणादचि परे पूर्वरूपमेकादेशः स्यात् । इति अकारस्य पूर्वरूपे, इ यज् अ इति जाते, **अचो ञ्णिति** (पृ० २०) । इति वृद्धौ रूपम् । ७. यज्+अतुस् इति स्थिते **वचिस्वपियजादीनां किति** । वचिस्वप्योः यजादीनां च सम्प्रसारणं स्यात्किति । इति सम्प्रसरणे पररूपे च इज् अतुस् इति जाते, द्वित्वे इज् इज् इति जाते, हलादिशेषे इ इज् सवर्णदीर्घे ईज् अतुस् =ईजतुः ।

इयजिथ-इयष्ठ ॥ उ० इयाज-इयज । ईजिव ॥ **आत्मने०** —ईजे । ईजाते । ईजिरे ॥ ६. यष्टा । यष्टासि-से ॥ ७. यक्ष्यति—यक्ष्यते । ८. इज्यात् । इज्यास्ताम् ॥—यक्षीष्ट । यक्षीयास्ताम् ॥ ९. अयाक्षीत् । अयाष्टाम् । अयाक्षुः । **आत्मने०** अयष्ट । अयक्षाथाम् । अयक्षत ॥ १०. अयक्ष्यत्-त ॥ **कर्मणि** —इज्यते । **णिचि**—याजयति—ते ॥ **सनि**—यियक्षति—ते । **यङि**—यायज्यते । **यङ्लुकि**—यायजीति—यायष्टि । **कृत्सु**—यष्टव्यम् । यजनीयम् । याज्यम् । इष्टः । इष्टवान् । यजन्—यजमानः । यष्टुम् । यजनम् । इष्ट्वा । समिज्य । यागः । यज्वा सोमेन इष्टवान् । सोमयाजी । इष्टिः । इज्यः । यज्ञः । यजुः । यज्ञियः । यष्टा । याजकः । यायजूकः ॥

[३१८] डु **वप्**=बीजसन्ताने । बीजसन्तानं क्षेत्रेबीजानां विकिरणम् । सकर्म० । सेट् । उभय० ॥

१. वपति—ते । उवाप । ऊपतुः । ऊपुः ॥ म० ऊपिथ—उवप्थ । उ० उवाप—उवप । ऊपिव ॥ **आत्मने०** ऊपे । ऊपाते । ऊपिरे ॥ २. वप्ता ॥ ७. वप्स्यति—ते । ८. उप्यात् । उप्यास्ताम् । —वप्सीष्ट ॥ ९. अवाप्सीत् । अवाप्ताम् । अवाप्सुः ॥ **आत्मने०** अवप्त । अवप्साताम् । अवप्सत ॥ १०. अवप्स्यत्-त ॥ अयं छेदनेऽपि । केशान्वपति ॥ **कर्मणि**—उप्यते । **णिचि**—वापयति—ते । **सनि**—विवप्सति-ते । **यङि**—वावप्यते । **यङ्लुकि**—वावपीति—वावप्ति । **कृत्सु**—वप्तव्यम् । वपनीयम् । वाप्यम् । उप्तः । वपन् ।

---

१. अनिट्पक्षे **व्रश्चेति** षत्वे ष्टुत्वे च रूपम् । २. **करणे यजः** । ३ **यजजपदशां यङः** । एभ्यो यङन्तेभ्यः ऊकः स्यात् । ४. 'यजने'—(३१७) रिवास्याणि लिटि प्रक्रियाः ।

वप्तुम् । वपनम् । उप्त्वा । न्यूप्य । निर्पूर्वकोऽयं दाने । निर्वपति । निर्वापः ॥

[३१९] **वह**=प्रापणे । सकर्म० । अनिट् । उभय० ॥

१. वहति–ते ॥ २. वहतु–ताम् ॥ ३. अवहत्–त ॥ ४. वहेत्–त ॥ ५. उवाह[1] । ऊहतुः । ऊहुः ॥ **म०** ऊहिथ–उवोढ[2] । ऊहथुः । ऊह ॥ **उ०** उवाह–उवह ॥ **आत्मने०** ऊहे । ऊहाते । ऊहिरे[4] ॥ ६. वोढा[3] । वोढासि–से ॥ ७. वक्ष्यति[4]–ते ॥ ८. उह्यात् । उह्यास्ताम् ।—वक्षीष्ट । वक्षीयास्ताम् ॥ ९. अवाक्षीत्[5] । अवोढाम् । अवाक्षुः ।—अवोढ[6] । अवक्षाताम् ॥ अवक्षत ॥ १०. अवक्ष्यत्–त ॥ उद्=उद्वाहे । उद्वहति, निर्–निर्वहति । प्र–प्रवहति । प्रवाहः । सम्–णिच्–संवाहनम् । "संवाहयामि चरणावुत पद्मताम्रौ" इति शाकुन्तलम् । **कर्मणि**—उह्यते । **णिचि**—वाहयति । **सनि**—विवक्षति–ते । **यङि**—वावह्यते । **यङ्लुकि**—वावहीति–वावोढि । **कृत्सु**—वोढव्यम् । वहनीयम् । वाह्यम् । वह्यम्[7] । ऊढः । वहन् । वहमानः । वोढुम् । वहनम् । ऊढ्वा । उदुह्य । ऊढिः ॥

[३२०] **वस**=निवासे । अकर्म० । अनिट्[8] । परस्मै० ॥

१. वसति ॥ ५. उवास[1] । ऊषतुः[9] । ऊषुः ॥ **म०** उवसिथ–उवस्थ । ऊषथुः । ऊष ॥ **उ०** उवास–उवस । ऊषिव ॥ ६.

१. तथा । २. थलि भारद्वाजनियमादिड्भावपक्षे ढत्वधत्वष्टुत्वढलोपाः । **सहिवहो**—(२४४)रिति ओत्वं च । ३. **सहिवहो**–(२४४) रिति ओत्वम् । ४. शूरमानं च वक्ष्यति (भट्टिः १६ । ५) ५. षष्ठो लुङ् । ६. दशमो लुङ् । ७. **वह्यं करणम्** । वहन्त्यनेनेति वह्यं शकटम् । ८. यजते' (३१७) रिवास्य लिटि प्रक्रिया: । ९. **शासिवसिघसीनां च** । इण्कुभ्यां परस्यैषां सस्य षः स्यात् । इति षत्वम् ।

वस्ता ॥ ७. वत्स्यति ॥ ८. उष्यात् ॥ ९. अवात्सीत् । अवात्ताम् । अवात्सुः ॥ १०. अवत्स्यत् ॥ **कर्मणि**—उष्यते । **णिचि**—वासयते । **सनि**—विवत्सति । **यङि**—वावस्यते । **यङ्लुकि**—वावसीति-वावस्ति । **कृत्सु**—वस्तव्यम् । वसनीयम् । वास्यम् । उषितः । वसन् । उषित्वा । व्युष्य । ऊषिवान् । अनु, अधि-उप, आङ्-पूर्वोयं सकर्मकः । अनुवसति गृहमित्यादि । प्र-विदेशगमने । प्रवसति । निर्-णिच् । नि-निर्वासनम् ॥

[३२१] **वेञ्**=तन्तुसन्ताने । सकर्म० । अनिट् । **उभय०** ॥

१. वयति-ते ॥ ५. **प्र०** उवाय । ऊयतुः-ऊवतुः । ऊयुः-ऊवुः ॥ **म०** उवयिथ । ऊयथुः-ऊवथुः । ऊय-ऊव ॥ **उ०** उवाय-

---

१. **सः स्यार्धधातुके** (२०४) इति सस्य तः । २. अवस् स् ताम् इति स्थिते वृद्धौ **झलो झलि** (३५) । इति सिचः सकारस्य लोपे अवास् ताम् इति जाते प्रत्ययलक्षणमाश्रित्य **सः स्यार्धधातुके** (२०४) इति सस्य तः । ३. **न पादम्याङ्** (२१४) इति परस्मैपदं न । ४. **वसति क्षुधोरिट्** । आभ्यां क्त्वा-निष्ठयोर्नित्यमिट् स्यात् । ५. वे+अ+ति इति स्थिते **एचोऽयवायावः** । इत्यादेशे 'वयति' । ६. वे+णल्=**वेञो वयिः** । 'वय्' इत्यादेशो वा स्याल्लिटि । इति वयादेशे, वय्+अ इति स्थिते, द्वित्वे हलादिशेषे च ववय् अ इति जाते, **लिट्यभ्यासस्ये**-(३१७)ति अभ्यासवकारस्य सम्प्रसारणे उ अ वय् अ इति भवति । अथ **सम्प्रसारणाच्चे**(३१७)ति पूर्वरूपे, **अचो ञ्णिति**-(पृ० २०) इत्युपधावृद्धौ च रूपम् । ७. वे अतुस् इति स्थिते वयादेशे कृते **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** । एषां किति ङिति च सम्प्रसारणं स्यात् । इति यकारस्य सम्प्रसारणे प्राप्ते, **लिटि वयो यः** । वयो यस्य सम्प्रसारणं न स्याल्लिटि । इति निषेधे वकारस्य सम्प्रसारणे रूपम् । ८. **वश्चास्यान्यतरस्यां किति** । वयो यस्य वो वा स्यात्किति लिटि । इति यकारस्य वकारे रूपम् । ९. क्षमूयुर्वसुधामूवुः (भट्टि: १४ । ८४) ।

उवय ऊयिव–ऊविव । ऊयिम–ऊविम ॥ **वयादेशाभावपक्षे–प्र०** ववतुः । ववुः ॥ **म०** वविथ–ववाथ । ववथुः । वव ॥ **उ०** ववौ । वविव । वविम ॥ **आत्मने० प्र०** ऊये । ऊयाते । ऊयिरे ॥ **पक्षे**–ऊवे । ऊवाते । ऊविरे ॥ **म०** ऊयिषे । ऊयाथे । ऊयिध्वे ॥ **पक्षे**–ऊविषे । ऊवाथे । ऊविध्वे–ढ्वे ॥ **उ०** ऊये । ऊयिवहे । ऊयिमहे ॥ ऊवे । ऊविवहे । ऊविमहे ॥ **वयादेशाभावपक्षे**– ववे । ववाते । वविरे ॥ **म०** वविषे । ववाथे । वविढ्वे–ध्वे ॥ **उ०** ववे । वविवहे । वविमहे ॥ ६. वाता । वातासि–से ॥ ७. वास्यति–ते ॥ ८. ऊयात्[३]–वासीष्ट । ऊयास्ताम्–वासीयास्ताम् ॥ ९. अवासीत् । अवासिष्टाम् । अवासिषुः । **आत्मने०** अवास्त । अवासाताम् । अवासत ॥ १०. अवास्यत्–त ॥ **कर्मणि**—ऊयते । ५. ऊये–ऊवे ॥ **णिचि**—वाययति–ते ॥ **सनि**—विवासति–ते ॥ **यङि**—वावायते । **यङ्लुकि**—वावाति–वावेति ॥ **कृत्सु**—वातव्यम् । वानीयम् । वेयम् । उतः । वयन् । वातुम् । वयनम् । वायः । तन्तुवायः । उत्वा । प्रवाय्य ॥

[३२२] **व्येञ्–संवरणे** । सकर्म० । अनिट् । उभय० ॥

१. व्ययति–ते ॥ ५. विव्याय[६] । विव्ययतुः । विव्ययुः ॥

---

१. **वेञः** । वेञो न सम्प्रसारणं स्याल्लिटि । **आदेच उपदेशेऽशिति** । (२६४) इत्यात्वम् । **आत णौ अलः** (२६४ इति औकारः । २. **आदेच उपदेशे**–(२६४) इत्यात्वम् । ३. आशीर्लिङः कित्वात् सम्प्रसारणम् । **अकृत्सार्वधातुकयो**–(९४)रिति दीर्घः । ४. **शाच्छासाह्वाव्यावेपां युक्** । णौ परे । पुकोऽपवादः । ५. **ल्यपि च** । वेञो ल्यपि सम्प्रसारणं न स्यात् । ६. **न व्यो लिटि** । व्येङ आत्वं न स्याल्लिटि । **आत औ णल** (२६४) इति प्राप्तमात्वमनेन निषिद्ध्यते । तथा च—द्वित्वे सम्प्रसारणे णल्प्रयुक्तवृद्धौ 'विव्याय' इति रूपम् ।

म० विव्ययिथ । विव्ययथुः ॥ विव्यये । विव्ययाते । विव्ययिरे ॥ ६. व्याता ॥ ७. व्यास्यति-ते ॥ ८. वीयात् । वीयास्ताम्-व्यासीष्ट ॥ ९. अव्यासीत् । अव्यासिष्टाम्-अव्यास्त । अव्यासाताम् । १०. अव्यास्यत्-अव्यास्यत ॥ **कर्मणि**—व्यायते । **णिचि**—व्याययति-ते ॥ **सनि**—विव्यासति-ते ॥ **यङि**—वेवीयते । **यङ्लुकि**—वाव्येति-वाव्याति । **कृत्सु**—व्यातव्यम् । व्यानीयम् । व्येयम् वातम् । व्ययन्-व्ययमानः । व्यातुम् । व्यानम् । वीत्वा । संव्याय । परिवीय-परिव्याय । नीविः । नीवी ।

[३२३] **ह्वेञ्** स्पर्धायां शब्दे च । शब्दार्थे सकर्म० । अन्यत्राऽकर्मक । अनिट् । उभय० ॥

१. ह्वयति-ते ॥ २. ह्वयतु-ताम् ॥ ३. अह्वयत्-त ॥ ४. ह्वयेत्-त ॥ ५. प्र० जुहाव । जुहुवथुः । जुहुवुः ॥ म० जुहविथ-जुहोथ । जुहुवथुः । जुहुव ॥ उ० जुहाव-जुहव । जुहुविव । जुहुविम ॥ आत्मने० जुहुवे । जुहुवाते । जुहुविरे ॥ म० जुहुविषे । वाथे । जुहुविढ्वे-ध्वे ॥ उ० जुहुवे । जुहुविवहे । जुहुविमहे ॥

१. **इडत्यर्ती**-(२८१) ति थलो नित्यमिट् । २ **शाच्छासा** ३२१)इत्यादिना युक् । ३. **व्यश्च** । इति सम्प्रसारणप्रतिषेधः । ४ **विभाषा परेः** । इति सम्प्रसारणविकल्पः । ५. ह्वे+णल=**आदेच उपदेश** (२६४) इत्यात्वे, ह्वा+अ इति स्थिते, **अभ्यस्तस्य च** । अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात् । इति सम्प्रसारणे पररूपे हु+अ इति जाते, हु इत्यस्य द्वित्वे **कुहोश्चु**रिति चुत्वे तस्य जश्त्वे **अचो ञ्णिति** (पृ० २०) इति वृद्धौ अव.दशे च रूपम् ।

६. ह्वाता । ह्वातासि-से ॥ ७. ह्वास्यति-ते ॥ ८. हूयात्-ह्वासीष्ट । ९. अह्वत्[1] । अह्वताम् । अह्वन् ॥ आत्मने० अह्वत[2] । अह्वेताम् । अह्वन्त ॥ पक्षे—अह्वास्त[3] । अह्वासाथाम् । अह्वासत ॥ १०. अह्वास्यत्-त ॥ कर्मणि—हूयते । णिचि—ह्वाययति-ते । सनि—जुहूषति-ते । यङि—जोहूयते । यङ्लुकि-जोहवीति-जोहोति । कृत्सु—ह्वातव्यः । ह्वानीयः । ह्वेयः । हूतः । हूतिः । ह्वयन् । ह्वानम् । हूत्वा । आहूय । आ-आह्वाने=आह्वयते । आह्वयमानः । नि-सम्-उप-विभ्यः-आत्मनेपदम् । निह्वयते इत्यादि ।

[३२४] वद=व्यक्तायां वाचि । सकर्म० । सेट् । परस्मै० ॥

१. वदति ॥ २. वदतु ॥ ३. अवदत् ॥ ४. वदेत् ॥ ५. प्र० उवाद[4] । ऊदतुः । ऊदुः ॥ म० उवदिथ । ऊदथुः । ऊद ॥ उ० उवाद-उवद । ऊदिव । ऊदिम ॥ ६. वदिता ॥ ७. वदिष्यति ॥ ८. उद्यात् ॥ ९. अवादीत्[5] ॥ १०. अवदिष्यत् ॥ शास्त्रे[6] । भृत्यानुपवदते[7] । क्षेत्रे विवदन्ते[8] । सम्प्रवदन्ते[9] ब्राह्मणाः ।

१. **लिपिसिचिह्वश्च** (पृ० इलङ्) । **आतो लोप इटि च** (२६४) द्वितीयो लुङ् । २ **आत्मनेपदेष्वन्यतरस्याम्** । अङ्वा स्यात् । अष्टमे लुङ् । उच्चैरसौ राघवमाह्वतेदम् (भट्टिः २ । ५१) । ३. आह्वास्त स मुहुः शूरान् (भट्टिः ६ । २५ । ४. प्रथमं द्वित्वे ततो **लिट्यभ्यासस्ये**ति सम्प्रसारणे रूपम् । ५. सप्तमो लुङ् । **वदव्रजे**(पृ० १२)ति वृद्धिः । ६. **भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रेणषु वदः** । आत्मनेपदं स्यात् । भासमानो ब्रवीतीत्यर्थः । ७. सान्त्वयतीत्यर्थः । ८. विमतौ । ९. सम्भूय वदन्तीत्यर्थः ।

विवदन्ते-विवदन्ति वा मौहूर्तिकाः। न्यायमपवदतेऽनभिज्ञः॥ **कर्मणि**—उद्यते। ५. ऊदे। ९. अवादि। **णिचि**—वादयते। **सनि**—विवदिषति। **यङि**—वावद्यते। **यङ्लुकि**—वावदीति-वावत्ति। **कृत्सु**—वदितव्यम्। वदनीयम्। वाद्यम्। अनुवाद्यम्। अपवाद्यम्। ब्रह्मोद्यम्-ब्रह्मवद्यम्। अवद्यम्=पापम्; गर्ह्यत्वात्। उदितः। वदन्। वदितुम्। उदित्वा। अनूद्य। वदावदः। वादित्रम्। वावदूकः। अप, परि, निन्दायां अपवादः। परिवादः। प्र-कथने। प्रवादः। वि-विवादः। सम्-संवादः। अनु-अनुवादः। वि+सम्=विसंवादः।

[३२५] **टु ओश्वि=गतिवृद्ध्योः**। अकर्म०। सेट्। परस्मै०॥

१. श्वयति॥ २. श्वयतु॥ ३. अश्वयत्॥ ४. श्वयेत्॥ ५. **प्र०** शुशाव। शुशुवतुः। शुशुवुः॥ **म०** शुशविथ। शुशुवथुः। शुशुव॥ **उ०** शुशाव-शुशव। शुशुविव। शुशुविम॥ **संप्रसारणाभावपक्षे**—**प्र०** शिश्वाय। शिश्वियतुः। शिश्वियुः। **म०** शिश्वयिथ।

---

१. **"विभाषा विप्रलापे"** इति विकल्पेनात्मनेपदम्। २ **अपाद्वदः**। ३. **नपादम्याङि** (२१४)ति परस्मैपदप्रतिषेधः। ४. उपसर्गे उपपदे ण्यत्। ५. ब्रह्म वेदः तस्य वदनमित्यर्थः। **वदः सुपि क्यप् च**। इति क्यप्। ६. यत्प्रत्यये रूपम्। ७. **अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु**। एष्वर्थेषु निपात्यन्ते। ८. उदित्वालं चिरं यत्नात् भट्टिः ७। ९६)। ९. **विभाषा श्वेः**। श्वयतेः सम्प्रसारणं वा स्यात् लिटि यङि च। इति सम्प्रसारणे द्वित्वे शु शु अ इति स्थिते वृद्ध्यावादेशयो रूपम्। १०. **श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः**। इति **लिट्यभ्यासस्ये** ३१७)ति प्राप्तं संप्रसारणं प्रतिषिद्ध्यते। श्वि श्वि इत्यत्र हलादिशेषे शिश्वि इति भवति। ततो वृद्ध्यायादेशयोः रूपम्॥

शिश्वियथुः । शिश्विय ॥ उ० शिश्वाय–शिश्वय । शिश्वियिव । शिश्वियिम ॥ ६. श्वयिता ॥ ७. श्वयिष्यसि ॥ ८. शूयात् ॥ ९. अश्वत् । अश्वताम् । अश्वन् ।—अशिश्वियत् ।—अश्वयीत् ॥ १०. अश्वयिष्यत

**भावे**—शूयते । **णिचि**—श्वाययति–ते । ९. अशूशवत्–अशिश्वयत्

**सनि**—शिश्वयिषति । **यङि**—शेश्वीयते–शोशूयते । **यङ्लुकि**—शेश्वयीति–शेश्वेति । **कृत्सु**—श्वयितव्यम् । श्वयनीयम् । श्वयम् । शूनः । श्वयितुम् । श्वयनम् । श्वयित्वा । उच्छ्वय । श्वयथुः । उदश्वित् । श्वा । मातरिश्वा=वायुः ॥

भ्वादयः सम्पूर्णाः ॥ १ ॥

१. आशीर्लिङि यासुटः कित्वाद्वचिस्वपी(३१७)ति सम्प्रसारणे पूर्वरूपे **अकृत्सार्वधातुकयो**(९४)रिति दीर्घः । २. द्वितीयो लुङ् । **जॄस्तम्भु**— पृ० ११) इति विकल्पेन अङि, **श्वयतेरः** । श्वयतेरिकारस्य अकारः स्यादङि । इत्यकारे रूपम् । ३. तृतीयो लुङ् । **विभाषा धेट्श्व्योः** (पृ० ११) इति चङ् । ४. अङ्चङोरभावे सप्तमो लुङ् । **ह्म्यन्तक्षणश्वसे**—(१४१)ति न वृद्धिः । रुदतोऽऽशिश्वयचक्षुरास्यं हेतोस्तवाश्वयीत् (भट्टिः ६ । १९) । ५. **णौ च संश्चङोः** । सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात् । ६. **ओदितश्च** । इति निष्ठानत्वम् । ७. यजादित्वात्सम्प्रसारणम् । ८. मातरि अन्तरिक्षे (अखिलपरिच्छेत्तरि) श्वयति, सञ्चरति वर्द्धते इति वा–मातरिश्वा । मातरि जनन्यां श्वयति वर्द्धते इति वा । श्वन्नुक्षन्नित्यादिना निपातनात्सप्तम्या अलुक् ।

श्रीगणेशाय नमः

# बृहद्धातुरूपावल्याम् ।

## अदादयः ॥ २ ॥

[३२६] **अद्**=भक्षणे । सकर्म० । अनिट् । परस्मै० ॥

१. **प्र०** अत्ति । अत्तः । अदन्ति ॥ **म०** अत्सि । अत्थः । अत्थ । **उ०** अद्मि । अद्वः । अद्मः ॥ २. **प्र०** अत्तु–अत्तात् । अत्ताम् । अदन्तु ॥ **म०** अद्धि[2]–अत्तात् । अत्तम् । अत्त ॥ **उ०** अदानि । अदाव । अदाम ॥ ३. **प्र०** आदत्[3] । आत्ताम् । आदन् ॥ **म०** आदः । आत्तम् । आत्त ॥ **उ०** आदम् । आद्व । आद्म ॥ ४. **प्र०** अद्यात् । अद्याताम् । अद्युः ॥ **म०** अद्याः । अद्यातम् । अद्यात ॥ **उ०** अद्याम् । अद्याव । अद्याम ॥ ५. **प्र०** जघास[4] । जक्षतुः[5] । जक्षुः ॥ **म०** जघसिथ । जक्षथुः । जक्ष ॥ **उ०** जघास–

---

१. **अदिप्रभृतिभ्यः शपः** । लुक् स्यात् । २. **हुझल्भ्यो हेर्धिः** । होर्झलन्तेभ्यश्च हेर्धिः स्यात् । ३. **आडजादीनाम्** (२) इत्याट् । **अदः सर्वेषाम्** । अदः परस्य अपृक्तसार्वधातुकस्य अडागमः स्यात्सर्वेषां मतेन । ४. **लिट्यन्यतरस्याम्** । अदेर्घस्लृ वा स्याल्लिटि । इति घसादेशे द्वित्वे हलादिशेषे घघस् इति जाते, **अभ्यासे चर्च** (पृ० ७) इति झशां जशि गघस इति जाते **कुहोश्चुः** (पृ० ७) इति चुत्वे जघस् +अ इति जाते, **अचो ञ्णिति** (पृ० २०) इति वृद्धौ 'जघास'। ५. जघस् +अतुस् इति स्थिते, **गमहनजनखनघसा**—(२५५) मिति उपधालोपे जघ्स् इति जाते **शासिवसिघसीनां च** (३२०) इति सस्य षत्वे **खरि चे**ति चर्त्वे ज क् ष् +अतुस् =जक्षतुः ।

जघस । जक्षिव । जाक्षिम ॥ पक्षे[1]—**प्र०** आद । आदतुः । आदुः ॥ **म०** आदिथ[2] । आदथुः । आद ॥ **उ०** आद । आदिव । आदिम ॥ **६. प्र०** अत्ता । अत्तारौ । अत्तारः ॥ **म०** अत्तासि । अत्तास्थः । अत्तास्थ ॥ **उ०** अत्तास्मि । अत्तास्वः । अत्तास्मः ॥ **७. प्र०** अत्स्यति । अत्स्यतः । अत्स्यन्ति ॥ **म०** अत्स्यसि । अत्स्यथः । अत्स्यथ ॥ **उ०** अत्स्यामि । अत्स्यावः । अत्स्यामः ॥ **८. प्र०** अद्यात् । अद्यास्ताम् । अद्यासुः ॥ **म०** अद्याः । अद्यास्तम् । अद्यास्त ॥ **उ०** अद्यासम् । अद्यास्व । अद्यास्म ॥ **९. प्र०** अघसत्[3] । अघसताम् । अघसन् ॥ **म०** अघसः । अघसतम् । अघसत ॥ **उ०** अघसम् । अघसाव । अघसाम ॥ **१०. प्र०** आत्स्यत् । आत्स्यताम् । आत्स्यन् ॥ **म०** आत्स्यः । आत्स्यतम् । आत्स्यत ॥ **उ०** आत्स्यम् । आत्स्याव । आत्स्याम ॥ व्यतिहारे आत्मनेपदं भवति । व्यत्यत्ते, व्यत्यदाते, व्यत्यदते । इत्यादि । **कर्मणि**— अद्यते । **५.** आदे । **पक्षे**—जक्षे ॥ **९.** अघासि । अघत्साताम् ॥ **णिचि**—आदयते[4]-आदयति[5] । **९.** आदिदत्--त ॥ **सनि**—जिघत्सति । **कृत्सु**—अत्तव्यम् । अदनीयम् । अद्यम् । जग्धम्[6] । जग्धिः । जग्धवान् । अन्नः[7] । अन्नवान् । अदन् । अदती । अत्स्यन् । अत्स्यती[8]--अत्स्यन्ती । अत्तुम् । अदनम् । जग्ध्वा । प्रजग्ध्य । अद्मरः[9] । घस्मरः । घासः ॥

---

१. घस्लादेशाभावपक्षे रूपम् । २. **इडत्यर्तिव्ययतीनाम्** । (२८१) इति थलो नित्यमिट् । ३. **लुङ्सनोर्घस्लृ** । अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । द्वितीयो लुङ् । ४. **निगरणचलने**—ति प्राप्तस्य परस्मैपदस्य **अदेः प्रतिषेधः** इति निषेधात् आत्मनेपदम् । ५. अकर्त्रभिप्राये **शेषात्कर्तरि परस्मैपदम्** । इति परस्मैपदमपि । ६. **अदो जग्धिर्ल्यप्ति किति** । अदो जग्धिः स्यात् ल्यपि तादौ किति च । ७. **अन्नाण्णः** । इति अन्नं लब्धा आन्नः' इति निपातनाज्ज्ञापकात् निष्ठातस्य नत्वमपि । ८ नुमः पूर्वं शपो लुप्तत्वात् न नुम् । ९. **आच्छीनद्यो**—रिति वा नुम् । १०. **सृघस्यदः क्मरच्** ।

[३२७] **हन**=हिंसागत्योः । सकर्म० । अनिट् । वधादेशे सेट् । परस्मै० ॥

**१. प्र०** हन्ति । हतः[१] । घ्नन्ति[२] ॥ **म०** हंसि । हथः । हथ ॥ **उ०** हन्मि । हन्वः । हन्मः ॥ **२. प्र०** हन्तु–हतात् । हताम् । घ्नन्तु ॥ **म०** जहि[३]–हतात् । हतम् । हत ॥ **उ०** हनानि । हनाव । हनाम ॥ **३. प्र०** अहन् । अहताम् । अघ्नन् ॥ **म०** अहन् । अहतम् । अहत ॥ **उ०** अहनम् । अहन्व । अहन्म ॥ **४. प्र०** हन्यात् । हन्याताम् । हन्युः ॥ **म०** हन्याः । हन्यातम् । हन्यात ॥ **उ०** हन्याम् । हन्याव । हन्याम ॥

**५. प्र०** जघान[४] । जघ्नतुः । जघ्नुः ॥ **म०** जघनिथ[५]–जघन्थ[६] । जघ्नथुः । जघ्न ॥ **उ०** जघान--जघन । जघ्निव । जघ्निम ॥ **६. प्र०** हन्ता । हन्तारौ ॥ **म०** हन्तासि ॥ **उ०** हन्तास्मि ॥ **७.** हनिष्यति ॥ **८. प्र०** वध्यात्[७] । वध्यास्ताम् । वध्यासुः ॥ **म०** वध्याः ॥ **उ०** वध्यासम् ॥ **९. प्र०** अवधीत्[८] ॥ अवधिष्टाम् । अवधिषुः ॥ **म०** अवधीः ॥ **उ०** अवधिषम् ॥ **१०.** अहनिष्यत् ॥ प्रणिहन्ति ॥

१. **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** । अनुनासिकान्तानामनुदात्तोपदेशानां तनोत्यादीनां वनतेश्च लोपः स्याज्झलादौ क्ङिति । इति नकारलोपः । २ **गमहनजने**—(२५५)ति उपधालोपे, **हो हन्तेर्ञ्णिन्नेषु** । ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हस्य कुत्वं स्यात् । ३ **हन्तेर्जः** । हौ परे । ४. **अभ्यासाच्च** । अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । इति कुत्वम् । ५. थलि वेट्त्वात् इटि रूपम् । ६. इडभावे रूपम् । ७. **हनो वध लिङि** । आर्धधातुके लिङि हन्तेर्वधादेशः स्यात् । ८. **लुङि च** । हन्तेर्वधादेशः । वधादेशस्य सेट्त्वात्सप्तमो लुङ्

**आत्मनेपदे**—१. **प्र०** आहते । आघ्नाते । आघ्नते ॥ **म०** आहसे । आघ्नाथे । आहध्वे ॥ **उ०** आघ्ने । आहन्वहे । आहन्महे ॥ **२. प्र०** आहताम् । आघ्नाताम् । आघ्नताम् ॥ **म०** आहस्व । आघ्नाथाम् । आहध्वम् ॥ **उ०** आहनै । आहनावहै । आहनामहै ॥ **३. प्र०** आहत । आघ्नाताम् । आघ्नत ॥ **म०** आहथाः । आघ्नाथाम् । आहध्वम् ॥ **उ०** आघ्नि । आहन्वहि । आहन्महि ॥ ४. आघ्नीत ॥ आघ्नीयाताम् । आघ्नीरन् ॥ **म०** आघ्नीथा । आघ्नीयाथाम् । आघ्नीध्वम् ॥ **उ०** आघ्नीय । आघ्नीवहि । आघ्नीमहि ॥

**५. प्र०** आजघ्ने । आजघ्नाते । आजघ्निरे ॥ **म०** आज- । आजघ्नाथे । आजघ्निध्वे ॥ **उ०** आजघ्ने । आजघ्निवहे । आजघ्निमहे ॥ **६. प्र०** आहन्ता । आहन्तारौ ॥ **म०** आहन्तासे ॥ **उ०** आहन्ताहे ॥ **७. प्र०** आहनिष्यते ॥ **म०** आहनिष्यसे ॥ **उ०** आहनिष्ये ॥ **८. प्र०** आवधिषीष्ट ॥ **म०** आवधिषीष्ठा ॥ **उ०** आवधिषीय ॥ **९. प्र०** आवधिष्ट । आवधिषाताम् । आवधिषत ॥ **म०** आवधिष्ठाः ॥ **उ०** आवधिषि ॥ **पक्षे**—आहत । आहसाताम् । आहसत ॥ **म०** आहथाः । आहसाथाम् । आहध्वम् ॥ **उ०** आहसि । आहन्वहि । आहन्महि ॥ १०. आहनिष्यत ॥ **कर्मणि**—हन्यते । **५.** जघ्ने । **९.** अघानि । अघानिषाताम् ॥ **पक्षे**—अवधि । अव-

१. **आङो यमहनः** आङ परयोर्यमहनोरात्मनेपदं स्यात । २ **आत्मनेपदेष्वनतः** (२) । ३ **आत्मनेपदेष्वन्यतरस्याम्** । हनो वधादेशो वा स्याल्लुङि आत्मनेपदेषु परेषु । **हनः सिच** । कित्स्यादिति शेष । कित्वात **अनुदात्तोपदेश**—(३२७ ति नकारलोप. । **स्कोरिति** सलोप । ८ वमयोः झल्त्वाभावात् अनुनासिकलोपो न ।

धिषाताम् । **णिचि**—घातयति-ते ॥ ९. अजीघतत्-त । **सनि**—आ-आजिघांसते । जिघांसति[2] । **यङि**—जेघ्नीयते[3] । जङ्घन्यते[4] । **यङ्-लुकि**—जङ्घनीति-जङ्घन्ति ॥ **कृत्सु**—हन्तव्यः । हननीयः । वध्यः-घात्यः । हतः । घ्नन् । घ्नती । हनिष्यन् । हनिष्यती-हनिष्यन्ती । हन्तुम् । हननम् । हत्वा । प्रहत्य । ब्रह्महत्या । जघ्निवान्[5]-जघन्वान् । ब्रह्महा । भ्रूणहा । वृत्रहा । घातुकः । प्र-प्रहतौ, प्रहन्ति । परा-पराहतौ-पराहन्ति । अप-अपहतौ, अपहन्ति । सं-संघाते, संहन्ति । वि-विघाते । विहन्ति । प्रति-प्रतिघाते, प्रतिहन्ति । उद्-उद्घाते । उद्घन्ति । अभि+आ=आघाते । अभ्याहन्ति ; वि+आ, व्याघाते-व्याहन्ति । इत्यादि ।

[३२८] **द्विष**=अप्रीतौ । सकर्म० । अनिट् । उभय० ।

१. **प्र०** द्वेष्टि । द्विष्टः । द्विषन्ति ॥ **म०** द्वेक्षि । द्विष्ठः । द्विष्ठ ॥ **उ०** द्वेष्मि । द्विष्वः । द्विष्मः ॥ २. द्वेष्टु-द्विष्टात् । द्विष्टाम् । द्विषन्तु ॥ **म०** द्विड्ढि[6] । द्विष्टम् । द्विष्ट ॥ **उ०** द्वेषाणि । द्वेषाव । द्वेषाम ॥ ३. **प्र०** अद्वेट्[7]-अद्वेड् । अद्विष्टाम् । अद्विषन्-अद्विषुः[8] ॥ **म०** अद्वेट्-अद्वेड् । अद्विष्टम् । अद्विष्ट ॥ **उ०** अद्वेषम् । अद्विष्व ।

१. **हनस्तोऽचिण्णलोः** । हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञ्णिति णि । २. **अज्झनगमां सनि** । अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । **अभ्यासाच्च** । इति कुत्वम् । ३. **हन्तेर्हिंसायां घ्नीभावो वाच्यः** । ४. **नुगतोऽनुनासिकान्तस्य** । अनुनासिकान्तस्य अङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् । ५. **विभाषा गमहनविदविशाम्** । इति क्वसोरिड्-विकल्पः । ६. **हुझल्भ्यो हेर्धिः** (३२६) । ७. अद्वेष्+त् इति स्थिते **हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्** । इति तकारलोपे जश्त्वं चर्त्वं वा । ८. **द्विषश्च** । लङो झेर्जुस् वा स्यात् ।

अद्विष्म ॥ ४. प्र० द्विष्यात् । द्विष्याताम् । द्विष्युः ॥ म० द्विष्याः । द्विष्यातम् । द्विष्यात ॥ उ० द्विष्याम् । द्विष्याव । द्विष्याम ॥ ५. प्र० दिद्वेष । दिद्विषतुः । दिद्विषुः ॥ म० दिद्वेषिथ ॥ दिद्विषथुः । दिद्विष ॥ उ० दिद्वेष । दिद्विषिव । दिद्विषिम ॥ ६. प्र० द्वेष्टा । द्वेष्टारौ ॥ म० द्वेष्टासि ॥ द्वेष्टास्मि ॥ ७. प्र० द्वेक्ष्यति । म० द्वेक्ष्यसि ॥ उ० द्वेक्ष्यामि ॥ ८. प्र० द्विष्यात् । द्विष्यास्ताम् । द्विष्यासुः ॥ म० द्विष्याः । उ० द्विष्यासम् ॥ ९. प्र० अद्विक्षत् । अद्विक्षताम् । अद्विक्षन् ॥ म० अद्विक्षः । अद्विक्षतम् । अद्विक्षत ॥ उ० अद्विक्षम् । अद्विक्षाव । अद्विक्षाम ॥ १०. अद्वेक्ष्यत् ॥ **आत्मनेपदे**—१. प्र० द्विष्टे । द्विषाते । द्विषते ॥ म० द्विक्षे । द्विषाथे । द्विड्ढ्वे ॥ उ० द्विषे । द्विष्वहे । द्विष्महे ॥ २. प्र० द्विष्टाम् । द्विषाताम् । द्विषताम् ॥ म० द्विक्ष्व । द्विषाथाम् । द्विड्ढ्वम् ॥ उ० द्वेषै । द्वेषावहै । द्वेषामहै ॥ ३. प्र० अद्विष्ट । अद्विषाताम् । अद्विषत ॥ म० अद्विष्ठाः ॥ अद्विषाथाम् । अद्विड्ढ्वम् ॥ उ० अद्विषि । अद्विष्वहि । अद्विष्महि ॥ ४. प्र० द्विषीत । द्विषीयाताम् । द्विषीरन् ॥ म० द्विषीथाः । द्विषीयाथाम् । द्विषीध्वम् ॥ उ० द्विषीय । द्विषीवहि । द्विषीमहि ॥ ५. प्र० दिद्विषे । दिद्विषाते । दिद्विषिरे । म० दिद्विषिषे । दिद्विषाथे । दिद्विषिध्वे ॥ उ० दिद्विषे । दिद्विषिवहे । दिद्विषिमहे ॥ ६. प्र० द्वेष्टा । द्वेष्टारौ । द्वेष्टारः ॥ म० द्वेष्टासे । उ० द्वेष्टाहे ॥ ७. प्र० द्वेक्ष्यते ॥ म० द्वेक्ष्यसे ॥ उ० द्वेक्ष्ये ॥ ८. द्विक्षीष्ट । द्विक्षीयास्ताम् । द्विक्षीरन् । म० द्विक्षीष्ठाः । द्विक्षीयास्थाम् । द्विक्षीध्वम् ॥ उ० द्विक्षीय । द्विक्षीवहि । द्विक्षीमहि ॥ ९. प्र० अद्विक्षत । अद्विक्षा-

---

१. लुङि पञ्चमी विधा । २. लुङि द्वादशी विधा ।

ताम् । अद्विक्षन्त ॥ **म०** अद्विक्षथाः । अद्विक्षाथाम् । अद्विक्षध्वम् ॥ **उ०** अद्विक्षि । अद्विक्षावहि । अद्विक्षामहि ॥ १०. अद्वेक्ष्यत ॥ **कर्मणि**—द्विष्यते । ९. अद्वेषि ॥ **णिचि**—द्वेषयति-ते । ९. अदिद्विषत्-त ॥ **सनि**—दिद्विक्षति-ते ॥ **यङि**—देद्विष्यते । **यङ्लुकि**—देद्विषीति-देद्वेष्टि ॥ **कृत्सु**—द्वेष्टव्यः । द्वेषणीयः । द्वेष्यः । द्विष्टः । द्विषन् । द्विषती । द्विषाणः । द्वेक्ष्यन् । द्वेक्ष्यती-न्ती । द्वेक्ष्यमाणा । द्वेष्टुम् । द्वेषणम् । द्विष्ट्वा । प्रद्विष्य ।

[३२९] **दुह्**=प्रपूरणे । प्रपूरणं दोहनम् । सकर्म० । अनिट् । उभय० ॥

**परस्मै०** १. **प्र०** दोग्धि[1] । दुग्धः । दुहन्ति ॥ **म०** धोक्षि[2] । दुग्धः । दुग्ध ॥ **उ०** दोह्मि । दुह्वः । दुह्मः ॥ २. **प्र०** दोग्धु-दुग्धात् । दुग्धाम् । दुहन्तु ॥ **म०** दुग्धि[3]-दुग्धात् । दुग्धम् । दुग्ध ॥ **उ०** दोहानि । दोहाव । दोहाम ॥ ३. **प्र०** अधोक्-ग् । अदुग्धाम् । अदुहन् ॥ **म०** अधोक्-ग् ॥ अदुग्धम् । अदुग्ध ॥ **उ०** अदोहम् । अदुह्व । अदुह्म ॥ ४. **प्र०** दुह्यात् । दुह्याताम् । दुह्युः ॥ **म०** दुह्याः । दुह्यातम् । दुह्यात ॥ **उ०** दुह्याम् । दुह्याव । दुह्याम ॥

५. **प्र०** दुदोह । दुदुहतुः । दुदुहुः ॥ **म०** दुदुहथुः । दुदुह ॥ **उ०** दुदोह । दुदुहिव । दुदुहिम ॥ ६. **प्र०** दोग्धा ॥ **म०** दोग्धासि ॥ **उ०** दोग्धास्मि ॥ ७. **प्र०** धोक्ष्यति ॥ **म०** धोक्ष्यसि ॥ **उ०** धोक्ष्यामि ॥ ८. दुह्यात् । दुह्यास्ताम् ॥ ९.

१. **दादेर्धातोर्घः** । उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । २. भष्भावः । हस्य घः । सस्य चर्त्वेन कः । तस्य षत्वम् । ३. **हुझल्भ्यो हेर्धिः** (३२६) ।

**प्र०** अधुक्षत्[1] । अधुक्षताम् । अधुक्षन् ॥ **म०** अधुक्षः । अधुक्षतम् । अधुक्षत ॥ **उ०** अधुक्षम् । अधुक्षाव । अधुक्षाम ॥ १०. अधोक्ष्यत् ॥

**आत्मनेपदे**—१. **प्र०** दुग्धे । दुहाते । दुहते ॥ **म०** धुक्षे । दुहाथे । धुग्ध्वे ॥ **उ०** दुहे । दुह्वहे । दुह्महे ॥ २. **प्र०** दुग्धाम् । दुहाताम् । दुहताम् ॥ **म०** धुक्ष्व । दुहाथाम् । धुग्ध्वम् ॥ **उ०** दोहै । दोहावहै । दोहामहै ॥ ३. अदुग्ध[2] । अदुहाताम् । अदुहत ॥ **म०** अदुग्धाः । अदुहाथाम् । अदुग्ध्वम् । **उ०** अदुहि । अदुह्वहि । अदुह्महि ॥ ४. **प्र०** दुहीत । दुहीयाताम् । दुहीरन् ॥ **म०** दुहीथाः । दुहीयाथाम् । दुहीध्वम् ॥ **उ०** दुहीय । दुहीवहि ।

५. **प्र०** दुदुहे । दुदुहाते । दुदुहिरे ॥ **म०** दुदुहिषे । –ध्वे ॥ **उ०** दुदुहे । दुदुहिवहे । दुदुहिमहे ॥ ६. **प्र०** दोग्धा ॥ **म०** दोग्धासे ॥ **उ०** दोग्धाहे ॥ ७. **प्र०** धोक्ष्यते ॥ **म०** धोक्ष्यसे ॥ **उ०** धोक्ष्ये ॥ ८. **प्र०** धुक्षीष्ट ॥ **म०** धुक्षीष्ठाः ॥ **उ०** धुक्षीय ॥ ९. **प्र०** अदुग्ध-अधुक्षत[3] । अधुक्षाताम् । अधुक्षन्त ॥ **म०** अदुग्धाः—अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम् । अधुक्षध्वम् ॥ **उ०** अधुक्षि । अधुक्ष्वहि—अधुक्षावहि । अधुक्ष्महि—अधुक्षामहि ॥ १०. अधोक्ष्यत ॥ **कर्मणि**—दुह्यते । ९. अदोहि ॥ **णिचि**—दोहयति-ते ।

१. लुङि पञ्चमी विधा । २. अदुह् + त इति स्थिते, **दादेर्धातोर्घः** । (३२९) अदुघ् + त, **झषस्तथोर्धोऽधः** (१८९) अदुघ् + ध; जश्त्वम् 'अदुग्ध' । ३. अदुह् + क्स + त इति स्थिते हकारस्य घकारे, अदुघ् + स + त इति जाते, **एकाचो बशो भष्**—(१८९)ति दकारस्य धकारे अधुघ् + स + त इति जाते घकारस्य चर्त्वे अधुक् + स + त इति जाते षत्वे 'अधुक्षत' इति । **लुग्वा दुह-दिहेति** क्सस्य लुक्पक्षे त थास् ध्वं वहिषु 'अदुग्ध' इत्यादि लङ्वद्रूपाणि ।

५. दोहयाञ्चकार-चक्रे । ९. अदूदुहत्-त । **सनि**—दुधुक्षति-ते । **यङि**—दोदुह्यते । **यङ्लुकि**—दोदुहीति-दोदोग्धि । **कृत्सु**—दोग्धव्यम् । दोहनीयम् । दुह्यम्[1]-दोह्यम् । दुग्धम् । दुहन् । दुहन्ती । दुहानः । धोक्ष्यन् । धोक्ष्यती-न्ती ॥ दोग्धुम् । दुग्ध्वा । संदुह्य । गोधुक् । कामदुघा । दुहिता ॥

[३३०] **दिह्**=उपचये । अकर्म० । अनिट् । उभय० ॥

**परस्मै**—१. **प्र**० देग्धि । **म**० धेक्षि । **उ**० देह्मि ॥ २. देग्धु ॥ ३. अधेक्-ग् ॥ ४. दिह्यात् ॥ ५. दिदेह ॥ ६. देग्धा ॥ ७. धेक्ष्यति ॥ ८. दिह्यात् । दिह्यास्ताम् ॥ ९. अधिक्षत् ॥ १०. अधेक्ष्यत् ॥ प्रणिदेग्धि[2] ॥

**आत्मने**०—१. दिग्धे ॥ २. दिग्धाम् ॥ ३. अदिग्ध ॥ ४. दिहीत ॥ ५. दिदिहे ॥ ६. देग्धा ॥ ७. धेक्ष्यते ॥ ८. धिक्षीष्ट ॥ ९. अदिग्ध-अधिक्षत ॥ १०. अधेक्ष्यत ॥ इत्यादि सर्वं **'दोहति'** (३२९) वत् ॥ देहः । देही ॥ सं-सन्देहे । सन्देग्धि-सन्दिग्धे, सन्दिहानः ॥

[३३१] **लिह्**=आस्वादने । सकर्म० । अनिट् । उभय० ॥

**परस्मै**० १. **प्र**० लेढि[3] । लीढः । लिहन्ति ॥ **म**० लेक्षि[4] ।

---

१. **शंसिदुहिभ्यो वा** । इति क्यब्ण्यतौ । २ **नेर्गदनद**—(३७)ति णत्वम् । ३. लिह् + ति=**पुगन्तलघूपधस्य** च (पृ० ३) इति गुणे **हो ढः** । इति हकारस्य ढत्वे च लेढ् ति इति जाते **झषस्तथो**—(१८९) रिति तकारस्य धत्वे लेढ् धि इति जाते, **ष्टुना ष्टु**रिति धस्य ढत्वे लेढ् ढि इत्यत्र **ढो ढे लोप** इति ढलोपे, **'लेढि'** इति रूपम् । ४. लिह् + सि इत्यत्र **हो ढः** । **षढोः कः सि** (१८९) इति लिक् सि इति जाते सकारस्य प्रत्ययावयवत्वात्षत्वे **'लेक्षि'** इति रूपम् ।

लीढः । लीढ ॥ उ० लेह्मि । लिह्वः । प्र० लेढु—लीढात् । लीढाम् । लिहन्तु ॥ म० [1]लीढि—लीढात् । लीढम् । लीढ ॥ उ० लेहानि । लेहाव । लेहाम ॥ ३. प्र० अलेट्—ड् । अलीढाम् । अलिहन् ॥ म० अलेट्-ड् । अलीढम् । अलीढ ॥ उ० अलेहम् । अलिह्व । अलिह्म ॥ ४. प्र० लिह्यात् । लिह्याताम् ॥ ५. प्र० लिलेह । लिलिहतुः । लिलिहुः ॥ म० लिलेहिथ । लिलिहथुः । लिलिह ॥ उ० लिलेह । लिलिहिव । लिलिहिम ॥ ६. प्र० लेढा । म० लेढासि । उ० लेढास्मि ॥ ७. प्र० लेक्ष्यति ॥ म० लेक्ष्यसि । उ० लेक्ष्यामि ॥ ८. लिह्यात् ॥ लिह्यास्ताम् ॥ ९. प्र० अलिक्षत्[2] । अलिक्षताम् । अलिक्षन् ॥ म० अलिक्षः । अलिक्षतम् ।अलिक्षत ॥ उ० अलिक्षम् । अलिक्षाव । अलिक्षाम ॥ १०. अलेक्ष्यत् ॥

आत्मने०—१. प्र० लीढे । लिहाते । लिहते ॥ म० लिक्षे । लिहाथे । लीढ्वे ॥ उ० लिहे । लिह्वहे । लिह्महे । २. प्र० लीढाम् । लिहाताम् । लिहताम् । म० लिक्ष्व । लिहाथाम् । लीढ्वम् ॥ उ० लेहै । लेहावहै । लेहामहै ॥ ३. प्र० अलीढ । अलिहाताम् । अलिहत ॥ म० अलीढाः । अलिहाथाम् । अलीढ्वम् ॥ उ० अलिहि । अलिह्वहि । अलिह्महि ॥ ४. प्र० लिहीत । लिहीयाताम् । लिहीरन् ॥ म० लिहीथाः । लिहीयाथाम् । लिहीध्वम् ॥ उ० लिहीय । लिहीवहि । लिहीमहि ॥ ५. प्र० लिलिहे । लिलिहाते । लिलिहिरे ॥ म० लिलिहिषे । लिलिहाथे । लिलिहिध्वे—ढ्वे ॥ उ० लिलिहे । लिलिहिवहे । लिलिहिमहे ॥ ६. प्र० लेढा ॥ म० लेढासे ॥ उ० लेढाहे ॥

---

१. **हुझल्भ्यो हेर्धिः** (२२६) । ढत्वधत्वष्टुत्वढलोपदीर्घाः । २. लुङि पञ्चमी-विधा ।

७. लेक्ष्यते ॥ ८. **प्र०** लिक्षीष्ट । लिक्षीयास्ताम् । लिक्षीरन् ॥ **म०** लिक्षीष्ठाः । लिक्षीयास्थाम् । लिक्षीध्वम् ॥ **उ०** लिक्षीय । लिक्षीवहि । लिक्षीमहि ॥ ९. **प्र०** अलिक्षत-अलीढ । अलिक्षाताम् । अलिक्षन्त ॥ **म०** अलिक्षथाः-अलीढाः । अलिक्षाथाम् । अलिक्षद्वम्-आलिक्षध्वम् ॥ **उ०** अलिक्षि । अलिक्षामहि-अलिह्वहि । अलिक्षामहि-अलिह्महि ॥ १०. अलेक्ष्यत ॥ **कर्मणि**—लिह्यते ॥ ९. अलेहि ॥ **णिचि**—लेहयति-लेहयते ॥ ९. अलीलिहत्-त ॥ **सनि**—लिलिक्षति-ते ॥ **यङि**—लेलिह्यते। **यङ्लुकि**—लेलिहीति-लेलेढि ॥ **कृत्सु**—लेढव्यम् । लेहनीयम् । लेह्यम् । लीढः । लिहन् । लिहती । लिहानः । लेक्ष्यन् । लेक्ष्यती-लेक्ष्यन्ती । लेढुम् । लेहनम् । लीढ्वा । अवलिह्य । अभ्रंलिहः[1] ।

[३३२] **चक्षिङ्**=व्यक्तायां वाचि । सकर्म० । सेट् । ख्यागादेशे त्वनिट् । आत्मने० । प्रायेणायमाङ्पूर्वः ।

१. **प्र०** चष्टे[2] । चक्षाते । चक्षते ॥ **म०** चक्षे । चक्षाथे । चढ्वे ॥ **उ०** चक्षे । चक्ष्वहे । चक्ष्महे ॥ २. **प्र०** चष्टाम् । चक्षाताम् । चक्षताम् ॥ **म०** चक्ष्व । चक्षाथाम् । चढ्वम् ॥ **उ०** चक्षै । चक्षावहै । चक्षामहै ॥ ३. अचष्ट । अचक्षाताम् । अचक्षत ॥ **म०** अचष्ठाः । अचक्षाथाम् । अचढ्वम् ॥ **उ०** अचक्षि । अचक्ष्वहि । अचक्ष्महि ॥ ४. **प्र०** चक्षीत । चक्षीयाताम् । चक्षीरन् ॥ **म०** चक्षीथाः । चक्षीयाथाम् । चक्षीध्वम् ॥ **उ०** चक्षीय । चक्षीवहि ।

१. **वहाभ्रे लिहः** । २. चक्ष्+ते इत्यत्र **स्कोः संयोगाद्योरन्ते च** । इति कलोपे चष्+ते इति जाते ततः ष्टुत्वे । 'चष्टे' इति भवति ।

चक्षीमहि ॥ ५. प्र० चचक्षे । चचक्षाते । चचक्षिरे ॥ म० चचक्षिषे । चचक्षाथे । चचक्षिध्वे ॥ उ० चचक्षे । चचक्षिवहे । चचक्षिमहे ॥ **ख्याञादेशपक्षे**—प्र० चख्ये । चख्याते । चख्यिरे ॥ म० चख्यिषे । चख्याथे । चख्यिध्वे ॥ उ० चख्ये । चख्यिवहे । चख्यिमहे ॥ **ख्याञो ञित्वात्परस्मैपदपक्षे**—प्र० चख्यौ[2] । चख्यतुः । चख्युः ॥ म० चख्यिथ—चख्याथ । चख्यथुः । चख्य ॥ उ० चख्यौ । चख्यिव । चख्यिम ॥ ६. प्र० ख्याता ॥ म० ख्याता-से–सि ॥ उ० ख्याताहे–स्मि ॥ ७. प्र० ख्यास्यते–ति ॥ ८. प्र० ख्यासीष्ट । ख्यासीयास्ताम् ॥ म० ख्यासीष्ठाः ॥ उ० ख्यासीय ॥ **परस्मै**–प्र० ख्यायात् । ख्यायास्ताम् । **पक्षे**—ख्येयात् । ख्येयास्ताम् ॥ ९. प्र० अख्यत[3] । अख्येताम् । अख्यन्त ॥ म० अख्यथाः । अख्ये-थाम् । अख्यध्वम् ॥ उ० अख्ये । अख्यावहि । अख्यामहि ॥ **परस्मै**०—प्र० अख्यत् ॥ म० अख्यः ॥ उ० अख्यम् ॥ १०. अख्यास्यत–अख्यास्यत् ॥ "वर्जने ख्याञ् नेष्ट." इति वार्तिकेन "सम-चक्षिष्ट'। इत्यादि। सर्वत्र ख्याञादेशस्थलेषु **क्शाञादेश इति पक्षे**—५. चक्शे–चक्शौ ॥ ६. क्शाता ॥ ७. क्शास्यते-ति ॥ ८. क्शासीष्ट–क्शायात्–क्शेयात् ॥ ९. अक्शत–अक्शत् ॥ १०. अक्शास्यत–अक्शास्यत् ॥

**कर्मणि**—ख्यायते-क्शायते ॥ **सनि**—चिख्यासते–चिख्या-सति-चिक्शासते–चिक्शासति ॥ **यङि**—चाख्यायते-चाक्शायते ॥

१. **चक्षिङः ख्याञ्**। ख्याञ् स्यादार्धधातुके। **वा लिटि**। २ **आत औ णलः** (२६४)। ३. **अस्यतिवक्तिख्यातिभ्योऽङ्** (पृ० १०)। द्वितीयो लुङ्।

**यङ्लुकि**—चाचक्षीति-चाचष्टि ॥ **कृत्सु**—ख्यातव्यः-क्शातव्यः । ख्यानीयः-क्शानीयः । ख्येयः-क्शेयः । ख्यातः-क्शातः । चक्षाणः । ख्यास्यन्-क्शास्यन् । ख्यास्यती-ख्यास्यन्ती । क्शास्यती-क्शास्यन्ती । ख्यातुम्-क्शातुम् । ख्यानम्-क्शानम् । ख्यात्वा-क्शात्वा । आख्याय-आक्शाय । आख्या । व्याख्या । चक्षुः । विचक्षणः । वि+आ= विवरणे—व्याचष्टे ।

[३३३] **ईर**=गतौ । कम्पने च । सकर्म० । सेट् । आत्मने० ।

१. प्र० ईर्ते । ईराते । ईरते ॥ म० ईर्षे । ईराथे । ईर्ध्वे । उ० ईरे । ईर्वहे । ईर्महे ॥ २. प्र० ईर्ताम् । ईराताम् । ईरताम् ॥ म० ईर्ष्व । ईराथाम् । ईर्ध्वम् ॥ उ० ईरै । ईरावहै । ईरामहै ॥ ३. प्र० ऐर्त । ऐराताम् । ऐरत ॥ म० ऐर्थाः । ऐराथाम् । ऐर्ध्वम् ॥ उ० ऐरि । ऐर्वहि । ऐर्महि ॥ ४. प्र० ईरीत । ईरीयाताम् । ईरीरन् ॥ म० ईरीथाः । ईरीयाथाम् । ईरीध्वम् ॥ उ० ईरीय । ईरीवहि । ईरीमहि ॥ ५. प्र० ईराञ्चक्रे[२]-ईरामास-ईराम्बभूव ॥ इत्यादि **'एधति'** (२) वत् ॥ ६. ईरिता ॥ ७. ईरिष्यते ॥ ८. ईरिषीष्ट ॥ ९. प्र० ऐरिष्ट ॥ म० ऐरिध्वम्-ढ्वम् । १०. ऐरिष्यत ॥

**कर्मणि**—ईर्यते ॥ ५. ईराञ्चक्रे ॥ ९. ऐरि ॥ **णिचि**—ईरयति[३] । **सनि**—ईरिरिषते । **कृत्सु**—ईरितव्यम् । ईरणीयम् ।

१. **यङोऽचि च** । (पृ० १७) इति लुका लुप्तत्वात् **न लुमताङ्गस्य** । इति प्रत्ययलक्षणाभावात् यङ्परत्वाभावात्ख्याञादेशो न । २ **इजादेश्च गुरुमतोऽनृच्छः** । ३ **निगरणचलनार्थेभ्यश्च** ।

ईर्यम् । ईरितः । ईराणः । ईरितुम् । ईरणम् । ईरित्वा उदीर्य समीरणः । ईर्मम् । स्वैरी । स्वैरिणी ॥

[३३४] ईड=स्तुतौ । सकर्म० । सेट् । आत्मने० ॥

१. **प्र०** ईट्टे । ईडाते । ईडते ॥ **म०** ईडिषे[1] । ईडाथे । ॥ **उ०** ईडे । ईड्वहे । ईड्महे ॥ २. **प्र०** ईट्टाम् । ईडाताम् । ईडताम् ॥ **म०** ईडिष्व ॥ ईडाथाम् । ईडिध्वम् ॥ **उ०** ईडै । ईडावहै । ईडामहै ॥ ३. **प्र०** ऐट्ट । ऐडाताम् । ऐडत ॥ **म०** ऐट्ठाः । ऐडाथाम् । ऐड्ढ्वम् ॥ **उ०** ऐडि । ऐड्वहि । ऐड्महि ॥ ४. **प्र०** ईडीत । ईडीयाताम् । ईडीरन् ॥ **म०** ईडीथाः । ईडीयाथाम् । ईडीध्वम् ॥ **उ०** ईडीय । ईडीवहि । ईडीमहि ॥ ५. **प्र०** ईडाञ्चक्रे । इत्यादि **'एधाञ्चक्रे'** (२) इति वत् ॥ ६. ईडिता ॥ ईडितासे ॥ ७. ईडिष्यते ॥ ८. ईडिषीष्ट ॥ ९. ऐडिष्ट ॥ १०. ऐडिष्यत ॥

कर्मादौ **'ईरति'** (३३३) वत् ॥

[३३५] ईश=ऐश्वर्ये । अकर्म० । सेट् । आत्मने० ॥

१. **प्र०** ईष्टे[3] । ईशाते । ईशते ॥ **म०** ईशिषे । ईशाथे । ईशिध्वे ॥ **उ०** ईशे । इश्वहे । ईश्महे ॥ २. ईष्टाम् ॥ ३. ऐष्ट ॥ ४. ईशीत ॥ ५. ईशाञ्चक्रे ॥ ६. ईशिता ॥ ईशितासे ॥ ७. ईशि-

१. **ईशः से । ईडजनोर्ध्वे च ।** ईश ईड् जन् इत्येतेषां से ध्वे शब्दयोः सार्वधातुकयोः परयोः इट् स्यात् । २. एकदेशविकृतस्यानन्यत्वात् से ध्वे वत् स्व ध्वम् इत्यनयोरपि इट् । ३. ईश् + ते इत्यत्र **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।** व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोन्तादेशः स्याज्झलि पदान्ते च । ईष् + ते = ष्टुत्वम् ।

ष्यते ॥ ८. ईशिषीष्ट ॥ ९. ऐशिष्ट ॥ १०. ऐशिष्यत ॥ इत्यादि सर्वं 'ईडति' (३३४) वत् ॥

[३३६] **आस**=उपवेशने । अकर्म० । सेट् । आत्मने० ॥

१. **प्र०** आस्ते । आसाते । आसते ॥ **म०** आस्से । आसाथे । आध्वे[1] ॥ **उ०** आसे । आस्वहे । आस्महे ॥ **२. प्र०** आस्ताम् । आसाताम् । आसताम् ॥ **म०** आस्स्व । आसाथाम् । आध्वम् ॥ **उ०** आसै । आसावहै । आसामहै ॥ **३. प्र०** आस्त । आसाताम् । आसत ॥ **म०** आस्थाः । आसाथाम् । आध्वम् ॥ **उ०** आसि । आस्वहि । आस्महि ॥ **४. प्र०** आसीत । आसीयाताम् । आसीरन् ॥ **म०** आसीथाः । आसीयाथाम् । आसीध्वम् ॥ **उ०** आसीय । आसीवहि । आसीमहि ॥ **५.** आसाञ्चक्रे[2]–आसाम्बभूव–आसामास ॥ **६. प्र०** आसिता ॥ **म०** आसितासे ॥ **उ०** आसिताहे ॥ **७.** आसिष्यते ॥ **८.** आसिषीष्ट ॥ **९. प्र०** आसिष्ट ॥ **म०** आसिष्ठाः । द्वम् ॥ **उ०** आसिषि ॥ **१०.** आसिष्यत ॥

**कर्मणि**—आस्यते । **णिचि**—आसयति-ते ॥ **सनि**—आसिसिषते । **कृत्सु**—आसितव्यम् । आसनीयम् । आस्यम् । आसीनः । आसितुम् । आसनम् । आसित्वा । उपास्य । आसना । आस्या । उप–उपासने–उपास्ते, सेवते । उत्–औदास्ये । उदास्ते–औदासीन्यमवलम्बते । अधि–अध्यास्ते । "अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी" इति माघः । अनु–पश्चादुपवेशने "अन्वासितमरुन्धत्या स्वाहयेव हविर्भुज" मिति–रघुः ॥

१. **धि च** । (पृ० १४) इति सलोपः । २. **दयायासश्च** (पृ० ८) इत्याम् ।

[३३७] **आङः शासु**=इच्छायाम् । सकर्म० । सेट् । आत्मने० ।

१. **प्र०** आशास्ते । आशासाते । आशासते ॥ **म०** आशास्से । आशासाथे । आशाध्वे ॥ **उ०** आशासे । आशास्वहे । आशास्महे ॥ २. **प्र०** आशास्ताम् । आशासाताम् । आशासताम् ॥ **म०** आशास्स्व । आशासाथाम् । आशाध्वम् ॥ **उ०** आशासै । आशासावहै । आशासामहै ॥ ३. **प्र०** आशास्त । आशासाताम् । आशासत ॥ **म०** आशास्थाः । आशासाथाम् । आशाध्वम् ॥ **उ०** आशासि । आशास्वहि । आशास्महि ॥ ४. **प्र०** आशासीत । आशासीयाताम् । आशासीरन् ॥ **म०** आशासीथाः । आशासीयाथाम् । आशासीध्वम् ॥ **उ०** आशासीय । आशासीवहि । आशासीमहि ॥ ५. **प्र०** आशशासे । आशशासाथे । आशशासिरे ॥ **म०** आशशासिषे । आशशासाथे । आशशासिध्वे ॥ **उ०** आशशासे । आशशासिवहे । आशशासिमहे ॥ ६. **प्र०** आशासिता ॥ **म०** आशासितासे ॥ **उ०** आशासिताहे ॥ ७. आशासिष्यते ॥ ८. **प्र०** आशासिषीष्ट ॥ **म०** आशासिषीष्ठाः ॥ **उ०** आशासिषीय ॥ ९. **प्र०** आशासिष्ट ॥ **म०** आशासिष्ठाः । ढ्वम् ॥ **उ०** आशासिषि ॥ १०. आशासिष्यत ॥

**कर्मणि**—आशास्यते ॥ ९. आशासि ॥ **णिचि**—आशासयति–ते । **सनि**—आशिशासिषते । **यङि**—आशाशास्यते । **यङ्लुकि**—आशाशासीति–आशाशास्ति । **कृत्सु**—आशासितव्यम् । आशासनीयम् । आशास्यम् । अशासितः । आशासानः । आशासितुम् । आशासनम् । आशास्य । आशीः । आशा । आशासा ।

[३३८] **वस**=आच्छादने । सकर्म० । सेट् । आत्मने० ।

१. प्र० वस्ते । वसाते । वसते ॥ म० वस्से । वसाथे । वध्वे ॥ उ० वसे । वस्वहे । वस्महे ॥ २. प्र० वस्ताम् । वसाताम् । वसताम् ॥ म० वस्व । वसाथाम् । वध्वम् ॥ उ० वसै । वसावहै । वसामहै ॥ ३. प्र० अवस्त । अवसाताम् । अवसत ॥ म० अवस्थाः । अवसाथाम् । अवध्वम् ॥ उ० अवसि । अवस्वहि । अवस्महि ॥ ४. प्र० वसीत । वसीयाताम् ॥ म० वसीथाः । उ० वसीय ॥ ५. प्र० ववसे । ववसाते ॥ म० ववसिषे । ववसिध्वे ॥ उ० ववसे । ववसिमहे ॥ ६. वसिता ॥ ७. वसिष्यते ॥ ८. वसिषीष्ट ॥ वसिषीध्वम् ॥ ९. प्र० अवसिष्ट ॥ म० अवसिढ्वम्–ध्वम् ॥ उ० अवसिषि ॥ १०. अवसिष्यत ॥ **कर्मणि**—वस्यते ॥ ९. अवासि ॥ **णिचि**—वासयति-ते ॥ **सनि**—विवसिषते । **यङि**—वावस्यते । **यङ्लुकि**—वावसीति–वावस्ति ॥ **कृत्सु**—वसितव्यम् । वसनीयम् । वास्यम् । वसितः । वसानः[2] । वसितुम् । वसनम् । वसित्वा । परिवस्य ।

[३२९] **षूङ्**=प्राणिगर्भविमोचने । सकर्म० । वेट् । आत्मने० ।

१. प्र. सूते[3] । सुवाते । सुवते ॥ म० सूषे । सुवाथे । सूध्वे । उ० सुवे । सूवहे । सूमहे ॥ २. प्र० सूताम् । म० सूष्व ॥ उ० सुवै ॥ ३. प्र० असूत ॥ म० असूथाः ॥ उ० असुवि ॥ ४. प्र० सुवीत ॥ म० सुवीथाः ॥ उ० सुवीय ॥ ५. प्र० सुषुवे ॥ म० सुषुविषे[4] ॥ सुषुविढ्वे–ध्वे ॥ उ० सुषुवे । सुषुविवहे ॥ ६. सविता–सोता ॥ ७. सविष्यते–सोष्यते ॥ ८. प्र० सविषीष्ट–सोषीष्ट ॥ म०

१. धि च (पृ० १४) । २. वसने परिधूसरे वसाना—इति कालिदासः । ३. कीर्तिं सूते दुष्कृतिं या हिनस्ति—इति भवभूतिः ॥ ४. **स्वरतिसूति**—(३५) इति इड्विकल्पं बाधित्वा क्रादिनियमान्नित्यमिट् ।

सविषीष्ठाः–सोषीष्ठाः ॥ ढ्वम्–ध्वम् ॥ उ० सविषीय ॥ ९. प्र० असविष्ट–असोष्ट ॥ म० असविष्ठाः–असोष्ठाः ॥ उ० असविषि–असोषि ॥ १०. असविष्यत–असोष्यत ॥

**कर्मणि**—सूयते । ५. सुषुवे । ९. असावि । असाविषाताम्–असोषाताम्–असविषाताम् । **णिचि**—सावयति । असूषुवत् । **सनि**—सुषूषते । **यङि**—सोषूयते । **यङ्लुकि**—सोषूति–सोषुवीति । **कृत्सु**—सोतव्यम्–सवितव्यम् । सवनीयम् । सव्यम्–अवश्यसाव्यम् । सूतः । सुवानः । सविष्यमाणः । सोष्यमाणः । सोतुम्–सवितुम् । सवित्वा–सूत्वा । प्रसूय । पुत्रसूः । सूतिका ।

[३४०] **शीङ्**=स्वप्ने । अकर्म० । सेट् । आत्मने० ।

१. प्र० शेते[1] । शयाते । शेरते[2] ॥ म० शेषे[3] । शयाथे । शेध्वे ॥ उ० शये । शेवहे । शेमहे ॥ २. प्र० शेताम् । शयाताम् । शेरताम् ॥ म० शेष्व । शयाथाम् । शेध्वम् ॥ उ० शयै । शयावहै । शयामहै ॥ ३. प्र० अशेत । अशयाताम् । अशेरत ॥ म० अशेथाः । अशयाथाम् । अशेध्वम् ॥ उ० अशयि । अशेवहि । अशेमहि ॥ ४. प्र० शयीत । शयीयाताम् । शयीरन् ॥ म० शयीथाः । शयीयाथाम् । शयीध्वम् ॥ उ० शयीय । शयीवहि । शयीमहि ॥ ५. प्र० शिश्ये । शिश्याते । शिश्यिरे ॥ म० शिश्यिषे । शिश्याथे । शिश्यिढ्वे–ध्वे ॥ उ० शिश्ये । शिश्यिवहे । शिश्यिमहे ॥ ६. प्र० शयिता ॥ म० शयितासे ॥ उ० शयिताहे ॥ ७. प्र० शयिष्यते ॥ म० शयिष्यसे ॥ उ० शयिष्ये ॥ ८. शयिषीष्ट । शयिषीयास्ताम् ॥

१. **शीङः सार्वधातुके गुणः** । २. **शीङो रुट्** । शीङः परस्य झादेशस्य अतः रुडागमः स्यात् । ३. किं निरशङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ—इति जगन्नाथः ।

९. अशयिष्ट । अशयिषाताम् ॥ ढ्वम्–ध्वम् ॥ १०. अशयिष्यत ॥ संशेते । संशयाते । संशेरते ॥ अति–अतिक्रमः । अतिशेते ; अतिशयितः । अधि–अधिष्ठानम्–शय्यामधिशेते । अनु–अनुशयः ।

**भावे**—शय्यते । ९. अशायि । **णिचि**—शाययति । **सनि**—शिशयिषते । **यङि**—शाशय्यते । **यङ्लुकि**—शेशयीति–शेशेति । **कृत्सु**—शयितव्यम् । शयनीयम् । शेयम् । शयितः । शयानः । शयितुम् । शयनम् । शयित्वा । उपशय्य । उत्तानशयः=डिम्भः । गिरिशः । शयालुः । शय्या । संशयः । विशयः=संदेहः ।

[३४१] यु=मिश्रणे । सकर्मकः । सेट् । परस्मैपदी ॥

१. प्र० यौति[२] । युतः । युवन्ति[३] ॥ म० यौषि । युथः । युथ ॥ उ० यौमि । युवः । युमः ॥ २. प्र० यौतु–युतात् । युताम् । युवन्तु ॥ म० युहि–युतात् । युतम् । युत ॥ उ० यवानि । यवाव । यवाम ॥ ३. प्र० अयौत् । अयुताम् । अयुवन् ॥ म० अयौः । अयुतम् । अयुत ॥ उ० अयवम् । अयुव ॥ अयुम ॥ ४. प्र० युयात्[४] । युयाताम् । युयुः ॥ म० युयाः । युयातम् । युयात ॥ उ० युयाम् । युयाव । युयाम ॥ ५. प्र० युयाव । युयुवतुः । ॥ म० युयविथ । युयुवथुः । युयुव ॥ उ० युयाव–युयव ।

१. "**अणावकर्मकाच्चित्तवत्कर्तृका**"(२८)दिति परस्मैपदम् । २. **उतो वृद्धिर्लुकि हलि**। लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । ३. **अचि श्नुधातुभ्रुवाम्**—इति उवङ् । ४. **यासुट् परस्मैपदेषूदात्तो ङिच्च**। इति ङित्वस्य विशेषविहितत्वात् भाष्ये '**ङिच्च पिन्न**' '**पिच्च ङिन्न**' इति पित्त्वस्य निषिद्धत्वात् उतो वृद्धिर्न ।

युयुविव । युयुविम ॥ ६. यविता ॥ ७. यविष्यति ॥ ८. यूयात् । यूयास्ताम् । यूयासुः ॥ म० यूयाः । यूयास्तम् । यूयास्त ॥ उ० यूयासम् । यूयास्व । यूयास्म ॥ ९. अयावीत्[2] । अयाविष्टाम् । अयाविषुः ॥ १०. अयविष्यत् ॥

**कर्मणि**—यूयते । **णिचि**—यावयति । ९. अयीयवत् । **सनि**—यियविषति[3]–युयूषति[4] । **यङि**—योयूयते । **यङ्लुकि**—योयवीति–योयोति । **कृत्सु**—योतव्यम् । यवनीयम् । यव्यम् । याव्यम् । युतः । युवन् । युवती । योतुम् । यवनम् । युत्वा । उद्युत्य ऊतिः । यवनः ॥

[३४२] रु=शब्दे । अकर्म० । सेट् परस्मै०

१. प्र० रौति[5]–रवीति । रुतः–रुवीतः । रुवन्ति ॥ म० रौषि–रवीषि । रुथः–रुवीथः । रुथ–रुवीथ ॥ उ० रौमि–रवीमि । रुवः–रुवीवः । रुमः–रुवीमः ॥ २. प्र० रौतु–रवीतु–रुतात्–रुवीतात् । रुताम्–रवीताम् । रुवन्तु ॥ म० रुहि–रुवीहि–रुतात्–रुवीतात् । रुतम्–रुवीतम् । रुत–रुवीत ॥ उ० रवाणि । रवाव । रवाम ॥ ३. प्र० अरौत्–अरवीत् । अरुताम्–अरुवीताम् । अरुवन् ॥ म० अरौः–अरवीः । अरुतम्–अरुवीतम् । अरुत–अरुवीत ॥ उ० अरवम् । अरुव–अरुवीव । अरुम–अरुवीम ॥ ४. प्र० रुयात्–रुवीयात् । रुया-

१. आर्धधातुकत्वान्न वृद्धिः । **अकृत्सार्वधातुकयो**—(९४)रिति दीर्घः । २. **सिचि वृद्धिः** (२८४) इति वृद्धिः । **इट ईटि**(२७ इति सिज्लोपः । ३ **सनीवन्त**(१६२) इत्यादिना सन इडागमो वा । इट्पक्षे इदम् रूपम् । ४ इडभावपक्षे इदम् । ५ **तुरुस्तुशम्यमिभ्यः सार्वधातुके** । एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात् । ईडभावपक्षे वृद्धिः ।

ताम्--रुवीयाताम् । रुयुः–रुवीयुः ॥ म० रुयाः–रुवीयाः । रुयातम्–रुवीयातम् ॥ रुयात-रुवीयात ॥ उ० रुयाम्-रुवीयाम् । रुयाव–रुवीयाव । रुयाम-रुवीयाम ॥

आर्धधातुके तु **'यौति'** (३४१) वत् ॥ ५. **रुराव** ॥ ६. रविता ॥ रविष्यति ॥ ८. रूयात् । रूयास्ताम् ॥ ९. अरावीत् ॥ १०. अरविष्यत् ॥ रवणः । रावः ॥ आरावः, विरावः संरावः ॥

[३४३] **णु=स्तुतौ** । सकर्म० । सेट् । परस्मै० ।

१. नौति । २. नौतु । ३. अनौत् । ४. नुयात् । ५. नुनाव[1] । ६. नविता । ७. नविष्यति । ८. नूयात् । नूयास्ताम् । ९. अनावीत् । १०. अनविष्यत् । इत्यादि **'यौति'** (३४१) वत् ॥

**आत्मनेपदे**—१. आनुते[2] । २. आनुताम् । ३. आनुत । ४. आनुवीत । ५. आनुनुवे । ६. आनविता । ७. आनविष्यते । ८. आनविषीष्ट । ९. आनविष्ट । १०. आनविष्यत ॥ **सनि**—आनुनूषते । **यङि**—आनोनूयते–इत्यादि । प्र+नौति=प्रणौति । प्रणवः ।

[३४४] **क्ष्णु=तेजने** । सकर्म० । सेट् । परस्मै० ॥

१. क्ष्णौति । ५. चुक्ष्णाव । चुक्ष्णुवतुः । ६. क्ष्णविता ॥ इत्यादि **'यौति'** (३४१) वत् । संक्ष्णुते[3] । संक्ष्णुवाते । संक्ष्णुवते । इत्यादि **'आनुते'** (३४३) इति वत् ॥

[३४५] **ष्णु=प्रस्रवणे** । अकर्म० । सेट् । परस्मै० ।

१. सरस्वती तन्मिथुनं नुनाव-इति कालिदासः । २. **आङि नुपृच्छयोरुपसंख्यानम्** । इति तङ् । ३ **समः क्ष्णुवः** । इत्यात्मनेपदम् ।

१. स्नौति । स्नुतः । स्नुवन्ति ॥ ५. सुष्णाव । ६. स्नविता । इत्यादि **'यौति'** (३४३) वत् । **सनि**—सुस्नूषति । **णिचि**—स्नावयति । **यङि**—सोष्णूयते । स्नुषा । **यङ्लुकि**—सोष्णवीति–सोष्णोति ॥

[३४६] **ऊर्णुञ्**=आच्छादने । सकर्म० । सेट् । उभयपदी ॥

१. **प्र०** ऊर्णौति–ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति ॥ **म०** ऊर्णौषि–ऊर्णोषि । ऊर्णुथः । ऊर्णुथ ॥ **उ०** ऊर्णौमि–ऊर्णोमि । ऊर्णुवः । ऊर्णुमः ॥ २. **प्र०** ऊर्णौतु–ऊर्णोतु–उर्णुतात् । ऊर्णुताम् । ऊर्णुवन्तु ॥ **म०** ऊर्णुहि–ऊर्णुतात् । ऊर्णुतम् । ऊर्णुत ॥ **उ०** ऊर्णवानि । ऊर्णवाव । ऊर्णवाम ॥ ३. **प्र०** और्णोत् । और्णुताम् । ॥ **म०** और्णोः । और्णुतम् । और्णुत ॥ **उ०** और्णवम् । । और्णुम ॥ ४. **प्र०** ऊर्णुयात् । ऊर्णुयाताम् ॥ **म०** ऊर्णुयाः । **उ०** ऊर्णुयाम् ॥ ५. **प्र०** ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥ **म०** ऊर्णुनुविथ–ऊर्णुनविथ । ऊर्णुनुवथुः । ऊर्णुनुव ॥ **उ०** ऊर्णुनाव–ऊर्णु-

१. **स्तौतिण्योरेव षण्यभ्यासा**दिति षत्वनिषेधः । २. **ऊर्णोतेर्विभाषा** । वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ३ हेरपित्त्वाद्वृद्धिर्न । ४. **गुणोऽपृक्ते** । ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्धयपवादः । ५ **'ङिच्च पिन्न'** त्युक्तत्वात् न वृद्धिः । ६. **ऊर्णोतेराम्नेति वाच्यम्** । अस्य अनेकाच्त्वेपि वचनादाम्न । **नन्द्राः संयोगादयः** (१७) । इति नुशब्दस्य द्वित्वम् । ऊर्णुनाव स शस्त्रौघैः वानराणामनीकिनीम्—इति भट्टिः । ७. **विभाषोर्णोः** । इडादिप्रत्ययो वा ङित्स्यात् । ङित्त्वपक्षे गुणाभावात् ऊर्णुनुविथ' इति उवङ् । ङित्वाभावपक्षे 'ऊर्णुनविथ' इति गुणः ।

नव । ऊर्णुनुविव । ऊर्णुनुविम ॥ ६. ऊर्णुविता--ऊर्णविता ॥ ७. ऊर्णुविष्यति--ऊर्णविष्यति ॥ ८. ऊर्णूयात् । ऊर्णूयास्ताम् ॥ ९. प्र० और्णावीत्[2] । और्णाविष्टाम् । और्णाविषुः ॥ म० और्णावीः । और्णाविष्टम् । और्णाविष्ट ॥ उ० और्णाविषम् । और्णाविष्व । और्णाविष्म ॥ **गुणपक्षे**—और्णवीत् । और्णविष्टाम् इत्यादि । पक्षे[3]—और्णुवीत् । और्णुविष्टाम् । इत्यादि । १०. और्णुविष्यत्--और्णविष्यत् ॥

**आत्मनेपदे**—१. प्र० ऊर्णुते । ऊर्णुवाते । ऊर्णुवते ॥ म० ऊर्णुषे । ऊर्णुवाथे । ऊर्णुध्वे ॥ उ० ऊर्णुवे । ऊर्णुवहे । ऊर्णुमहे ॥ २. प्र० ऊर्णुताम् । ऊर्णुवाताम् ॥ म० ऊर्णुष्व ॥ उ० ऊर्णवै । ऊर्णवहै ॥ ३. प्र० और्णुत । और्णुवाताम् ॥ म० और्णुथाः । और्णुवाथाम् ॥ उ० और्णुवि । और्णुवहि ॥ ४. प्र० ऊर्णुवीत ॥ म० ऊर्णुवीथाः ॥ उ० ऊर्णुवीय ॥ ५. प्र० ऊर्णुनुवे ॥ म० ऊर्णुनुविषे ॥ उ० ऊर्णुनुवे । ऊर्णुनुविवहे ॥ ६. प्र० ऊर्णुविता । म० ऊर्णुवितासे ॥ ऊर्णुविताहे ॥ ७. ऊर्णुविष्यते ॥ ८. ऊर्णुविषीष्ट--ऊर्णविषीष्ट ॥ ९. और्णुविष्ट--और्णविष्ट ॥ १०. और्णविष्यत ॥

**कर्मणि**—ऊर्णूयते । **णिचि**—ऊर्णावयति–ते । **सनि**—ऊर्णुनूषति--ते । **यङि**—ऊर्णोनूयते । **यङ्लुकि**—ऊर्णोनौति । **कृत्सु**—ऊर्णवितव्यम्--ऊर्णुवितव्यम् । ऊर्णवनीयम् । ऊर्णव्यम्--ऊर्णाव्यम् । ऊर्णुतः । ऊर्णुवन् । ऊर्णुवती । ऊर्णुवानः । ऊर्णुवितुम्--ऊर्णवितुम् ।

---

१. **अकृत्सार्वधातुकयोः** (९४) इति दीर्घः । २. **ऊर्णोतेर्विभाषा** । इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । ३. **विभाषोर्णोः** । इति ङित्त्वपक्षे उवङ् ।

ऊर्णवनम् । ऊर्णुवित्वा--ऊर्णवित्वा- ऊर्णुत्वा । ऊरुः । रम्भोरूः । उरुः । वरीयान् । वरिष्ठः । ऊर्णा । ऊर्णायुः । ऊर्णनाभिः ।

[३४७] **द्यु**=अभिगमे । सकर्म० । अनिट् । परस्मै० ।

१. **प्र०** द्यौति[1] । द्युत । द्युवन्ति ॥ **म०** द्यौषि ॥ **उ०** द्यौमि ॥ **२. प्र०** द्यौतु- द्युतात् ॥ **म०** द्युहि ॥ उ० द्यवानि ॥ **३. प्र०** अद्यौत् ॥ **म०** अद्यौः ॥ **उ०** अद्यवम् ॥ **४.** द्युयात् । द्युयाताम् ॥ **५. प्र०** दुद्याव । दुद्युवतुः । दुद्युवुः ॥ **म०** दुद्यविथ--दुद्योथ । दुद्युवथुः । दुद्युव ॥ **उ०** दुद्याव–दुद्यव । दुद्युविव । दुद्युविम ॥ **६.** द्योता ॥ **७.** द्योष्यति ॥ **८.** द्यूयात्[2] । द्यूयास्ताम् ॥ **९.** अद्यौषीत्[3] ॥ **१०.** अद्योष्यत् ॥

**कर्मणि**—द्यूयते । **णिचि**—द्यावयति । **सनि**—दुद्यूषति । **यङि**—दोद्यूयते । **यङ्लुकि**—दोद्योति--दोद्यवीति । **कृत्सु**—द्योतव्यम् । द्यवनीयम् । द्यव्यम् । अवश्यद्याव्यम् । द्युतः । द्युवन् । द्योतुम् । द्यवनम् । द्युत्वा । उद्द्युत्य ।

[३४८] **षु**=प्रसवैश्वर्ययोः । सकर्म० । अनिट् । परस्मै० ।

सौति । सुतः । सुवन्ति इत्यादि **'द्यौति'** (३४७) वत् ।

[३४९] **कु**=शब्दे । अकर्म० । अनिट् । परस्मै० ।

कौति । कुतः । कुवन्ति । इत्यादि **'द्यौति'** वत् ।

[३५०] **ष्टुञ्**=स्तुतौ । सकर्म० । अनिट् । उभयः० ॥

१. **उतो वृद्धिर्लुकि हलि** (३४१) इति वृद्धिः । २. **अकृत्सार्वधातुकयो** (९४)—रिति दीर्घः । ३. लुङि षष्ठी विधा ।

१. प्र० स्तौति[1]–स्तवीति । स्तुतः–स्तुवीतः । स्तुवन्ति ॥ म० स्तौषि–स्तवीषि । स्तुथः–स्तुवीथः । स्तुथ–स्तुवीथ ॥ उ० स्तौमि–स्तवीमि । स्तुवः–स्तुवीवः । स्तुमः–स्तुवीमः ॥ २. प्र० स्तौतु–स्तवीतु–स्तुतात्–स्तुवीतात् । स्तुताम्–स्तुवीताम् । स्तुवन्तु ॥ म० स्तुहि–स्तुवीहि–स्तुतात्–स्तुवीतात् । स्तुतम्–स्तुवीतम् । स्तुत–स्तुवीत ॥ उ० स्तवानि । स्तवाव । स्तवाम ॥ ३. प्र० अस्तौत्–अस्तवीत् । अस्तुताम्–अस्तुवीताम् । अस्तुवन् ॥ म० अस्तौः–अस्तवीः । अस्तुतम्–अस्तुवीतम् । अस्तुत–अस्तुवीत ॥ उ० अस्तवम् । अस्तुव–अस्तुवीव । अस्तुम–अस्तुवीम ॥ ४. प्र० स्तुयात्–स्तुवीयात् । स्तुयाताम्–स्तुवीयाताम् । स्तुयुः–स्तुवीयुः ॥ म० स्तुयाः–स्तुवीयाः । स्तुयातम्–स्तुवीयातम् । स्तुयात–स्तुवीयात ॥ उ० स्तुयाम्–स्तुवीयाम् । स्तुयाव–स्तुवीयाव । स्तुयाम–स्तुवीयाम ॥ ५. प्र० तुष्टाव ॥ म० तुष्टोथ ॥ उ० तुष्टाव–तुष्टव ॥ ६. स्तोता ॥ ७. स्तोष्यति ॥ ८. स्तूयात् । स्तूयास्ताम् ॥ ९. अस्तावीत्[2] ॥ १०. अस्तोष्यत ॥

आत्मनेपदे—१. प्र० स्तुते–स्तुवीते । स्तुवाते । स्तुवते ॥ म० स्तुषे–स्तुवीषे । स्तुवाथे । स्तुध्वे–स्तुवीध्वे ॥ उ० स्तुवे । स्तुवहे–स्तुवीवहे । स्तुमहे–स्तुवीमहे ॥ २. प्र० स्तुताम्–स्तुवीताम् ।

---

१. **तुरुस्तुशम्यमिभ्य**—(३४२)इति ईड्विकल्पः । ईडभावपक्षे वृद्धिः ।
२. अ स्तु सिच् त् इति स्थिते **स्तुसुधूञ्भ्यः**—(२८४) इति इटि अस्तु इ सिच् त् इति जाते, **सिचि वृद्धिः परस्मैपदेषु** (२८४) इति वृद्धौ अस्तौ इ सिच् त् इति जाते, **अस्ति सिचोऽपृक्ते** (२७) इति ईटि, **इट ईटि** (२७) इति इकारलोपे अवादेशे सवर्णदीर्घे च=अस्तावीत् । अस्ताविषुः सुरा रामम्—इति भट्टिः ।

स्तुवाताम् । स्तुवताम् ॥ **म०** स्तुष्व–स्तुवीष्व । स्तुवाथाम् । स्तुध्वम्–स्तुवीध्वम् ॥ **उ०** स्तवै । स्तवावहै । स्तवामहै ॥ **३. प्र०** अस्तुत–अस्तुवीत । अस्तुवाताम् । अस्तुवत ॥ **म०** अस्तुथाः–अस्तुवीथाः । अस्तुवाथाम् । अस्तुध्वम्–अस्तुवीध्वम् ॥ **उ०** अस्तुवि । अस्तुवहि–अस्तुवीवहि । अस्तुमहि–अस्तुवीमहि ॥ **४. प्र०** स्तुवीत । स्तुवीयाताम् । स्तुवीरन् ॥ **५. प्र०** तुष्टुवे ॥ **म०** तुष्टुषे ॥ **उ०** तुष्टुवे । तुष्टुवहे ॥ **६.** स्तोता । **म०** स्तोतासे ॥ **उ०** स्तोताहे ॥ **७.** स्तोष्यते ॥ **८.** स्तोषीष्ट ॥ **९.** अस्तोष्ट । अस्तोषाताम् ॥ **१०.** अस्तोष्यत ॥ [१]अभिष्टौति ; [२]पर्यस्तौत्–पर्यष्टौत् । **कर्मणि**—स्तूयते ॥ **९.** अस्तावि ॥ **णिचि**—स्तावयति-ते ॥ **सनि**—तुष्टूषति-ते । **यङि**—तोष्टूयते । **यङ्लुकि**—तोष्टवीति-तोष्टोति ॥ **कृत्सु**—स्तोतव्यः । स्तवनीयः । स्तुत्यः । स्तव्यः । स्तुतः । स्तुवन् । स्तुवती । स्तवानः । स्तोतुम् । स्तवनम् । स्तुत्वा । प्रस्तुत्य । स्तोत्रम् । स्तवः । स्तुतिः । स्तोता । प्र–प्रारम्भे प्रस्तौति–प्रस्तवीति प्रस्[४]तावः ; प्रस्तावना । सं-संस्तवे ; संस्तवः–परिचय इत्यर्थः ।

[३५१] ब्रूञ्=व्यक्तायां वाचि । सकर्म० । सेट् । वच्यादेशे त्वनिट् । उभयपदी ॥

**१. प्र०** [५]ब्रवीति–[६]आह । ब्रूतः–आहतुः । ब्रुवन्ति–आहुः ॥ **म०** ब्रवीषि–आत्[७]थ । ब्रूथः–आहथुः । ब्रूथ ॥ ब्रवीमि । ब्रूवः ।

---

१. क्रादिषु पाठादिङभावः । २. **प्राक्सितादिति** षत्वम् । ३. **सिवादीनां वेति** विकल्पेन षत्वम् । ४. शिष्याय बृहतां पत्युः प्रस्तावमादिशद् दृशा—इति माघः । ५. **ब्रुव ईट्** । ब्रुवः परस्य हलादेः पितः ईट् स्यात् । ६. **ब्रुवः पञ्चानामादित आहो ब्रुवः** । ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । अकार उच्चारणार्थः । ७. **आह्+थ** इति स्थिते **आहः स्थः** । झलि परे आहः थः स्यात् । आथ्+थ इति जाते, **खरि चे**—ति चर्त्वे आत् थ=आत्थ ।

ब्रूमः ॥ २. प्र० ब्रवीतु–ब्रूतात् । ब्रूताम् । ब्रुवन्तु ॥ म० ब्रूहि[1]–ब्रूतात् । ब्रूतम् । ब्रूत ॥ उ० ब्रवाणि[2] । ब्रवाव । ब्रवाम ॥ ३. प्र० अब्रवीत् । अब्रूताम् । अब्रुवन् ॥ म० अब्रवीः । अब्रूतम् । अब्रूत ॥ उ० अब्रवम् । अब्रूव । अब्रूम ॥ ४. ब्रूयात् । ब्रूयाताम् । ब्रूयुः ॥ ५. प्र० उवाच[3] । ऊचतुः[4] । ऊचुः ॥ म० उवचिथ[5]–उवक्थ[6] । ऊचथुः । ऊच ॥ उवाच–उवच । ऊचिव । ऊचिम ॥ ६. वक्ता ॥ ७. वक्ष्यति ॥ ८. उच्यात् । उच्यास्ताम् ॥ ९. अवोचत्[7] । अवोचताम् । अवोचन् ॥ १०. अवक्ष्यत् ॥

**आत्मनेपदे**—१. ब्रूते । ब्रुवाते[8] । ब्रुवते[9] ॥ २. ब्रूताम् ॥ म० ब्रूष्व ॥ उ० ब्रवै ॥ ३. अब्रूत । अब्रुवाताम् । अब्रुवत ॥ ४. ब्रुवीत । ब्रुवीयाताम् । ब्रुवीरन् ॥ ५. ऊचे । ऊचाते । ऊचिरे ॥ ६. वक्ता ॥ म० वक्तासे ॥ ७. वक्ष्यते[10] ॥ ८. वक्षीष्ट ॥ ९. अवोचेत[11] । अवोचेताम् । अवोचन्त ॥ १०. अवक्ष्यत ॥

---

१. हेरपित्वादीण्न । २. आटः पित्वेन ङित्वाभावात् न गुणनिषेधः । ३. ब्रू+णल् इति स्थिते । **ब्रुवो वचिः** । ब्रुवो वचिरादेशः स्यादार्धधातुके । वच् णल् इति जाते द्वित्वे, **लिट्यभ्यासस्योभयेषाम्** (३१७) इति संप्रसारणे, **अचो ञ्णिति** । इति वृद्धौ रूपम् । ४ **वचिस्वपीति**—(३१७) संप्रसारणे द्वित्वे, हलादिशेषे सवर्णदीर्घे च रूपम् । ५. वच्यादेशस्यानिट्त्वात् भारद्वाजनियमात्थलि वेट् । इति इटि रूपम् । ६. इडभावे **चोःकुः** । ७ अवच् सिच् त् इति स्थिते । **अस्यतिवक्ति**—(पृ० १०) इति अङि अवच् अ त् इति जाते, **वच उम्** । अङि परे वच 'उम्' स्यात् इति मित्वादन्त्यादचः परत्वे अव उच् अत् इति जाते आद्गुण इति गुणे रूपम् । ८ **अचिश्नुधातु**—इति उवङ् । ९. ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्—इति **श्रीहर्षः** । १० वच्+स्यते । **चोः कुः** । कवर्गात्परत्वात्सस्य षत्वम् । ११. लुङि अष्टमी विधा ॥

**कर्मणि**—उच्यते ॥ ५. ऊचे ॥ ९. अवाचि । अवाक्षाताम् ॥ **णिचि**—वाचयति-ते । **सनि**—विवक्षति-ते ॥ **यङि**—वावच्यते । **यङ्लुकि**—बोब्रवीति-बोब्रोति । **कृत्सु**—वक्तव्यम् । वचनीयम् । वाच्येम् । वाक्यम् । उक्तः । ब्रुवन् । ब्रुवती । ब्रुवाणः । वक्ष्यन् । वक्ष्यती--वक्ष्यन्ती । वक्तुम् । वचनम् । उक्त्वा । प्रोच्य । वाक् । वाचा । वाचिकम् । वाचालः--वाचाटः । वाचोयुक्तिः । वाग्मी ॥

[३५२] इण्=गतौ । सकर्म० । अनिट् । परस्मै० ॥

१. प्र० एति । इतः । यन्ति ॥ म० एषि । इथः । इथ ॥ उ० एमि । इवः । इमः ॥ २. प्र० एतु--इतात् । इताम् । यन्तु ॥ म० इहि--इतात् । इतम् । इत ॥ उ० अयानि । अयाव । अयाम ॥ ३. प्र० ऐत् । ऐताम् । आयन् ॥ म० ऐः । ऐतम् । ऐत ॥ उ० आयम् । ऐव । ऐम ॥ ४. प्र० इयात् । इयाताम् । इयुः ॥ ५. प्र० इयाय । ईयतुः । ईयुः ॥ म० इययिथ--इयेथ । ईयथुः । ईय ॥ उ० इयाय--इयय । ईयिव । ईयिम ॥ ६. एता ॥ ७. एष्यति ॥

१. प्रक्रिया '**चाचक्षीति**' (३३२) इत्यत्र द्रष्टव्या । २. **वचोऽशब्दसंज्ञायाम्** । इति कुत्वनिषेधः । ३ "**आलजाटचौ बहुभाषिणि**" इत्यालजाटचौ । ४. "**वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु**" इति षष्ठ्या अलुक् । ५. शशिनं पुनरेति शर्वरी—इति रघुः । ६. **इणो यण्** । अजादौ प्रत्यये परे । इयङोऽपवादः । ७. आ+इ+त् =**आटश्च** (२)इति वृद्धिः । ऐत् । ८. इ+णल् इति स्थिते धातोर्द्वित्वे इ इ अ इति जाते णलो णित्वादुत्तरखण्डस्य वृद्धौ इ ऐ अ इत्यत्र आयादेशे पूर्वखण्डस्य **अभ्यासस्यासवर्णे** (५०)इति इयङि, इयाय । ९. इ इ अतुस् इत्यत्र उत्तरखण्डस्य **इणो यण्** । इति यणि, पूर्वखण्डस्य **दीर्घ इणः किति** । इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि । इति दीर्घे च रूपम् । १०. भारद्वाजनियमादिड्विकल्पः ।

८. ईयात् । समियात्[1] । ईयास्ताम् । समियास्ताम् । ईयासुः ॥ ९. **प्र०** अगात्[2] । अगाताम् । अगुः ॥ **म०** अगाः ॥ **उ०** अगाम् ॥ १०. ऐष्यत् ॥

**कर्मणि**—ईयते । ५. ईये । ९. अगायि । **णिचि**—गमयति[3]-प्रत्याययति । **सनि**—जिगमिषति[4]-प्रतीषिषति । **कृत्सु**—एतव्यम् । अयनीयम् । एयम् । इतः । यन् । यती । एष्यन् । एष्यती-एष्यन्ती । एतुम् । अयनम् । इत्वा । प्रेत्य । उपेयिवान् । इत्वरः । न्यायः । आयुः । इभः । एकः । एतत् । प्र+एति ; परा+एति ; प्रैति-परैति=परं-लोकं गच्छति इत्यर्थः । प्रतिपूर्वो-विश्वासे । प्रत्येति प्रत्ययः । उद्-उद्यमने ; प्रकाशे । उदेति ; ऊर्ध्वं गच्छति प्रकाशते वा । अनु ; सम्बन्धे-अनुगमने च । अन्वेति । सम्बध्नाति ; पश्चाद्गच्छति वा । उप-समीपगमने=उपैति । अभि=अभिमुखगमने । अभ्येति ; अभिमुखं गच्छति इत्यर्थः । अभि+उप ; अङ्गीकारे । अभ्युपैति ; अङ्गीकरोति । निर्-निर्गमे । निरेति । अप--अपसरणे=अपैति ॥ आङ्-आगतौ-ऐति[5]-आयाति-इत्यर्थः । अधि-स्मरणे ; अध्येति । शतरि-अधीयन् । वि+परि=विपर्यये ; विपर्येति=विपर्ययं प्राप्नोति । अति ; अतिक्रमे । अत्येति=अतिक्रम्य याति इत्यर्थः । अभि+प्र=अभिप्रैति । परि-व्याप्तौ । पर्येति ; व्याप्नोति इत्यर्थः ।

१. "**एतेर्लिङि**" इति ह्रस्वत्वम् । समीयादिति प्रयोगः "**ई**" गतौ (१०८) इति भौवादिकस्य । २. **इणो गा लुङि** । इति 'गा' देशे **गातिस्था**—(पृ० १०) इति सिचो लुक् । लुङि प्रथमा विधा । ३. **णौ गमिरबोधने** । इणो गमिः स्याद्बोधनभिन्नार्थे । बोधने तु—प्रत्याययति । निगरणचलनार्थेभ्यश्च । ४. **सनि च** । इत्यबोधनार्थस्य गम्यादेशः । बोधने प्रतीषिषति । ५. ऐति स्म रामः सह जामदग्न्यः—इति भट्टिः ।

[३५३] इङ्=अध्ययने। नित्यमधिपूर्वः। सकर्म०। अनिट्। आत्मने०।

१. प्र० अधीते। अधीयाते। अधीयते॥ म० अधीषे। अधीयाथे। अधीध्वे॥ उ० अधीये। अधीवहे। अधीमहे॥ २. प्र० अधीताम्। अधीयाताम्। अधीयताम्॥ म० अधीष्व। अधीयाथाम्। अधीध्वम्॥ उ० अध्ययै। अध्ययावहै। अध्ययामहै॥ ३. प्र० अध्यैत। अध्यैयाताम्। अध्यैयत॥ म० अध्यैथाः। अध्यैयाथाम्। अध्यैध्वम्॥ उ० अध्यैयि। अध्यैवहि। अध्यैमहि॥ ४. प्र० अधीयीत। अधीयीयाताम्। अधीयीरन्॥ म० अधीयीथाः। अधीयीयाथाम्। अधीयीध्वम्॥ उ० अधीयीय। अधीयीवहि। अधीयीमहि॥ ५. प्र० अधिजगे[1]। अधिजगाते। अधिजगिरे॥ म० अधिजगिषे। अधिजगाथे। अधिजगिध्वे॥ उ० अधिजगे। अधिजगिवहे। अधिजगिमहे॥ ६. प्र० अध्येता॥ म० अध्येतासे॥ उ० अध्येताहे॥ ७. अध्येष्यते॥ ८. प्र० अध्येषीष्ट॥ म० अध्येषीष्ठाः। ढ्वम्—ध्वम्॥ उ० अध्येषीय॥ ९. प्र० अध्यगीष्ट[2]। अध्यगीषाताम्। अध्यगीषत॥ म० अध्यगीष्ठाः॥ उ० अध्यगीषि॥ पक्षे—अध्यैष्ट[3]। अध्यैषाताम्॥ म० अध्यैष्ठाः॥ उ० अध्यैषि॥ १०. अध्यगीष्यत—

१. **गाङ् लिटि**। इणो 'गाङ्' स्याल्लिटि लावस्थायां विवक्षिते वा। २. **विभाषा लुङ्लृङोः**। इणो 'गाङ्' वा स्याल्लुङ्लृङोः। **गाङ्कुटादिभ्योऽञ्णिन्ङित्**। गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः। **घुमास्थागापाजहातिसां हलि** (२६४) इति ईत्वागमपक्षे रूपाणि। लुङि एकादशी विधा। ३. गाङादेशाभावपक्षे रूपाणि। लुङि दशमी विधा। सोऽध्यैष्ट वेदानिति भट्टिः।

**कर्मणि**—अधीयते। ५. अधिजगे। ९. अध्यगायि–अध्यायि। **णिचि**—अध्यापयति। ९. अध्यजीगपत्–अध्यापिपत्। **सनि**—अधिजिगांसते। **कृत्सु**—अध्येतव्यम्। अध्ययनीयम्। अध्येयम्। अधीतः। अधीयानः। अधीयन्–अधीयती। कृच्छ्रिणि तु कृच्छ्रेण अधीते। अध्येतुम्। अध्ययनम्। अधीत्य। अध्यायः। उपाध्यायः। उपाध्याया। उपाध्यायी। उपाध्यायानी। अधीतमनेनेत्यधीती व्याकरणे। व्याकरणमधीतवानित्यर्थः। अधीतिनी ॥

[३५४] इक्=स्मरणे। सकर्म०। अनिट्। परस्मै०। नित्यमधिपूर्वः।

१. **प्र०** अध्येति। अधीतः। अधियन्ति–अधीयन्ति ॥ **म०** अध्येषि। अधीथः। अधीथ ॥ **उ०** अध्येमि। अधीवः। अधीमः ॥ **२. प्र०** अध्येतु–अधीतात्। अधीताम्। अधियन्तु–अधीयन्तु ॥ **म०** अधीहि ॥ उ० अध्ययानि ॥ **३. प्र०** अध्येत्। अध्यैताम्। अध्यायन् ॥ **म०** अध्यैः। अध्यैतम्। अध्यैत ॥ **उ०** अध्यायम्। अध्यैव। अध्यैम ॥ ४. अधीयात्। अधीयाताम् ॥ ५. **प्र०** अधीयाय। अधीयतुः। अधीयुः ॥ **म०** अधीयायिथ–अधीयेथ। अधीयथुः। अधीय ॥ **उ०** अधीयाय–अधीयय। अधीयिव। अधीयिम ॥ ६. अध्येता ॥ अध्येतासि ॥ ७. अध्येष्यति ॥ ८. अधीयात् ॥ अधीयास्ताम् ॥ ९. अध्यैगात्। अध्यगाताम्। अध्यगुः ॥ १०. अध्यैष्यत् ॥

---

१. **क्रीङ्जीनां णौ**। एषामेच आत्वं स्याण्णौ। **अर्तिह्रीव्लीरी**–(१४६) इति पुक्। **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः**। एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। २. **णौ च संश्चङोः**। सन्परे चङ्परे च णौ इङो गाङ्वा स्यात्। ३. **इङश्च**। इङो गमिः स्यात्सनि। इति गम्यादेशे **अज्झनगमा**—(१६४) मिति दीर्घः। ४. **इङ्धार्योः शत्रकृच्छ्रिणि**। आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि। ५. "**उपाध्यायमातुलाभ्यां वा**" इति पुंयोगङीषि विकल्पेन आनुक्। ६. त्वगुत्तरासङ्गवतीमधीतिनीम्–इति कालिदासः। ७. **इण्वदिक इति वक्तव्यम्**।

**कर्मणि**—अधीयते । ५. अधीये । अधीयाते । अधीयिरे ॥ ९. अध्यगायि । **णिचि**—अधिगमयति–ते । **सनि**—अधिजिगमिषति । **कृत्सु**—'अधीति'(३५३)वत् ॥

[३५५] **वी**=गतिप्राप्तिप्रजनकान्त्यसनखादनेषु । प्रजनो=गर्भग्रहणम् । असनं=क्षेपणम् । यथायथं सकर्मकोऽकर्मकश्च । अनिट् । परस्मै० ॥

१. **प्र०** वेति । वीतः । वियन्ति ॥ **म०** वेषि । वीथः । वीथः ॥ वेमि । वीवः । वीमः ॥ २. **प्र०** वेतु–वीतात् । वीताम् । वियन्तु ॥ **म०** वीहि–वीतात् । वीतम् । वीत ॥ **उ०** वयानि । वयाव । वयाम ॥ ३. **प्र०** अवेत् । अवीताम् । अवियन्–अव्यन्[1] ॥ **म०** अवेः । अवीतम् । अवीत ॥ **उ०** अवयम् । अवीव । अवीम ॥ ४. **प्र०** वीयात् । वीयाताम् । वीयुः ॥ ५. **प्र०** विवाय । विव्यतुः । विव्युः ॥ **म०** विवयिथ–विवेथ । विव्यथुः । विव्य ॥ **उ०** विवाय–विवय । विव्यिव । विव्यिम ॥ ६. वेता ॥ **म०** वेतासि ॥ **उ०** वेतास्मि ॥ ७. वेष्यति ॥ ८. वीयात् । वीयास्ताम् ॥ ९. अवैषीत्[2] । अवैष्टाम् ॥ १०. अवेष्यत् ॥

**कर्मणि**—वीयते । ५. विव्ये । ९. अवायि । **णिचि**—वाययति । प्रजनार्थत्वे[3] तु । वाययति–वापयति । **सनि**—विवीषति । **यङि**—वेवीयते । **यङ्लुकि**—वेवेति–वेवयीति । **कृत्सु**—वेतव्यम् । वयनीयम् । वेयम् । वीतम् । वियन् । वेतुम् । वयनम् । वीत्वा । प्रवीय ॥

---

१. लावस्थायामेवाडिति पक्षे इयङं बाधित्वा अनेकाच्त्वात् यणि "अव्यन्" इति आत्रेयादयः । २. लुङि षष्ठी विधा । ३. **प्रजने वीयतेः** । अस्यैचः आत्वं वा । आत्वे पुक् ।

[३५६] **या**=प्रापणे । प्रापणमिह गतिः । सकर्म० । अनिट् । परस्मै० ॥

**१. प्र०** याति-प्रणियाति[1] । यातः । यान्ति ॥ **म०** यासि । याथः । याथ ॥ **उ०** यामि । यावः । यामः ॥ **२. प्र०** यातु-यातात् ॥ **म०** याहि-यातात् ॥ **उ०** यानि ॥ **३. प्र०** अयात् । अयाताम् । अयुः-अयान्[2] । **म०** अयाः ॥ **उ०** अयाम् ॥ **४. प्र०** यायात् । यायाताम् ॥ **म०** यायाः ॥ **उ०** यायाम् ॥ **५. प्र०** ययौ[3] । ययतुः[4] । ययुः ॥ **म०** ययिथ-ययाथ[5] । ययथुः । यय ॥ **उ०** ययौ । ययिव[6] । ययिम ॥ **६.** याता ॥ यातासि ॥ **७.** यास्यति ॥ **८.** यायात् । यायास्ताम् ॥ **९.** अयासीत्[7] । अयासिष्टाम् ॥ **१०.** अयास्यत् ॥ **कर्मणि**—यायते । **५.** याये । **९.** अयायि । **णिचि**—यापयति । **सनि**—यियासति । **यङि**—यायायते । **यङ्लुकि**—यायेति-यायाति । **कृत्सु**—यातव्यम् । यानीयम् । येयम् । यातः । यान् । याती[9]-यान्ती । यातुम् । यानम् । यात्वा । प्रयाय ॥

[३५७] **वा**=गतिगन्धनयोः । अकर्म० । अनिट् । परस्मै० ॥

वाति । वातः । वान्ति । इत्यादि **'याति'** (३५६) वत् ॥ **णिचि**—वाजयति[10]-वापयति । वातः । वायुः ।

१. **नेर्गद**(३८) इति णत्वम् । २. **लङः शाकटायनस्यैव** । आदन्तात्परस्यं लङो झेर्जुस् वा स्यात् । ३ **आत औ णलः** (२६४) । ४. या+अतुस् या या अतुस्=यया अतुस् इति जाते **आतो लोप इटि च** (२६४ इति आकारलोपे यय् अतुस्=ययतुः । ५. थलि भारद्वाजनियमादिड्विकल्पः । ६. क्रादिनियमादिट् । ७ आदन्तत्वात् **यमरमनमातां सक्च** (पृ० ११) । इति सगागमः । चतुर्थी विधा । ८. **नित्यं कौटिल्ये गतौ** । ९ **आच्छीनद्योर्नुम्** । इति वा नुम् । १०. **वो विधूनने जुक्** । वातेर्जुक् स्याण्णौ कम्पर्थे । कम्पार्थादन्यत्र वापयति केशान् ।

[३५८] भा=दीप्तौ । अकर्म० । अनिट् । परस्मै० ।

भाति । भातः । भान्ति । इत्यादि **'याति'** (३५६) वत् । वि+अति–परस्परभाने–व्यतिभाते । प्रति–प्रतिभायाम् ; प्रतिभाति । भा । भाः । प्रतिभा । निभस्तुल्यः । भानुः ।

[३५९] ष्णा=शौचे । अकर्म० । अनिट् । परस्मै० ॥

१. **प्र०** स्नाति । स्नातः । स्नान्ति ॥ **म०** स्नासि ॥ **उ०** स्नामि ॥ २. **प्र०** स्नातु ॥ **म०** स्नाहि ॥ **उ०** स्नानि ॥ ३. अस्नात् ॥ ४. स्नायात् । स्नायाताम् ॥ ५. **प्र०** सस्नौ । सस्नतुः । सस्नुः ॥ **म०** सस्निथ–सस्नाथ ॥ **उ०** सस्नौ । सस्निव ॥ ६. स्नाता ॥ ७. स्नास्यति ॥ ८. स्नायात् । स्नायास्ताम् ॥ **पक्षे**—स्नेयात्[1] । स्नेयास्ताम् ॥ ९. अस्नासीत्[2] ॥ १०. अस्नास्यत् ॥ इत्यादि **'याति'** (३५६)वत् । **सनि**—सिष्णासति । **णिचि**—स्नापयति[3]–स्नपयति । प्रस्नापयति । निष्णातः । स्नानम् । स्नानीयं चूर्णम् ।

[३६०] श्रा=पाके । सकर्म० । अनिट् । परस्मै० ॥

श्राति । श्रातः । श्रान्ति । इत्यादि **'याति'** (३५६) वत् । शृतम्[4] । श्राणम्[5]–श्रपितम् ॥

[३६१] द्रा=पलायने स्वापे च । स्वापवचनोयं प्रायो निपूर्वः ।

१. **वान्यस्य संयोगादेः** । घुमास्थादेरन्यस्य संयोगादेर्धातोः आत एत्वं वा स्यादार्धधातुके किति लिङि । २. लुङि चतुर्थी विधा । ३. **ग्लास्नावनुवमां च** । इति अनुपसृष्टस्य वा मित्त्वम् । ४ **शृतं पाके** । श्राति श्रपयत्योः क्ते 'शृ' भावो निपात्यते क्षीरहविषोः पाके । ५ अन्यत्र तु श्राणा श्रपिता वा यवागूः ।

द्राति–निद्राति–प्रणिद्राति । द्रातः । द्रान्ति । इत्यादि **'याति'** (३५६)वत् । ८. द्रायात्–द्रेयात् ॥ निद्रा । निद्रालुः । द्राणः[1] । तन्द्री ।

[३६२] **पा**=रक्षणे । सकर्म० । अनिट् । परस्मै० ॥

१. पाति । पातः । पान्ति ॥ **म०** पासि ॥ **उ०** पामि ॥ २. **प्र०** पातु ॥ **म०** पाहि ॥ **उ०** पानि ॥ ३. **प्र०** अपात् । अपाताम् । अपुः–अपान् ॥ **म०** अपाः ॥ **उ०** अपाम् ॥ ४. पायात् । पायाताम् ॥ ५. **प्र०** पपौ । पपतुः । पपुः ॥ **म०** पपिथ–पपाथ । पपथुः । पप ॥ **उ०** पपौ । पपिव । पपिम ॥ ६. पाता ॥ ७. पास्यति ॥ ८. पायात् । पायास्ताम् ॥ ९. अपासीत् ॥

**कर्मणि**—पायते । **णिचि**—पालयति[2]–ते । **कृत्सु**—पातव्यः । पानीयः । पेयः । पातः । पान् । पाती–पान्ती । पातुम् । पात्वा । परिपाय । पालकः । पतिः । पत्नी । पिता ।

[३६३] **रा**=दाने । सकर्म० । अनिट् । परस्मै० ॥

राति । रातः । रान्ति । इत्यादि **'याति'** (३५६) वत् । राः । राका । रात्रिः ।

[३६४] **ला**=आदाने । सकर्म० । अनिट् । परस्मै० ॥

लाति । लातः । लान्ति ॥ इत्यादि **'याति'** (३५६) वत् । **णिचि**—विलालयति[3]–ते–विलापयति–ते ।

१ **संयोगादेरातो धातोर्यण्वतः** । निष्ठातस्य नः स्यात् । २. **पातेर्लुग्वक्तव्यः** । इति णिचि लुगागमः । ३. **लीलोर्नुग्लुगावन्यतरस्यां स्नेहनिपातने** । लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो स्नेहद्रवे । विलापयति **लोहम्** ।

[३६५] ख्या=प्रकथने । सकर्म० । अनिट् । परस्मै० ॥

१. ख्याति । ख्यातः । ख्यान्ति ॥ २. प्र० ख्यातु--ख्यातात् ॥ म० ख्याहि ॥ उ० ख्यानि ॥ ३. प्र० अख्यात् । अख्याताम् । अख्युः—अख्यान् ॥ म० अख्याः ॥ उ० अख्याम् ॥ ४. ख्यायात् । ख्यायाताम् ॥ ५. प्र० चख्यौ । चख्यतुः । चख्युः ॥ म० चख्यिथ—चख्याथ ॥ उ० चख्यौ । चख्यिव ॥ ६. ख्याता ॥ ७. ख्यास्यति ॥ ८. ख्यायात्—ख्यायास्ताम् । ख्येयात्—ख्येयास्ताम् ॥ ९. अख्यत्[1] । अख्यताम् ॥ १०. अख्यास्यत् ॥

**कर्मणि**—ख्यायते । **णिचि**—ख्यापयति-ते । **सनि**—चिख्यासति । **यङि**—चाख्यायते । **यङ्लुकि**—चाख्येति—चाख्याति ॥ **कृत्सु**—ख्यातव्यम् । ख्यानीयम् । ख्येयम् । ख्यातः । ख्यान् । ख्याती—ख्यान्ती । ख्यातुम् । ख्यानम् । ख्यात्वा । प्रख्याय ॥ सखा[2] । परमसखः[3] । सुसखा[4] । अतिसखा । किंसखा । असखा ।

[३६६] मा=माने मानमिहान्तभाव । अकर्म० । अनिट् । परस्मै० ॥

माति । मातः । मान्ति । इत्यादि **'याति'** (३५६) वत् । मायी । मायिकः । माया । प्रमा । प्र-प्रमाणे : प्रमाति । परि-परिमाणे ; परिमाति । उत्-उन्माने : उन्माति । उप—उपमाति मुखम् । अनु-अनुमाने । अनुमात्यग्निम् । निर्-निर्माति गृहम् ।

१. लुङि द्वितीया विधा । २ **समाने ख्यः स चोदात्तः** । ३ **"राजाहस्सखिभ्यष्टच्"** इति टच् । ४. **न पूजनात्** । **किमः क्षेपे** । **नञस्तत्पुरुषात्** । इति समासान्ताभावः ।

[३६७] **वच**=परिभाषणे । द्विकर्म० । अनिट् । परस्मै० ॥

१. **प्र०** वक्ति । वक्तः । अन्तिप्रयोगो नास्ति । **म०** वक्षि ॥ **उ०** वच्मि ॥ २. वक्तु ॥ **म०** वग्धि ॥ **उ०** वचानि ॥ ३. **प्र०** अवक्-ग् । अवक्ताम् । अवचन् ॥ **म०** अवक्-ग् । अवक्तम् । अवक्त ॥ **उ०** अवचम् । अवच्व ॥ ४. वच्यात् । वच्याताम् ॥ ५. **प्र०** उवाच । ऊचतुः । ऊचुः ॥ **म०** उवचिथ-उवक्थ । ऊचथुः । ऊच ॥ **उ०** उवाच-उवच । ऊचिव ॥ ६. वक्ता ॥ ७. वक्ष्यति ॥ ८. उच्यात् । उच्यास्ताम् ॥ ९. अवोचत् । अवोचताम् । अवोचन् ॥ १०. अवक्ष्यत् ॥

**कर्मणि**---उच्यते । ५. ऊचे । ९. अवाचि ॥ **णिचि**—वाचयति--ते । **सनि**—विवक्षति । **यङि**—वावच्यते । **यङ्लुकि**—वावचीति-वावक्ति । वक्तव्यम् । वचनीयम् । वाच्यम्-वाक्यम् । उक्तः । वचन् । वचती । वक्ष्यन् । वक्ष्यती-वक्ष्यन्ती । वचनम् । उक्त्वा । प्रोच्य । निर्-निरुक्तौ । निर्वक्ति । प्रति-प्रतिवक्ति । अनु-अनुवादे । अनुवक्ति ।

[३६८] **विद**=ज्ञाने । सकर्म० । सेट् । परस्मै० ॥

१. **प्र०** वेत्ति । वित्तः । विदन्ति ॥ **म०** वेत्सि । वित्थः । वित्थ ॥ **उ०** वेद्मि । विद्वः । विद्मः ॥ **पक्षे प्र०** वेद । विदतुः । विदुः ॥ **म०** वेत्थ । विदथुः । विद ॥ **उ०** वेद । विद्व । विद्म ॥ २. वेत्तु-वित्तात् । वित्ताम् । विदन्तु ॥ **म०** विद्धि । वित्तम् ।

---

१ **विदो लटो वा** । वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः ।

विद ॥ उ० वेदानि । वेदाव । वेदाम ॥ **पक्षे—प्र०** विदांकरोतु[1]-विदांकुरुतात्[2] । विदांकुरुताम् । विदांकुर्वन्तु ॥ **म०** विदांकुरु-विदांकुरुतात् । विदांकुरुतम् । विदांकुरुत ॥ उ० विदांकरवाणि । विदांकरवाव । विदांकरवाम ॥ ३. प्र० अवेत् । अवित्ताम् । अविदुः[3] ॥ अवेः[4]-अवेत् । अवित्तम् । अवित्त ॥ उ० अवेदम् । अविद्व । अविद्म ॥ ४. विद्यात् । विद्याताम् । विद्युः ॥ ५. प्र० विवेद । विविदतुः । विविदुः ॥ म० विवेदिथ । विविदथुः । विविद ॥ उ० विवेद । विविदिव । विविदिम ॥ **पक्षे**—विदाञ्चकार[5]-विदाम्बभूव-विदामास । इत्यादि ॥ ६. वेदिता ॥ ७. वेदिष्यति ॥ ८. विद्यात् । विद्यास्ताम् ॥ ९. अवेदीत्[6] ॥ १०. अवेदिष्यत् ॥

**सम्पूर्वः[7] आत्मनेपदे**—१. प्र० संवित्ते[8] । संविदाते । संविद्रते ॥ म० संवित्से ॥ उ० संविदे ॥ २. प्र० संवित्ताम्

१. **विदांकुर्वन्त्वित्यन्यतरस्याम्** । वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते । इति शब्दात् । विदांकृ+ति इति स्थिते **तनादिकृञ्भ्य उः** । तनादेः कृञश्च 'उ' प्रत्ययः स्यात् । शपोपवादः । विदां कृ उ ति इति जाते ऋकारस्य गुणे विदाङ्कर् उ ति इति जाते उकारस्य तिन्निमित्तकगुणे 'विदाङ्करोति इति रूपम् । २ **अत उत्सार्वधातुके** । उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । इति 'कर' इत्येत् 'कुर्' इति भवति । ३. **सिजभ्यस्तविदिभ्यश्च** (पृ० १०) इति जुस् । ४ अवेद्+स् इति स्थिते **हल्ङ्याबिति** सलोपे **दश्च** । धातोर्दान्तस्य पदस्य सिपि परे रुः स्याद्वा । रोः **खरवसानयो**—रिति विसर्गे 'अवेः' इति रूपम् । रुत्वाभावे 'अवेत्' इति । ५. **उषविदजागृभ्योन्यतरस्याम्** २०१) इति वा आम् । ६. सप्तमो लुङ् । ७ **विदिप्रच्छिस्वरतीनामुपसंख्यानम्** । समः परेषामेषामात्मनेपदं स्यात् । ८. **वेत्तेर्विभाषा** । वेत्तेः परस्य झादेशस्य अतः रुडागमो वा स्यात् ।

संविदाताम् । संविदताम्--संविद्रताम् ॥ **म०** संवित्स्व ॥ **उ०** संविदै ॥ **३. प्र०** समवित्त । समविदाताम् । समविदत--समविद्रत ॥ **म०** समवित्थाः ॥ **उ०** समविदि ॥ **४.** संविदीत । संविदीयाताम् । संविदीरन् ॥ **५. प्र०** संविविदे । संविविदाते । संविविदिरे ॥ **म०** संविविदिषे ॥ **उ०** संविविदे । संविविदिवहे ॥ **६.** संवेदिता ॥ **७.** संवेदिष्यते ॥ **८.** संवेदिषीष्ट ॥ **९.** समवेदिष्ट[1] । **१०.** समवेदिष्यत ॥

**कर्मणि**—विद्यते ॥ **५.** विविदे ॥ **९.** अवेदि ॥ **णिचि**—वेदयति । **९.** अवीविदत् । **सनि**—विविदिषति । **यङि**—वेविद्यते । **यङ्लुकि**—वेवेत्ति । वेविदीति । **कृत्सु**—वेदितव्यम् । वेदनीयम् । वेद्यम् । विदितः । विदितवान् । विद्वान्[2]--विदन् । विदुषी--विदती । वेदितुम् । विदित्वा । संविद्य । शास्त्रवित् । विदुरः । विन्दुः । वेदः । वित्तिः । विद्या । वेदना । विदा ॥

[३६९] **अस्**=भुवि । अकर्म० । सेट् । परस्मै० ॥

**१. प्र०** अस्ति । स्तः[3] । सन्ति ॥ **म०** असि[4] । स्थः । स्थ । उ० अस्मि । स्वः । स्मः ॥ २. **प्र०** अस्तु--स्तात् । स्ताम् । सन्तु ॥ **म०** एधि[5]--स्तात् । स्तम् । स्त ॥ उ० असानि । असाव ।

१. लुङि एकादशी विधा । २. **विदेः शतुर्वसुः** । वेत्तेः परस्य रादेशो वा स्यात् । ३. अस्+अन्ति इति स्थिते **श्नसोरल्लोपः** । श्नम्प्रत्ययस्य अस्तेश्च अकारस्य लोपः स्यात्सार्वधातुके क्ङिति । ४. अस्+सि इति स्थिते **तासस्त्योर्लोपः** (पृ० ९) इति अस्तेः सकारस्य लोपः । ५ अस्+हि इति स्थिते **घ्वसोरेद्धावभ्यासलोपश्च** । घोरस्तेश्च एत्वं स्यात् हौ परे अभ्यासलोपश्च । इति सकारस्य एत्वे अ एहि इति जाते **हुझल्भ्यः** (३२६) इति हेर्धित्वे अ एधि इति भवति । **श्नसोरल्लोपः** इति अकारलोपे 'एधि' इति भवति ।

असाम ॥ ३. प्र० आसीत्[1] । आस्ताम् । आसन् ॥ म० आसीः । आस्तम् । आस्त ॥ उ० आसम् । आस्व । आस्म ॥ ४. प्र० स्यात् । स्याताम् । स्युः ॥ म० स्याः । स्यातम् । स्यात ॥ उ० स्याम् । स्याव । स्याम ॥ ५. बभूव[2] । बभूवतुः ॥ ६. भविता ॥ ७. भविष्यति ॥ ८. भूयात् । भूयास्ताम् ॥ ९. अभूत् । अभूताम् ॥ १०. अभविष्यत् ॥ **भावे—णिचि—सनि—यङि—यङ्लुकि च –'भवति' (१) वत्** । शतरि–सन् । सती ॥

[३७०] **मृजू** ष्=शुद्धौ । षिद्भिदादिभ्योऽङ् इति अङर्थं षत्वम् । सकर्म० । वेट् । परस्मै० ॥

१. प्र० मार्ष्टि[3] । मृष्टः । मृजन्ति- मार्जन्ति ॥ म० मार्क्षि । । उ० मार्ज्मि । मृज्वः । मृज्मः ॥ २. प्र० मार्ष्टु मृष्टात् । मृष्टाम् । मृजन्तु–मार्जन्तु ॥ म० मृड्ढि । मृष्टम् । मृष्ट ॥ उ० मार्जानि । मार्जाव । मार्जाम ॥ ३. प्र० अमार्ट् । अमृष्टाम् । अमृजन्–अमार्जन् ॥ म० अमार्ट् । अमृष्टम् । अमृष्ट ॥ उ० अमार्जम् । अमृज्व । अमृज्म ॥ ४. प्र० मृज्यात् । मृज्याताम् । मृज्युः ॥ ५. प्र० ममार्ज । ममार्जतुः–ममृजतुः । ममार्जुः–ममृजुः ॥ म० ममार्जिथ–ममार्ष्ठ । ममार्जथुः–ममृजथुः । ममार्ज–ममृज ॥ उ० ममार्ज । ममृजिव–ममार्जिव–ममृज्व । ममृजिम–ममार्जिम- ममृज्म ॥ ६. मार्जिता–मार्ष्टा ॥ ७. मार्जिष्यति–मार्क्ष्यति ॥

१ **अस्तिसिचोऽपृक्ते** (२७, इति अपृक्तस्य तकारस्य ईडागमे रूपम् । २. **अस्तेर्भूः** । अस्तेर्भूभावः स्यादार्धधातुके । ३. **मृजेर्वृद्धिः** । मृजेरिको वृद्धि स्यात् धातुप्रत्यये परे । ४. **क्ङित्यजादौ वेष्यते** ।

८. मृज्यात्। मृज्यास्ताम्॥ ९. अमार्जीत्[1]–अमार्क्षीत्[2]। अमार्जिष्टाम्–अमार्ष्टाम्[3]॥ १०. अमार्जिष्यत्–अमार्क्ष्यत्॥

**कर्मणि**—मृज्यते। ५. ममृजे। ९. अमार्जि॥ **णिचि**—मार्जयति–ते। ९. अमीमृजत्–अममार्जत्। **सनि** - मिमृक्षति–मिमार्जिषति। **यङि**—मरीमृज्यते। **यङ्लुकि**—मरीमार्जीति मरीमार्ष्टि। **कृत्सु**—मार्जितव्यम्–मार्ष्टव्यम्–म्रष्टव्यम् मार्जनीयम्। मृज्यः–मार्ग्यः। मृष्टः। मृजन्–मार्जन्। मृजती–मार्जती। मार्जितुम्-मार्ष्टुम्–म्रष्टुम्। मार्जनम्। मार्जित्वा–मृष्ट्वा। परिमृज्य। मृजा। अपामार्गः।

[३७१] **रुदिर्**=अश्रुविमोचने। अकर्म०। सेट्। परस्मै०।

१. **प्र०** रोदिति[4]। रुदितः। रुदन्ति॥ **म०** रोदिषि। रुदिथः। रुदिथ॥ **उ०** रोदिमि। रुदिवः। रुदिमः॥ २. **प्र०** रोदितु–रुदितात्। रुदिताम्। रुदन्तु॥ **म०** रुदिहि–रुदितात्। रुदितम्। रुदित॥ **उ०** रोदानि। रोदाव। रोदाम॥ ३. **प्र०** अरोदीत्[5]–अरोदत्[6]। अरुदिताम्। अरुदन्॥ **म०** अरोदीः–अरोदः। अरुदितम्। अरुदित॥ **उ०** अरोदम्। अरुदिव। अरुदिम॥ ४. रुद्यात्।

१. ऊदित्वादिड्विकल्पः। इट्पक्षे अमार्ज्+इस्+ईत् इति स्थिते **इट ईटि** (२७) इति सिचो लोपे रूपम्। २. इडभावपक्षे अमार्ज्+स्+ईत् इति स्थिते कुत्वषत्वयो रूपम्। अमार्क्षीच्चासिपत्रादीन् (भट्टिः। १५। १११)। ३. **झलो झलि** (३५) इति सिज्लोपः। ४. **रुदादिभ्यः सार्वधातुके**। रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात्। इति इट्। ५. **रुदश्च पञ्चभ्यः**। हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात्। ६. **अड्गार्ग्यगालवयोः**। अनयोर्मते रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकापृक्तस्य अडागमः स्यात्।

रुद्यातम् ॥ ५. प्र० रुरोद । रुरुदतुः । रुरुदुः ॥ म० रुरोदिथ । रुरुदथुः । रुरुद ॥ उ० रुरोद । रुरुदिव । रुरुदिम ॥ ६. रोदिता ॥ ७. रोदिष्यति । ८. रुद्यात् । रुद्यास्ताम् ॥ ९. अरुदत्[1] । अरुदताम् । अरुदन् ॥ **पक्षे** —अरोदीत्[2] । अरोदिष्टाम् । अरोदिषुः । १०. अरोदिष्यत् ॥

**भावे**—रुद्यते । ५. रुरुदे । ९. अरोदि ॥ **णिचि**—रोद-यति ते **सनि** —रुरुदिषति[3] । **यङि**—रोरुद्यते । **यङ्लुकि**—रोरुदीति-रोरोत्ति । **कृत्सु** —रोदितव्यम् । रोदनीयम् । रोद्यम् । रुदितः । रुदन् । रुदती । रोदितुम् । रोदनम् । रुदित्वा । प्ररुद्य । रुद्रः । रुद्राणी[4] ।

[३७२] ञिष्वप्=शये । अकर्म० । अनिट् । परस्मै० ।

१. प्र० स्वपिति[5] । स्वपितः । स्वपन्ति ॥ म० स्वपिषि । स्वपिथः । स्वपिथ ॥ उ० स्वपिमि ॥ २. प्र० स्वपितु—स्वपितात् । स्वपिताम् । स्वपन्तु ॥ म० स्वपिहि—स्वपितात् । स्वपितम् । स्वपित ॥ उ० स्वपानि । स्वपाव ॥ ३. अस्वपीत्-अस्वपत्[6] । म० अस्वपीः—अस्वपः । अस्वपितम् ॥ उ० अस्वपम् । अस्वपिव ॥ ४. स्वप्यात् । स्वप्याताम् ॥ ५. प्र० सुष्वाप[7] । सुषुपतुः[8] । सुषुपुः ॥ म० सुष्व-

१. इरित्वात् अङ्पक्षे रूपम् । द्वितीयो लुङ् । २. अङभावपक्षे सिच् । षष्ठो लुङ् । ३ **रुदविदमुषग्रहिस्वपिप्रच्छः संश्च** । एभ्यः सन् क्त्वा च कितौ स्तः । इति कित्त्वात् गुणो न । एवं रुदित्वा इति । ४. **इन्द्रवरुणभ**-ति आनुक् । ५ **रुदादिभ्य**-(३७१)इति इट् । ६ **रुदश्च पञ्चभ्यः** । **अङ्गार्ग्यगालवयोः** (३७१) । ७. स्वप्+णल् इति स्थिते द्वित्वे स्व स्वप् अ इति जाते **लिट्यभ्या-सस्ये**—(३१७)ति सम्प्रसारणे पूर्वरूपे च सु स्वप् अ इति जाते आदेशसकारत्वात् षत्वे सुष्वप्+अ=वृद्धौ 'सुष्वाप' इति रूपम् । ८. **वचिस्वपियजादीना**—(३१७)मिति सम्प्रसारणे ततो द्वित्वादौ रूपम् ।

पिथ[1]—सुष्वप्थ । सुषुपथुः । सुषुप ॥ उ० सुष्वाप—सुष्वप । सुषुपिव[2] । सुषुपिम ॥ ६. स्वप्ता ॥ ७. स्वप्स्यति ॥ ८. सुप्यात्[3] । सुप्यास्ताम् ॥ ९. अस्वाप्सीत्[4] । अस्वाप्ताम् । अस्वाप्सुः ॥ १०. अस्वप्स्यत् ॥

**भावे**—सुप्यते । ९. अस्वापि । **णिचि**—स्वापयति–ते । **सनि**—सुषुप्सति[5] । **यङि**—सोषुप्यते[6] । **यङ्लुकि**—सास्वपीति–सास्वप्ति । **कृत्सु**—स्वप्तव्यम् । स्वपनीयम् । स्वाप्यम् । सुप्तः । स्वपन् । स्वपती । स्वप्तुम् । सुप्त्वा । निषुप्य । स्वप्नः । स्वप्नक् । स्वप्नजौ । स्वप्नजः ।

[३७३] **श्वस**=प्राणधारणे । अकर्म० । सेट् । परस्मै० ॥

१. **प्र०** श्वसिति । श्वसितः । श्वसन्ति ॥ **म०** श्वसिषि । श्वसिथः । श्वसिथ ॥ **उ०** श्वसिमि ॥ २. श्वसितु ॥ **म०** श्वसिहि ॥ **उ०** श्वसानि ॥ ३. **प्र०** अश्वसीत्–अश्वसत् । अश्वसिताम् ॥ **म०** अश्वसीः–अश्वसः ॥ अश्वसम् । अश्वसिव ॥ ४. श्वस्यात् । श्वस्याताम् ॥ ५. शश्वास । शश्वसतुः ॥ ६. श्वसिता ॥ ७. श्वसिष्यति ॥ ८. श्वस्यात् । श्वस्यास्ताम् ॥ ९. अश्वसीत्[7] । अश्वसिष्टाम् ॥ १०. अश्वसिष्यत् ॥

**भावे**—श्वस्यते । ५. शश्वसे । ९. अश्वासि ॥ **णिचि**—श्वासयति । **सनि**—शिश्वसिषति । **यङि**—शाश्वस्यते । **यङ्लुकि**—

---

१. भारद्वाजनियमात्थलि वेट् । २. क्रादिनियमादिट् । ३ आशीर्लिङः कित्त्वात् **वचिस्वपी**—(३१७ ति सम्प्रसारणादि । ४ **वदव्रज**— पृ० १२ ति वृद्धिः । अनिट्कत्वान्न सिज्लोपः । ५ **रुदविदमुष**—(३७१ ति कित्वम् । ६. **स्वापिस्यामिव्येञां यङि** । इति सम्प्रसारणादि । ७ षष्ठो लुङ् ।

शाश्वसीति-शाश्वस्ति । **कृत्सु**—श्वसितव्यम् । श्वसनीयम् । श्वास्यम् । श्वसितः । आश्वस्तः-आश्वसितः । श्वसन् । श्वसती । श्वसितुम् । श्वसनम् । श्वसित्वा । निश्वस्य । श्वसनः । श्वासः । वि-विश्वासे=विश्वसिति ।आ-आश्वासे । आश्वासः—सान्त्वना—आश्वसिति । उत्-उच्छ्वासे-=उच्छ्वसिति ॥

[३७४] **अन**=प्राणने । अकर्म० । सेट् । परस्मै० ॥

१. **प्र०** अनिति । अनितः । अनन्ति ॥ **म०** अनिषि ॥ **उ०** अनिमि ॥ प्राणिति[1] ॥ २. अनितु ॥ **म०** अनिहि ॥ **उ०** अनानि ॥ ३. **प्र०** आनीत्-आनत् ॥ **म०** आनीः-आनः ॥ **उ०** आनम् । आनिव ॥ ४. प्राण्यात् । प्राण्याताम् ॥ ५. **प्र०** आन । आनतुः । आनुः ॥ **म०** आनिथ ॥ उ० आन । आनिव ॥ ६. अनिता ॥ ७. अनिष्यति ॥ ८. अन्यात् । अन्यास्ताम् ॥ ९. आनीत् । आनिष्टाम् ॥ १०. आनिष्यत् ॥

**भावे**—अन्यते । ५. आने । ९. आनि । **णिचि**—प्राणयति । **सनि**—प्राणिणिषति[2] । **कृत्सु**—अनितव्यम् । अननीयम् । अन्यम् । अनितः । अनन् । प्राणन्—प्राणती । अनितुम् । अननम् । अनित्वा । प्राण्य । प्राणः ।

[३७५] **जक्ष**=भक्षहसनयोः । भक्षणे सकर्मकः । अन्यत्राकर्म० । सेट् । परस्मै० ॥

---

१. **अनितेः** । उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । २. **उभौ साभ्यासस्य** । उपसर्गस्थान्निमित्तात्परस्य साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतः ।

१. प्र० जक्षिति । जक्षितः । जक्षति[1] ॥ म० जक्षिषि । जक्षिथः । जक्षिथ ॥ उ० जक्षिमि । जक्षिवः । जक्षिमः ॥ २. प्र० जक्षितु—जक्षितात् । जक्षिताम् । जक्षतु ॥ म० जक्षिहि ॥ उ० जक्षाणि ॥ ३. प्र० अजक्षीत्-अजक्षत् । अजक्षताम् । अजक्षुः[2] ॥ म० अजक्षीः--अजक्षः । अजक्षितम् ॥ उ० अजक्षम् । अजक्षिव ॥ ४. जक्ष्यात् । जक्ष्याताम् ॥ ५. जजक्ष । जजक्षतुः ॥ ६. जक्षिता ॥ ७. जक्षिष्यति ॥ ८. जक्ष्यात् । जक्ष्यास्ताम् ॥ ९. अजक्षीत् । अजक्षिष्टाम् ॥ १०. अजक्षिष्यत् ॥

**कर्मणि**—जक्ष्यते । ५. जजक्षे । ९. अजक्षिष्ट ॥ अजक्षिषाताम् ॥ **णिचि**—जक्षयति ॥ **सनि**—जिजक्षिषति ॥ **यङि**—जाजक्ष्यते ॥ **यङ्लुकि**—जाजक्षीति—जाजष्टि ॥ **कृत्सु**—जक्षितव्यम् । जक्षणीयम् । जक्ष्यम् । जक्षितः । जक्षत्[3] । जक्षनी । जक्षितुम् । जक्षित्वा । प्रजक्ष्य ॥

[३७६] **जागृ**=निद्राक्षये । अकर्म० । सेट् । परस्मै० । ऋदन्तोऽयं धातुः ॥

१. प्र० जागर्ति । जागृतः । जाग्रति ॥ म० जागर्षि । जागृथः ॥ उ० जागर्मि । जागृवः ॥ २. प्र० जागर्तु—जागृतात् । जागृताम् । जाग्रतु ॥ म० जागृहि ॥ उ० जागराणि ॥ ३. प्र०

१. **जक्षित्यादयः षट्** । षड्धातवोऽन्ये, जक्षितिश्च सप्तमः एतेऽभ्यस्तसंज्ञाः स्युः । **अदभ्यस्तात्** । अभ्यस्तात्परस्य झस्य अत् स्यात् । २. **सिजभ्यस्तविदिभ्यश्च** (पृ० १०) इति जुस् । ३ जक्ष्+शतृ इत्यत्र **उगिदचामिति** नुम् प्राप्तः । सः **नाभ्यस्ताच्छतुः** । अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । इति निषिध्यते ।

अजागः[1] । अजागृताम् । अजागरुः[2] ॥ **म०** अजागः । अजागृतम् । अजागृत ॥ **उ०** अजागरम् । अजागृव । अजागृम ॥ **४.** जागृयात् । जागृयाताम् ॥ **५.** जागराञ्चकार[3]—जागराम्बभूव—जागरामास ॥ **पक्षे**—जजागार । जजागरतुः[4] । जजागरुः ॥ **म०** जजागरिथ ॥ **उ०** जजागार—जजागर । जजागरिव ॥ **६.** जागरिता ॥ **७.** जागरिष्यति ॥ **८.** जागर्यात् । जागर्यास्ताम् ॥ **९.** अजागरीत्[5] । अजागरिष्टाम् ॥ **१०.** अजागरिष्यत् ॥

**भावे**—जागर्यते ॥ **९.** अजागारि ॥ **णिचि**—जागरयति-ते । **सनि**—जिजागरिषति ॥ अनेकाच्त्वान्न यङ्—यङ्लुकौ ॥ **कृत्सु**—जागरितव्यम् । जागरणीयम् । जागर्यम् । जागरितः । जाग्रत् । जाग्रती । जागरितुम् । जागरणम् । जागरित्वा । प्रजागर्य । जागरूकः । प्रजागरः ॥

[३७७] **दरिद्रा**=दुर्गतौ । अकर्म० । सेट् । परस्मै० । आकारान्तोऽयम् ॥

**१. प्र०** दरिद्राति । दरिद्रितः[7] । दरिद्रति[6] ॥ **म०** दरिद्रासि । दरिद्रिथः ॥ **उ०** दरिद्रामि । दरिद्रिवः ॥ **२. प्र०** दरिद्रातु—दरिद्रितात् । दरिद्रिताम् । दरिद्रतु ॥ **म०** दरिद्रिहि—दरिद्रितात् । दरिद्रितम् । दरिद्रित ॥ **उ०** दरिद्राणि । दरिद्राव । दरिद्राम ॥

---

१. **हल्ङ्याब्भ्य** इति अपृक्तस्य तकारस्य लोपः । २. अभ्यस्ताज्जुस् । **जुसि च** । अजादौ जुसि इगन्ताङ्गस्य गुणः स्यात् । ३ **उषविदजागृभ्योन्यतरस्याम्** (२०१) । इति वा आम् । ४ **जाग्रोऽविचिण्णल्ङित्सु** । जागर्तेर्गुणः स्यात् वि चिण् णल् ङित् एभ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च । ५. **ह्यन्तक्षण**(१४१)ेति न वृद्धिः । ६. **नाभ्यास्तच्छतुः** । ७. **इद्दरिद्रस्य** । दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके । ८. **श्नाभ्यस्तयोरातः** । अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके ।

३. प्र० अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः ॥ म० अदरिद्राः । अदरिद्रितम् । अदरिद्रित ॥ उ० अदरिद्राम् । अदरिद्रिव । अदरिद्रिम ॥ ४. दरिद्रियात् । दरिद्रियाताम् । दरिद्रियुः ॥ ५. प्र० दरिद्राञ्चकार–दरिद्राम्बभूव–दरिद्रामास ॥ पक्षे—ददरिद्रौ । ददरिद्रतुः । ददरिद्रुः । इत्यादि ॥ ६. दरिद्रिता ॥ ७. दरिद्रिष्यति ॥ ८. दरिद्र्यात् । दरिद्र्यास्ताम् ॥ ९. प्र० अदरिद्रीत् । अदरिद्रिष्टाम् । अदरिद्रिषुः ॥ म० अदरिद्रीः ॥ उ० अदरिद्रिषम् ॥ पक्षे—अदरिद्रासीत् । अदरिद्रासिष्टाम् । अदरिद्रासिषुः ॥ १०. अदरिद्रिष्यत् ॥

भावे—दरिद्र्यते । ९. अदरिद्रि–अदरिद्रायि । णिचि—दरिद्रयति–ते । सनि—दिदरिद्रासति–दिदरिद्रिषति । कृत्सु—दरिद्रितव्यम् । दरिद्रणीयम् । दरिद्र्यम् । दरिद्रितः । दरिद्रत् । दरिद्रती । तुम् । दरिद्राणम् । दरिद्रित्वा । सन्दरिद्र्य ॥ दरिद्राणः । दरिद्रायकः । दरिद्रः । दारिद्र्यम्

१. अनेकाच्त्वादाम् । २ **आत औ णलः** इत्यत्र आत औ णल इत्येतावतैव '**ययौ**' इत्यादिरूपसिद्धौ प्रथममतिक्रम्य औकारविधानं ददरिद्रा+णल् इत्यत्र '**दरिद्रातेरार्धधातुके लोपो वक्तव्यः**' इति आकरलोपे ददरिद्र् णल् इति स्थिते औकारश्रवणार्थं इति पक्षे ददरिद्रौ इत्यादि । ३. दरिद्रा+लुङ् इति स्थिते अदरिद्रा सिच् त् इति जाते आकारलोपे सिच इडागमे **अस्तिसिचोऽपृक्ते** (२७) इति 'त्' इत्यस्य ईडागमे अदरिद्रा इस् ईत् इति जाते **इट ईटि**(२७) इति सस्य लोपे **दरिद्रातेरार्धधातुके लोपो वक्तव्यः** इति आकारलोपे अदरिद्र् इ ईत् इति जाते सवर्णदीर्घे='अदरिद्रीत्' इति भवति ॥ लुङि सप्तमी विधा । ४. **लुङि वा** । लुङि दरिद्रातेराल्लोपो वा वक्तव्यः । इति आकारलोपाभावपक्षे **यमरमनमाता**(पृ० ११)मिति सक् इडागमश्च । लुङि चतुर्थी विधा । ५. आर्धधातुके णिचि परे आल्लोपे आदन्तत्वाभावात्पुक् न ।

[३७८] **चकासृ**=दीप्तौ । अकर्म० । सेट् । परस्मै० ॥

१. **प्र०** चकास्ति । चकास्तः । चकासति ॥ **म०** चकास्सि । **उ०** चकास्मि ॥ २. **प्र०** चकास्तु–चकास्तात् । चकास्ताम् । चकासतु ॥ **म०** चकाधि[1]–चकास्तात् । चकास्तम् ॥ **उ०** चकासानि ॥ ३. अचकाद्[2]–त्–अचकास्ताम् ॥ अचकासुः ॥ **म०** अचकाद्–त्–अचकाः[3] । अचकास्तम् । अचकास्त ॥ **उ०** अचकासम् ॥ ४. चकास्यात् । ५. **प्र०** चकासाञ्चकार–चकासाम्बभूव–चकासामास ॥ ६. चकासिता ॥ ७. चकासिष्यति ॥ ८. चकास्यात् । चकास्यास्ताम् ॥ ९. अचकासीत् ॥ १०. अचकास्यत् ॥

**भावे**—चकास्यते । ९. अचकासि ॥ **णिचि**–चकासयति–ते । **सनि**—चिचकासिषति । **कृत्सु**—चकासितव्यम् । चकासनीयम् । चकास्यम् । चकासितः । चकासन् । चकासती । चकासितुम् । चकासनम् । चकासित्वा । अभिचकास्य ॥

[३७९] **शासु**=अनुशिष्टौ । द्विकर्म० । सेट् । परस्मै० ॥

१. **प्र०** शास्ति । शिष्टः[4] । शासति ॥ **म०** शास्सि । शिष्ठः । शिष्ठ ॥ **उ०** शास्मि । शिष्वः । शिष्मः ॥ २. **प्र०** शास्तु–शिष्टात् । शिष्टाम् । शासतु ॥ **म०** शाधि[5]–शिष्टात् । शिष्टम् । शिष्ट ॥ **उ०**

१. **धि च** (पृ० १४) । इति सलोपः । २. **तिप्यनस्तेः** । पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । ३. **सिपिधातोरुर्वा** । पदान्तस्य धातोः सस्य रुः स्याद्वा । **खरवसानयोर्विसर्जनीयः** । ४. **शास इदङ् हलोः** । शास उपधाया इत् स्यात् अङि हलादौ विङति च । **शासिवसिघसीनां च** (३२०) । इति षत्वम् । ५. **शा हौ** । शास्तेः 'शा' इत्यादेशः स्याद्धौ परे । **ध्वि**· (२२६) ।

शासानि ॥ ३. अशात्–द् । अशिष्टाम् । अशासु ॥ म० अशात्–अशाद् । अशिष्टम् ॥ उ० अशासम् । अशिष्व ॥ ४. शिष्यात् । शिष्याताम् ॥ ५. शशास । शशासतुः । शशासुः ॥ ६. शासिता ॥ ७. शासिष्यति ॥ ८. शिष्यात् । शिष्यास्ताम् ॥ ९. प्र० अशिषत्[1] । अशिषताम् । अशिषन् ॥

**कर्मणि**—शिष्यते । ९. अशासि । **णिचि**—शासयति । **सनि**—शिशासिषति । **यङि**—शेशिष्यते । **यङ्लुकि**—शाशासीति–शाशास्ति ॥ **कृत्सु**—शासितव्यम् । शासनीयम् । शिष्यः । शिष्टः । शासत् । शासती । शासितुम् । शासनम् । शिष्ट्वा–शासित्वा । अनुशिष्य । आ–आशीर्वादप्रार्थने ; आत्मनेपदम्=आशास्ते । आशीः ।

[३८०] वश=कान्तौ । कान्तिरिच्छा । अकर्म० । सेट् । परस्मै० ॥

१. प्र० वष्टि[2] । उष्टः[3] । उशन्ति ॥ म० वक्षि । उष्टः । उष्ठ ॥ उ० वश्मि । उश्वः । उश्मः ॥ २. प्र० वष्टु–उष्टात् । उष्टाम् ॥ म० उड्ढि ॥ उ० वशानि ॥ ३. प्र० अवट् । औष्टाम् । औशन् ॥ म० अवट् । औष्टम् ॥ उ० अवशम् । औश्व ॥ ४. उश्यात् । उश्याताम् ॥ ५. प्र० उवाश । ऊशतुः ॥ म० उवशिथ ॥ उ० उवाश–उवश ॥ ६. वशिता ॥ ७. वशिष्यति ॥ ८. उश्यात् । उश्यास्ताम् ॥ ९. अवशीत्–अवाशीत् ॥ १०. अवशिष्यत् ॥

१. **सर्तिशास्त्यर्तिभ्यश्च** (पृ० १०, ङ्लइ् । २. व्रश्चेति षत्वम् । ३. **ग्रहिज्ये**—(३२१ ति सम्प्रसारणम् । ४. मुक्तिसाधनमुशन्ति यदेकं ज्ञानमेव तदभीप्सुरभीक्ष्णम् –इति **केरलकालिदासः** ।

**भावे**—उश्यते । ९. अवाशि ॥ **णिचि**—वाशयति-ते ॥ **सनि**—विवशिषति ॥ **यङि**—वावश्यते[1] ॥ **यङ्लुकि**—वावशीति-वावष्टि ॥ **कृत्सु**—वशितव्यम् । वशनीयम् । वाश्यम् । उशितः । उशन् । उशती । वशितुम् । वशनम् । वशित्वा[2] । समुश्य । वशः । वशा । गोवशा[3] । उशिक् । उशिजौ । उशना[4] ॥

इत्यदादयः ॥ २ ॥

१. **न वशः**। इति यङि सम्प्रसारणप्रतिषेधः । २. **न क्त्वा सेट्** । इत्यकित्त्वम् । ३ **पोटा युवती**त्यादिना समासः । वन्ध्या गौरित्यर्थः । ४ **वशेः कनसिः** । इति कनसिः । **ऋदुशनस्पुरुदंशोनेहसां च** । इत्यसम्बुद्धौ सावनङादेशः । उशना भार्गवः कविः—इत्यमरः ।

॥ श्रीः ॥

# बृहद्धातुरूपावल्याम् ।

## जुहोत्यादयः ॥ ३ ॥

[३८१] हु—दानादनयोः । आदाने चेत्येके । दानं च वैधेऽग्नौ हविषः प्रक्षेपः । सकर्म० । अनिट् । परस्मै० । उकारान्तः ॥

१. प्र० जुहोति[1] । जुहुतः[2] । जुह्वति[3] ॥ म० जुहोषि । जुहुथः । जुहुथ ॥ उ० जुहोमि । जुहुवः । जुहुमः ॥ २. प्र० जुहोतु–जुहुतात् । जुहुताम् । जुह्वतु ॥ जुहुधि[4]–जुहुतात् । जुहुतम् । जुहुत ॥ जुहवानि । जुहवाव । जुहवाम ॥ ३. प्र० अजुहोत् । अजुहुताम् । अजुहवुः[5] ॥ म० अजुहोः । अजुहुतम् । अजुहुत ॥ अजुहवम् । अजुहुव । अजुहुम ॥ ४. प्र० जुहुयात् । जुहुयाताम् ।

---

१. **जुहोत्यादिभ्यः श्लुः** । शपः श्लुः स्यात् । लोप इत्यर्थः । **श्लौ** । श्लौ परे धातोर्द्वे स्तः । हु हु इति जाते, । **कुहोश्चुः** (पृ० ७) इत्यभ्यासस्य जकारे जुहु+ति इति जाते, **सार्वधातुकार्धधातुकयोः** (पृ० ३) इति गुणे 'जुहोति' इति । २. जुहु+तः इति स्थिते **सार्वधातुकमपित्** (पृ० ४) इति ङित्त्वात् **क्ङिति च** (पृ० ४) इति गुणाभावः । ३. जुहु+झि इति स्थिते **अदभ्यस्तात्** (पृ० ३७५) इति अदादेशे जुहु अति इति जाते **हुश्नुवोः सार्वधातुके** (पृ० २८५) इति यण् । ४. **हुझल्भ्यो हेर्धिः** (३२६) । ५. **सिजभ्यस्तविदिभ्यश्च** (पृ० १०) इति झेर्जुस् । **जुसि च** (३७६) इति गुणः । अवादेशः ।

॥ प्र० जुहुयाः ॥ उ० जुहुयाम् ॥ [१]५. प्र० जुहवाञ्चकार—जुहवाम्बभूव—जुहवामास ॥ पक्षे - प्र० जुहाव[२]। जुहुवतुः[३]। जुहुवुः ॥ प्र० जुहविथ[४]--जुहोथ जुहुवथुः। जुहुव ॥ उ० जुहाव--जुहव। जुहुविव। जुहुविम ॥ ६. प्र० होता। म० होतासि ॥ उ० होतास्मि ॥ ७. होष्यति ॥ ८. हूयात्। हूयास्ताम्। हूयासुः। ९. प्र० अहौषीत्[५]। अहौष्टाम्। अहौषुः॥ म० अहौषीः। अहौष्टम्। अहौष्ट ॥ उ० अहौषम्। अहौष्व। अहौष्म ॥ १०. अहोष्यत् ॥

**कर्मणि**—हूयते। ५. जुहवाञ्चक्रे। ९. अहावि। अहाविषाताम्–अहोषाताम् ॥ **णिचि**—हावयति-ते। ९. अजूहवत्। **सनि**—जुहूषति। **यङि**--जोहूयते। **यङ्लुकि** जोहोति। **कृत्सु**—होतव्यम्। हवनीयम्। हव्यम्–हाव्यम्। हुतः। जुह्वत्। जुह्वतौ। जुह्वतः। जुह्वती। होष्यन्। होतुम्। हवनम्। हुत्वा। आहुत्य[६]। जुहूः। होमः। होत्रम्। हविः। होता। हविष्यम्। "अग्निषु हूयमानेष्विति" प्रयोगदर्शनात्, अयं प्रीणनार्थोऽपि। हूयमानेषु-तर्प्यमाणेषु-इत्यर्थः।

[३८२] **ञिभी**=भये। अकर्म०। अनिट्। परस्मै०। ईकारान्तः।

---

१. **भीह्रीभृहुवां श्लुवच्च**। एतेभ्यो लिट्याम् स्यात् आमि श्लाविव कार्यं च। पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः (भट्टि: ४। ५)। २. **आमभावपक्षे**—जुहु+णल इति स्थिते **अचो ञ्णिति** (पृ० २०) इति वृद्धौ आवादेशे च रूपम्। ३. **अचि श्नुधातु**--इति उवङ्। ४. थलि भारद्वाजनियमाद्विकल्पः। ५. षष्ठो लुङ। शेषाण्यहौषीत्सुतसम्पदे च (भट्टि: १। १२)। ६. **ह्रस्वस्य पिति कृति तुक्** (३००)।

१. प्र० बिभेति । बिभितः–बिभीतः बिभ्यति । म० बिभेषि । बिभिथः बिभीथः । बिभिथ–बिभीथ । उ० बिभेमि । बिभिवः–बिभीवः । बिभिमः बिभीमः । २. प्र० बिभेतु–बिभितात्–बिभीतात् । बिभिताम्–बिभीताम् । बिभ्यतु । म० बिभिहि–बिभीहि–बिभीतात्–बिभितात् । बिभितम्–बिभीतम् । बिभित–बिभीत । उ० बिभयानि । बिभयाव । बिभयाम । ३. प्र० अबिभेत् । अबिभिताम्–अबिभीताम् । अबिभयुः । म० अबिभेः । अबिभितम्–अबिभीतम् । अबिभित–अबिभीत । उ० अबिभयम् । अबिभिव–अबिभीव । अबिभिम–अबिभीम । ४. बिभियात्–बिभीयात् । बिभियाताम्–बिभीयाताम् । बिभियुः–बिभीयुः । ५. बिभयाञ्चकार । पक्षे—प्र० बिभाय । बिभ्यतुः । बिभ्युः ॥ म० बिभयिथ–बिभेथ । बिभ्यथुः । बिभ्य ॥ उ० बिभाय–बिभय । बिभ्यिव । बिभ्यिम ॥ ६. भेता ॥ ७. भेष्यति ॥ ८. भीयात् । ९. प्र० अभैषीत् । अभैष्टाम् ॥ म० अभैषीः ॥ उ० अभैषम् ॥ १०. अभेष्यत् ॥

भावे—भीयते । ९. अभायि ॥ णिचि—भापयते । ९. अबीभपत । पक्षे—भीषयते । ९. अबीभषत । पक्षे—भाययति–ते

१. **भियोऽन्यतरस्याम्** । इकारः स्याद्धलादौ क्ङिति सार्वधातुके । २. एरनेकाच इति यण् । ३. **बिभेतेर्हेतुभये** । बिभेतेरेच आत्वं वा स्यात्प्रयोजकादेव भयं चेत् । भा+य+ति इति जाते **अर्तिह्री**–(२६४) इति पुक् । **भीस्म्योर्हेतुभये** (२८७ इत्यात्मनेपदम् । मुण्डो भापयते । ४ आत्वाभावे **भियो हेतुभये षुक्** । ईकारान्तस्य भियः षुक् स्याण्णौ हेतुभये । ५. **अहेतुभये तु** – भी+अय इति स्थिते **अचो ञ्णिति**– (पृ० २०) इति वृद्धौ आयादेशे च रूपम् । कुञ्चिकयैनं भाययति—ते ।

९. अबीभयत्-त ॥ **सनि**—बिभीषति ॥ **यङि**—बेभीयते ॥ **यङ्लुकि**—बेभयीति-बेभेति । **कृत्सु**—भेतव्यम् । भयनीयम् । भेयम् । भीतः । बिभ्यत् । बिभ्यतौ । बिभ्यती । भेष्यन् । भेतुम् । भयनम् । भीत्वा । विभीय । भीरुः । भीरुकः । भीलुकः । भीः । भयानकम् । भीष्मः । भीमः । भीषणः । भयम् ॥

[३८३] **ह्री**=लज्जायाम् । अकर्म० । अनिट् । परस्मै० । ईकारान्तः ॥

१. **प्र०** जिह्रेति । जिह्रीतः । जिह्रियति[1] ॥ **म०** जिह्रेषि । जिह्रीथः । जिह्रीथ । **उ०** जिह्रेमि । जिह्रीवः । जिह्रीमः ॥ २. **प्र०** जिह्रेतु-जिह्रीतात् । जिह्रीताम् । जिह्रियतु ॥ **म०** जिह्रीहि-जिह्रीतात् । जिह्रीतम् । जिह्रीत ॥ **उ०** जिह्रयाणि । जिह्रयाव । जिह्रयाम ॥ ३. **प्र०** अजिह्रेत् । अजिह्रीताम् । अजिह्रयुः ॥ **म०** अजिह्रेः । अजिह्रीतम् । अजिह्रीत ॥ **उ०** अजिह्रयम् । अजिह्रीव । अजिह्रीम ॥ ४. जिह्रीयात् । जिह्रीयाताम् । जिह्रीयुः ॥ ५. जिह्रयाञ्चकार[2] ॥ **पक्षे**— **प्र०** जिह्राय । जिह्रियतुः । जिह्रियुः ॥ **म०** जिह्रयिथ-जिह्रेथ । जिह्रियथुः । जिह्रिय ॥ **उ०** जिह्राय-जिह्रय । जिह्रियिव । जिह्रियिम ॥ ६. ह्रेता ॥ ७. ह्रेष्यति ॥ ८. ह्रीयात् । ह्रीयास्ताम् । ह्रीयासुः ॥ ९. अह्रैषीत् । अह्रैष्टाम् ॥ १०. अह्रेष्यत् ॥

**भावे**—ह्रीयते । ९. अह्रायि ॥ **णिचि**—ह्रेपयति-ते[3] । **सनि**—जिह्रीषति । **यङि**—जेह्रीयते । **यङ्लुकि**—जेह्रयीति-

१. **अचिश्नुधातु**भ्रुवामिति इयङ् । २. **भीह्रीभृहुवां श्लुवच्च** (६८१) न (जिह्रयाञ्चकारासौ भट्टिः ६ । २) । ३. **अर्तिह्री**—(३१४) इति पुक् ।

जेह्रेति। कृत्सु—ह्रेतव्यम्। ह्रयणीयम्। ह्रेयम्। ह्रीणः- ह्रीतः। जिह्रीयन्। जिह्रीयतौ। जिह्रीयती। ह्रेतुम्। ह्रीत्वा। विजिह्राय। ह्रीः॥

[३८४] पॄ=पालनपूरणयोः। सकर्म०। सेट्। परस्मै०। ॠकारान्तः॥

१. प्र० पिपर्ति। पिपूर्तः। पिपुरति॥ म० पिपर्षि। पिपूर्थः। पिपूर्थ॥ उ० पिपर्मि। पिपूर्वः। पिपूर्मः॥ २. प्र० पिपर्तु—पिपूर्तात्। पिपूर्ताम्। पिपुरतु॥ म० पिपूर्हि—पिपूर्तात्। पिपूर्तम्। पिपूर्त॥ उ० पिपराणि॥ ३. प्र० अपिपः। अपिपूर्ताम्। अपिपरुः॥ म० अपिपः। अपिपूर्तम्। अपिपूर्त॥ उ० अपिपरम्। अपिपूर्व। अपिपूर्म॥ ४. पिपूर्यात्। पिपूर्याताम्॥ ५. प्र० पपार। पप्रतुः—पपरतुः। पप्रुः—पपरुः॥ म० पपरिथ। पप्रथुः—पपरथुः। पप्र—पपर॥ उ० पपार—पपर। पप्रिव—पपरिव। पप्रिम—पपरिम॥ ६. परिता—परीता॥ ७. परिष्यति—परीष्यति॥ ८. पूर्यात्। पूर्यास्ताम्॥ ९. अपारीत्। अपारिष्टाम्॥

१. नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् (२७३)। २. अर्तिपिपर्त्योश्च। अभ्यासस्येकारान्तादेशः स्यात् श्लौ। ३. उदोष्ठ्यपूर्वस्य। अङ्गावयवौष्ठ्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उत्स्यात्। इति उत्त्वम्। रपरत्वम्। **हलि चे**ति दीर्घः। 'पिपर्ति' इत्यादि गुणवृद्धिस्थले परत्वात्तावेव भवतः। ४. पॄ+णल्=द्वित्वं, उरदत्त्वं, वृद्धिः। ५ पपॄ+अतुस् इति स्थिते **शॄदॄप्रां ह्रस्वो वा**। एषां किति लिटि ह्रस्वो वा स्यात् इति ह्रस्वपक्षे पपृ अतुस् इति स्थिते **इको यणची**ति यणि पप्र् अतुस्=पप्रतु.। **ह्रस्वाभावपक्षे**—पपॄ+अतुस् इति स्थिते **सार्वधातुके**(पृ० ३)ति गुणे रपरत्वे=पपरतुः। ६. पॄ+इता इति स्थिते **वॄतो वा** (२९३) इति वा दीर्घः। ७. यासुटः कित्वान्न गुणः। आशीर्लिङ आर्धधातुकत्वात् **श्लौ** (३८१) इति द्वित्वं न। ८. सप्तमो लुङ्।

**कर्मणि** —पूर्यते । १. अपारि । **णिचि** —पारयति–ते । **सनि**—पिपूर्षति । **यङि**—पोपूर्यते । **यङ्लुकि** —पापर्ति–पापरीति । **कृत्सु** —परितव्यम्–परीतव्यम् । परणीयम् । पार्यम् । पूर्तम्² । पिपुरत् । पिपुरतौ । पिपुरती । परितुम्–परीतुम् । परणम् । पूर्त्वा । आपूर्य । पूर्णम्³ । पूः । पुरौ । पुरः । पुरुष । ह्रस्वान्तोऽप्ययम्–पिपर्ति । पिपृतः । पिप्रति । पिपर्षि । पिपर्मि । पिपर्तु । पर्ता–प्रियात्–अपार्षीदित्यादि ।

[३८५] **डुभृञ्=धारणपोषणयोः** । सकर्म० । अनिट् । उभयपदी । ऋकारान्तः ॥

**परस्मैपदी**—१. **प्र०** बिभर्ति⁴ । बिभृतः । बिभ्रति ॥ **म०** बिभर्षि । बिभृथः । बिभृथ ॥ **उ०** बिभर्मि । बिभृवः । बिभृमः ॥ २. **प्र०** बिभर्तु–बिभृतात् । बिभृताम् । बिभ्रतु ॥ **म०** बिभृहि–बिभृतात् । बिभृतम् । बिभृत ॥ **उ०** बिभराणि । बिभराव । बिभराम ॥ ३. **प्र०** अबिभः⁵ । अबिभृताम् । अबिभरुः ॥ **म०** अबिभः । अबिभृतम् । अबिभृत ॥ **उ०** अबिभरम् । अबिभृव । अबिभृम ॥ ४. **प्र०** बिभृयात् । बिभृयाताम् । बिभृयुः ॥ ५. **प्र०** बभार । बभ्रतुः । बभ्रुः ॥ **म०** बभर्थ । बभ्रथुः । बभ्र ॥ **उ०** बभार–बभर । बभृव । बभृम ॥ **पक्षे** —बिभराञ्चकार⁶–बिभरामास–

१. **न ध्याख्यापॄमूर्च्छिमदाम्** (८३) इति निष्ठानत्वनिषेधः । २ **श्र्युकः किति** (२७८) इत्यनिट्त्वम् । ३. **ध्यापॄवसि** इत्यादिना उणादिर्नप्रत्ययः । ४. **भृञामित्** । भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । ५. अबिभृ+त् इति स्थिते गुणे रत्वे **हल्ङ्याबि**ति तकारलोपे रेफस्य विसर्गः । ६. **भीह्री** (३८१) इति आम् श्लुवद्भावादित्वम् ।

बिभराम्बभूव ॥ ६. प्र० भर्ता ॥ म० भर्तासि ॥ उ० भर्तास्मि ॥ ७. भरिष्यति ॥ ८. ध्रियात्[1] । ध्रियास्ताम् ॥ ९. अभार्षीत्[2] । अभार्ष्टाम् ॥ १०. अभरिष्यत् ॥

**आत्मनेपदे**—१. प्र० बिभृते । बिभ्राते । बिभ्रते ॥ म० बिभृषे । बिभ्राथे । बिभृध्वे ॥ उ० बिभ्रे । बिभृवहे । बिभृमहे ॥ २. प्र० बिभृताम् । बिभ्राताम् । बिभ्रताम् ॥ म० बिभृष्व । बिभ्राथाम् । बिभृध्वम् ॥ उ० बिभरै । बिभरावहै । बिभरामहै ॥ ३. प्र० अबिभृत । अबिभ्राताम् । अबिभ्रत ॥ म० अबिभृथाः । अबिभ्राथाम् । अबिभृध्वम् ॥ उ० अबिभ्रि । अबिभृवहि । अबिभृमहि ॥ ४. बिभ्रीत । बिभ्रीयाताम् । बिभ्रीरन् ॥ ५. प्र० बभ्रे । बभ्राते । बभ्रिरे ॥ म० बभृषे । बभ्राथे । बभृढ्वे ॥ उ० बभ्रे । बभृवहे । बभृमहे ॥ **पक्षे**—बिभराञ्चक्रे-बिभरामास । बिभराम्बभूव ॥ ६. भर्ता ॥ म० भर्तासे ॥ ७. भरिष्यते ॥ ८. भृषीष्ट । भृषीयास्ताम् । भृषीरन् ॥ ९. अभृत । अभृषाताम् ॥ १०. अभरिष्यत ॥

**कर्मणि**—ध्रियते । ५. बभ्रे । ९. अभारि । **णिचि**—भारयति । ९. अबीभरत् । **सनि**—बुभूर्षति[3]-ते । **यङि**—बेभ्रीयते । **यङ्लुकि**—बर्भरीति-बरीभरीति-बर्भर्ति । इत्यादि । **कृत्सु**—भर्तव्यः । भरणीयः । भार्यः । भार्या । भृतः । बिभ्रत् बिभ्रतौ बिभ्रतः । बिभ्रती । बिभ्राणः । भर्तुम् । भरणम् । भृत्वा । संभृत्य । भृत्रिमम् । भरथुः ॥

---

१. **रिङ्शयग्लिङ्क्षु** (२६०) इति रिङ् । २. लुङि षष्ठी विधा । ३. **इको झल्** । इति कित्त्वात् **अज्झने**—(१६४ ति दीर्घः । **उदोष्ठ्यपूर्वस्य**—(३८४) त्युत्वम् ।

[३८६] **माङ्**—माने शब्दे च सकर्म० अनिट् आत्मने०। आकारान्तः॥

१. **प्र०** मिमीते[1]। मिमाते। मिमते[2]॥ **म०** मिमीषे। मिमाथे। मिमीध्वे॥ **उ०** मिमे। मिमीवहे। मिमीमहे॥ २. **प्र०** मिमीताम्। मिमाताम्। मिमताम्॥ **म०** मिमीष्व। मिमाथाम्। मिमीध्वम्॥ **उ०** मिमै। मिमावहै। मिमामहै॥ ३. **प्र०** अमिमीत। अमिमाताम्। अमिमत॥ **म०** अमिमीथाः। अमिमाथाम्। अमिमीध्वम्॥ **उ०** अमिमि। अमिमीवहि। अमिमीमहि॥ ४. मिमीत। मिमीयाताम्। मिमीरन्॥ ५. **प्र०** ममे। ममाते। ममिरे॥ **म०** ममिषे। ममाथे। ममिध्वे॥ **उ०** ममे। ममिवहे। ममिमहे॥ ६. माता॥ **म०** मातासे॥ ७. मास्यते॥ ८. मासीष्ट॥ ९. अमास्त[3] अमासाताम्॥ निर्मिमीते=रचयति॥

**कर्मणि**—मीयते। ९. अमायि। **णिचि**—मापयति-ते। **सनि**—मित्सते। **यङि**—मेमीयते। **यङ्लुकि**—मामाति-मामेति। **कृत्सु**—मातव्यम्। मानीयम्। मेयम्। पाय्यम्। मितः। मिमानः। मातुम्। मानम्। मित्वा। प्रमाय। माया। मायी। मायिकः। मायावी। प्रमा। मितिः। वातप्रमीः॥

१. **भृञामित्** (३८५) इत्यभ्यासस्य इत्वम्। **ई हल्यघोः**। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य। इति ईत्। २. **श्नाभ्यस्तयोरातः** (३७७)। इति अल्लोपः। ३. लुङि दशमी विधा। ४. **अर्तिह्री** (१६४)ति पुक्। ५. **सनि मीमा** (१६४) इत्यच इस्। ६ **घुमास्थे**—(२६४)ति ईत्वम्। द्विर्वचनेऽभ्यासस्य गुणः। ७. मीयतेऽनेनेति पाय्यम्। **पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु**। मानाद्यर्थेषु पाय्यादयो निपात्यन्ते। ८. **न ल्यपि**। इति ईत्वनिषेधः।

[३८७] **ओहाङ्**=गतौ । सकर्म० । अनिट् । आत्मने० । आकारान्तः । ओदित् ङिच्च ॥

१. **प्र०** जिहीते । जिहाते । जिहते ॥ **म०** जिहीषे । जिहाथे । जिहीध्वे ॥ **उ०** जिहे । जिहीवहे । जिहीमहे ॥ **२. प्र०** जिहीताम् । जिहाताम् । जिहताम् ॥ **म०** जिहीष्व । जिहाथाम् । जिहीध्वम् ॥ **उ०** जिहै । जिहावहै । जिहामहै ॥ **३. प्र०** अजिहीत । अजिहाताम् । अजिहत ॥ **म०** अजिहीथाः । अजिहाथाम् । अजिहीध्वम् ॥ **उ०** अजिहि । अजिहीवहि । अजिहीमहि ॥ ४. जिहीत । जिहीयाताम् । जिहीरन् ॥ ५. **प्र०** जहे । जहाते । जहिरे ॥ **म०** जहिषे । जहाथे । जहिध्वे ॥ **उ०** जहे । जहिवहे । जहिमहे ॥ ६. हाता ॥ ७. हास्यते ॥ ८. हासीष्ट । हासीयास्ताम् ॥ **म०** ह्वम् ॥ ९. अहास्त । अहासाताम् ॥ १०. अहास्यत ॥

**कर्मणि**—हीयते । ९. अहायि । **णिचि**—हापयति-ते । ९. अजीहपत् । **सनि**—जिहासते । **यङि**—जाहायते । **कृत्सु**—हातव्यम् । हानीयम् । हेयम् । हानम्[१] । जिहानः । हातुम् । हात्वा । प्रहाय । हायनः=संवत्सरः । हानिः । उद्=उदये । उज्जिहीते ।

[३८८] **ओहाक्**=त्यागे । सकर्म० । अनिट् । परस्मै० । आकारान्तः । ओदित् ॥

१. **प्र.** जहाति । जहितः[२]-जहीतः । जहति ॥ **म०** जहासि । जहिथः-जहीथः । जहिथ-जहीथ ॥ **उ०** जहामि । जहिवः-

---

१. **ओदितश्च** । इति निष्ठानत्वम् । २. **जहातेश्च** । इत्स्याद्वा हलादौ क्ङिति सार्वधातुके । पक्षे ईत्वम् ।

जहीवः । जहिमः—जहीमः ॥ प्र० जहातु—जहितात्—जहीतात् । जहिताम्—जहीताम् । जहतु ॥ म० जहाहि[1]—जहिहि—जहीहि—जहितात् । जहितम्—जहीतम् । जहित—जहीत ॥ उ० जहानि । जहाव । जहाम ॥ ३. प्र० अजहात् । अजहिताम्—अजहीताम् । अजहुः[2] ॥ म० अजहाः अजहितम्—अजहीतम् । अजहित—अजहीत ॥ उ० अजहाम् । अजहिव—अजहीव । अजहिम—अजहीम ॥ ४. जह्यात्[3] । जह्याताम् जह्युः ॥ ५. प्र० जहौ । जहतुः । म० जहिथ[4]—जहाथ । जहथुः । जह ॥ उ० जहौ । जहिव[5] । जहिम ॥ ६. हाता ॥ म० हातासि ॥ ७. हास्यति ॥ ८. हेयात्[6] । हेयास्ताम् ॥ ९. अहासीत्[7] । अहासिष्टाम् ॥ १०. अहास्यत् ।

**कर्मणि**-हीयते । ५. जहे । ९. अहायि । **णिचि**—हापयति–ते । **सनि**—जिहासति । **यङि**—जेहीयते । **यङ्लुकि**—जाहीति—जाहेति ॥ **कृत्सु**—हातव्यः । हानीयः । हेयः । हीनः । जहत् जहतौ जहतः । जहती । हातुम् । हानम् । हित्वा[8] । प्रहाय । हानिः ।

[३८९] डु **दाञ्**=दाने । सकर्म० । अनिट् । उभयपदी० । आकारान्तः । ड्वित् । ञित् ॥

1. **आ च हौ** । जहातेर्हौ परे आ स्याच्चादिदीतौ । २. **सिजभ्यस्त** (११)ति झेर्जुस् । ३. **लोपो यि** । जहातेरातो लोपः स्याद्यादौ सार्वधातुके । ४. भारद्वाजनियमादिड्विकल्पः । ५ क्रादिनियमादिट् । ६. **एर्लिङि** (२६४) । ७. लुङि चतुर्थी विधा । ८. **जहातेश्च क्त्वि** । इति हिभावः ।

**परस्मैपदे**---१. **प्र०** ददाति । दत्तः[1] । ददति ॥ **म०** ददासि । दत्थः । दत्थ ॥ **उ०** ददामि । दद्वः । दद्मः ॥ **२. प्र०** ददातु-दत्तात् । दत्ताम् । ददतु ॥ **म०** देहि[2]-दत्तात् । दत्तम् । दत्त ॥ **उ०** ददानि । ददाव । ददाम ॥ **३. प्र०** अददात् । अदत्ताम् । अददुः ॥ **म०** अददाः । अदत्तम् । अदत्त ॥ **उ०** अददाम् । अदद्व । अदद्म ॥ ४. दद्यात् । दद्याताम् । दद्युः ॥ **५. प्र०** ददौ । ददतुः । ददुः ॥ **म०** ददिथ-ददाथ । ददथुः । दद ॥ **उ०** ददौ । ददिव । ददिम ॥ ६. दाता ॥ ७. दास्यति ॥ ८. देयात्[3] । देयास्ताम् ॥ ९. अदात्[4] । अदाताम् । अदुः ॥ १०. अदास्यत् ॥ प्रणिददाति ।

**आत्मनेपदे**--१. **प्र०** दत्ते । ददाते । ददते ॥ **म०** दत्से । ददाथे । दद्ध्वे ॥ **उ०** ददे । दद्वहे । दद्महे ॥ २. **प्र०** दत्ताम् । ददाताम् । ददताम् ॥ **म०** दत्स्व । ददाथाम् । दद्ध्वम् ॥ **उ०** ददै । ददावहै । ददामहै ॥ **३. प्र०** अदत्त । अददाताम् । अददत ॥ **म०** अदत्थाः । अददाथाम् । अदद्ध्वम् ॥ **उ०** अददि । अदद्वहि । अदद्महि ॥ ४. ददीत । ददीयाताम् । ददीरन् ॥ ५. **प्र०** ददे । ददाते । ददिरे ॥ **म०** ददिषे । ददाथे । ददिध्वे ॥ **उ०** ददे । ददिवहे । ददिमहे ॥ ६. दाता ॥ दातासे ॥ ७.

१. **श्नाभ्यस्तयोरातः** । (३७७) इत्याकारलोपः । **ई हल्यघोः** इत्यत्र अघोरिति पर्युदासात् ईत्वं न । २. **घ्वसोरेद्धावभ्यासलोपश्च** (३६९) इत्येत्वाभ्यासलोपौ । ३. **एर्लिङि** (२६४) । ४. **गातिस्था**--(पृ० १०) लुङि प्रथमा विधा ।

दास्यते ॥ ८. दासीष्ट । दासीयास्ताम् ॥ ९. अदित[1] । अदिषाताम् । अदिषत ॥ १०. अदास्यत ॥

**कर्मणि**—दीयते । ५. ददे । ९. अदायि । **णिचि**—दापयति-ते । ९. अदीदपत्-त ॥ **सनि**—दित्सति-ते । **यङि**—देदीयते । **यङ्लुकि**—दादेति-दादाति । **कृत्सु**—दातव्यम् । दानीयम् । देयम् । दानीयो विप्रः । दत्तः । प्रत्तः । अवत्तः । ददत् ददतौ ददतः । ददती । ददानः । दातुम् । दानम् । दत्त्वा । प्रदाय । दायः । दायादः । आदिः । आद्यः । दत्रिमम् । आङ्पूर्वः आत्मनेपदी-आदत्ते[2], विद्याम् । आददाते । इत्यादि । अन्यत्र मुखं व्याददाति ।

[३९०] डु धाञ्=धारणपोषणयोः । सकर्म० । अनिट् । उभय० । आकारान्तः । ड्वित् । ञिच्च ॥

१. **प्र०** दधाति । धत्तः[3] । दधति ॥ **म०** दधासि । धत्थः । धत्थ ॥ **उ०** दधामि । दध्वः । दध्मः ॥ २. **प्र०** दधातु-धत्तात् । धत्ताम् । दधतु ॥ **म०** धेहि[4] । धत्तम् । धत्त ॥ **उ०** दधानि ।

१. अदा (सिच्) स् त इति स्थिते, **स्थाघ्वोरिच्च** । अनयोरिदादेशः स्यात् सिच्च कित्स्यात् । इति इदादेशे अदि स् त इति जाते सिचः कित्त्वादिकारस्य न गुणः । **ह्रस्वादङ्गात्** । (२६०) इति सिचो लोपे, अदित इति रूपम् । लुङि द्वादशी विधा । २ "**आङो दोऽनास्यविहरणे**" इत्यकर्त्रभिप्राये तङ् । ३. दधा+तस् इति स्थिते । **दधस्तथोश्च** । द्विरुक्तस्य झषन्तस्य धाधातोर्बशो भष् स्यात्तथयोः परयोः स्ध्वोश्च परतः । धधा तस्=**श्नाभ्यस्तयो**—(२७७) रिति आल्लोपः । धध् तस्=**खरि चे**ति चर्त्वम् । ४ **घ्वसोरेद्धावभ्यासलोपश्च** । (३६९) ।

दधाव । दधाम ॥ ३. प्र० अदधात् । अधत्ताम् । अदधुः ॥ म० अदधाः । अधत्तम् । अधत्त ॥ उ० अदधाम् । अदध्व । अदध्म ॥ ४. दध्यात् । दध्याताम् । दध्युः ॥ ५. प्र० दधौ इत्यादि ददौ इत्यादिवत् ॥ ६. धाता ॥ ७. धास्यति ॥ ८. धेयात् । धेयास्ताम् ॥ ९. अधात्[1] । अधाताम् । अधुः ॥ १०. अधास्यत् ॥

**आत्मनेपदे**—१. प्र० धत्ते । दधाते । दधते ॥ म० धत्से[2] । दधाथे । धद्ध्वे[3] ॥ उ० दधे । दध्वहे । दध्महे ॥ २. प्र० धत्ताम् । दधाताम् । दधताम् ॥ म० धत्स्व । दधाथाम् । धद्ध्वम् ॥ उ० दधै । दधावहै । दधामहै ॥ ३. प्र० अधत्त । अदधाताम् । अदधत ॥ म० अधत्थाः । अदधाथाम् । अदद्ध्वम् ॥ उ० अदधि । अदध्वहि । अदध्महि ॥ ४. दधीत । दधीयाताम् । दधीरन् ॥ ५. दधे इत्यादि ददे इत्यादि वत् ॥ ६. धाता ॥ ७. धास्यते ॥ ८. धासीष्ट । धासीयास्ताम् । धासीरन् ॥ ९. अधित[4] । अधिषाताम् ॥ १०. अधास्यत ॥

कर्मादि सर्वं 'ददाति' (३८९) वत् । **कृत्सु**—विशेषः। हितः[5] । निहितवान् । हित्वा । निधाय । विधिः । उदधिः । हित्रिमम् । अन्तर्धा । श्रद्धा । श्रद्धालुः । धाम । धनाया । अपिदधाति-पिदधाति । वष्टि भागुरिरल्लोपमिति पक्षेऽकारलोपः । अन्तः-अन्तर्धानम् । अन्त-

---

१. **गातिस्थेति** (धृ० १०) सिचो लुक् । लुङि प्रथमा विधा । २. सकारपरकत्वाद्भष् । ३. ध्वशब्दपरकत्वाद्भष् । ४. **स्थाघ्वोरिच्च** । अनयोरिदादेशः स्यात्सिच्च कित्स्यात् । इति इत्वे, (परस्मैपदेषु नेदं प्रवर्तते) । **ह्रस्वादङ्गात्** । (२६०) इति सिचो लुक् । लुङि दशमी विधा । ५. **दधातेर्हिः** । तादौ किति ।

र्दधाति। तिरस्–तिरोधाने–"अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे" इति कालिदासः। श्रत्–श्रद्धायाम्। श्रद्धा। श्रद्दधाति। सम्–सन्धाने=सन्दधाति। अनु+सम्=अनुसन्धाने=अनुसन्दधाति। वि–विधाने=विदधाति। नि–निधाने=निदधाति। अभि–अभिधाने=अभिदधाति। परि–परिधाने=परिदधाति। आ–आधाने=आदधाति। (प्र+नि) प्रणिधाने=प्रणिदधाति। (सं+नि) सन्निधाने=सन्निदधाति। (उप+आ) उपाधौ=उपादधाति। (वि+अव) व्यवधाने=व्यवदधाति। अव=अवधाने=अवदधाति। उप=उपदधाने=उपदधाति। (सं+आ) समाधाने=समादधाति। (अभि+सं) अभिसन्धौ=अभिसन्दधाति। (प्रति+वि) प्रतिविधाने=प्रतिविदधाति। (प्रति+नि) प्रतिनिधौ=प्रतिनिदधाति। इत्यादि।

[३९१] **णिजिर्**=शौचपोषणयोः। सकर्म०। अनिट्। उभय०। इरित्॥

**परस्मैपदे**—१. प्र० नेनेक्ति[1]। नेनिक्तः। नेनिजति॥ म० नेनेक्षि। नेनिक्थ। नेनिक्थ॥ उ० नेनेज्मि। नेनिज्वः। नेनिज्मः॥ २. प्र० नेनेक्तु–नेनिक्तात्। नेनिक्ताम्। नेनिजतु॥ म० नेनिग्धि[2]–नेनिक्तात्। नेनिक्तम्। नेनिक्त॥ नेनिजानि[3]। नेनिजाव। नेनिजाम॥ ३. प्र० अनेनेक्[4]। अनेनिक्ताम्। अनेनिजुः॥ म० अनेनेक्। अनेनिक्तम्। अनेनिक्त॥ उ० अनेनिजम्। अनेनिज्व। अनेनिज्म॥ ४. नेनिज्यात्। नेनिज्याताम्। नेनिज्युः॥ ५. निनेज। निनिजतुः।

१ **निजां त्रयाणां गुणः श्लौ**। णिजिर् विजिर् विष्लृ एषामभ्यासस्य गुणः स्याच्छलौ। निनिज्+ति=नेनिज् ति इति स्थिते, **पुगन्तलघूपधस्य** (पृ० ३) इति गुणे कुत्वे=नेनेक्ति। २. **हुझल्भ्यो हेर्धिः** (३२६)। ३. **नाभ्यस्तस्याचि पिति सार्वधातुके**। लघूपधगुणो न स्यात्। ४. अनेनेज्+त् इति स्थिते **हल्ङ्याब्**इति तलोपः। कुत्वम्।

निनिजुः ॥ म० निनेजिथ । निनिजथुः । निनिज ॥ उ० निनेज । निनिजिव । निनिजिम ॥ ६. नेक्ता ॥ नेक्तासि ॥ ७. नेक्ष्यति ॥ ८. निज्यात् । निज्यास्ताम् । निज्यासुः ॥ ९. अनिजत्[1] । अनिजताम् । अनिजन् ॥ पक्षे—अनैक्षीत्[2] । अनैक्ताम् । अनैक्षुः ॥ १०. अनेक्ष्यत् ॥

**आत्मनेपदे**—१. प्र० नेनिक्ते । नेनिजाते । नेनिजते ॥ म० नेनिक्षे । नेनिजाथे । नेनिग्ध्वे ॥ उ० नेनिजे । नेनिज्वहे । नेनिज्महे ॥ २. प्र० नेनिक्ताम् । नेनिजाताम् । नेनिजताम् ॥ म० नेनिक्ष्व । नेनिजाथाम् । नेनिग्ध्वम् ॥ उ० नेनिजै । नेनिजावहै । नेनिजामहै ॥ ३. प्र० अनेनिक्त । अनेनिजाताम् । अनेनिजत ॥ म० अनेनिक्थाः । अनेनिजाथाम् । अनेनिग्ध्वम् ॥ उ० अनेनिजि । अनेनिज्वहि । अनेनिज्महि ॥ ४. नेनिजीत । नेनिजीयाताम् । ५. प्र० निनिजे । निनिजाते । निनिजिरे ॥ म० निनिजिषे ॥ उ० निनिजे । निनजिवहे ॥ ६. नेक्ता ॥ नेक्तासे ॥ ७. नेक्ष्यते ॥ ८. निक्षीष्ट । निक्षीयास्ताम् ॥ ९. अनिक्त । अनिक्षाताम् । अनिक्षत ॥ १०. अनेक्ष्यत ॥ प्रणेनेक्ति ॥

**कर्मणि**—निज्यते । ३. अनिज्यत ॥ **णिचि**—नेजयति-ते । **सनि**—निनिक्षति-ते ॥ **यङि**—नेनिज्यते । **यङ्लुकि**—नेनिजीति-नेनेक्ति ॥ **कृत्सु**—नेक्तव्यम् । नेजनीयम् । नेज्यम् । निक्तः । निर्णिक्तः । नेनिजत् नेनिजतौ नेनिजतः । नेनिजती । नेनिजानः । नेक्तुम् । नेजनम् । निक्त्वा । निर्णिज्य । निर्णेजकः=रजकः ॥

[३९२] **विजिर्**=पृथग्भावे । सकर्म० । अनिट् । उभय० । इरित् ॥

**परस्मैपदे**—१. प्र० वेवेक्ति । वेविक्तः । वेविजति ॥

**आत्मनेपदे**—१. प्र० वेविष्टे । वेविषाते । वेविषते ॥ इत्यादि सर्वं **'नेनेक्ति'** (३९१) वत् ॥

[३९३] **विष्लृ**=व्याप्तौ । सकर्म० । अनिट् । उभय० । ऌदित् ॥

---

१ इरित्वादङ् वा । द्वितीयो लुङ् । २ लुङि षष्ठी विधा ।

**परस्मै**— १. **प्र०** वेवेष्टि। वेविष्टः। वेविषति ॥ **म०** वेवेक्षि। वेविष्ठः। वेविष्ठ ॥ **उ०** वेवेष्मि। वेविष्वः। वेविष्मः ॥ २. **प्र०** वेवेष्टु-वेविष्टात्। वेविष्टाम्। वेविषतु ॥ **म०** वेविड्ढि-वेविष्टात्। वेविष्टम्। वेविष्ट ॥ **उ०** वेविषाणि। वेविषाव। वेविषाम ॥ ३. **प्र०** अवेवेट्। अवेविष्टाम्। अवेविषुः ॥ **म०** अवेवेट्। अवेविष्टम्। अवेविष्ट ॥ **उ०** अवेविषम्। अवेविष्व। अवेविष्म ॥ ४. वेविष्याम्। वेविष्याव। वेविष्याम ॥ ५. **प्र०** विवेष। विविषतुः। विविषुः ॥ **म०** विवेषिथ। विविषथुः। विविष ॥ **उ०** विवेष। विविषिव। विविषिम ॥ ६. वेष्टा ॥ ७. वेक्ष्यति ॥ ८. विष्यात्। विष्यास्ताम् ॥ ९. अविषत्[1]। अविषताम् ॥ १०. अवेक्ष्यत् ॥

**आत्मनेपदे**— १. **प्र०** वेविष्टे। वेविषाते। वेविषते ॥ **म०** वेविक्षे। वेविषाथे। वेविड्ढ्वे ॥ **उ०** वेविषे। वेविष्वहे। वेविष्महे ॥ २. **प्र०** वेविष्टाम्। वेविषाताम्। वेविषताम् ॥ **म०** वेविक्ष्व। वेविषाथाम्। वेविड्ढ्वम् ॥ **उ०** वेविषै ॥ ३. **प्र०** अवेविष्ट। अवेविषाताम्। अवेविषत ॥ **म०** अवेविष्ठाः। अवेविषाथाम्। अवेविड्ढ्वम् ॥ **उ०** अवेविषि। अवेविष्वहि ॥ ४. वेविषीत। वेविषीयाताम्। वेविषीरन् ॥ ५. **प्र०** विविषे। विविषाते। विविषिरे ॥ **म०** विविषिषे। विविषाथे। विविषिध्वे ॥ **उ०** विविषे। विविषिवहे ॥ ६. वेष्टा। वेष्टासे ॥ ७. वेक्ष्यते ॥ ८. विक्षीष्ट। विक्षीयास्ताम्। विक्षीरन् ॥ ९. अविक्षत[2]। अविक्षाताम्। अविक्षन्त। १०. अवेक्ष्यत ॥

**कर्मादिषु**—'**नेनेक्ति**' (३९१) वत्। **कृत्सु**—वेष्टव्यम्। वेषणीयम्। वेष्यम्। विष्टः। वेविषत्। वेविषतौ। वेविषतः। वेविषती। वेविषाणः। वेष्टुम्। वेषणम्। विष्ट्वा। परिविष्य। वेषः। विषम्। विष्णुः। परिवेषः। परिवेषणम् ॥

इति जुहोत्यादयः ॥ ३ ॥

१ लृदित्वादङ्। द्वितीयो लुङ्। २ लुङि द्वादशी विधा

श्रीः ॥

# बृहद्धातुरूपावल्याम् ।

## अथ दिवादयः ॥ ४ ॥

[३९४] **दिवु**=क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । अर्थानुसारेण सकर्मकोऽकर्मकश्च । सेट् । परस्मै० ॥

१. प्र० दीव्यति[1] । दीव्यतः । दीव्यन्ति ॥ म० दीव्यसि । दीव्यथः । दीव्यथ ॥ उ० दीव्यामि । दीव्यावः । दीव्यामः ॥ २. प्र० दीव्यतु ॥ म० दीव्य ॥ उ० दीव्यानि ॥ ३. अदीव्यत् ॥ ४. दीव्येत् ॥ ५. प्र० दिदेव[2] । दिदिवतु । दिदिवुः ॥ म० दिदेविथ । दिदिवथुः । दिदिव ॥ उ० दिदेव । दिदिविव । दिदिविम ॥ ६. देविता ॥ देवितासि ॥ ७. देविष्यति ॥ ८. दीव्यात् । दीव्यास्ताम् ॥ ९. अदेवीत्[3] । अदेविष्टाम् ॥ १०. अदेविष्यत् ॥

**भावकर्मणोः**- दीव्यते । ५. दिदेवे । ९. अदेवि । **णिचि** — देवयति । ९. अदीदिवत् । **सनि** — दिदेविषति-दुद्यूषति । **यङि** —

---

१ **दिवादिभ्यः श्यन्** । इति श्यन् । शपोऽपवादः । शकारनकारावितौ । 'य' मात्रं शिष्यते । दिव् + य + ति इति स्थिते, **हलि च** । इति उपधाया इको दीर्घः । दीव्यति । प्रायोऽस्मिन्विकरणे शब्विकरण इव प्रक्रियाः । २. **लिटि धातो**-(पृ० ७)रिति द्वित्वम् । दिव् दिव । हलादिशेषः । दिदिव् । **पुगन्तलघूपधस्येति**(पृ० ३) गुणः । दिदेव । ३ **नेटि** इति वृद्धिनिषेधः । लुङि सप्तमी विधा । ४. **सनीवन्त**—(१६३)ति वेट् । इट्पक्षे दिदेविषति **इडभावपक्षे** - **च्छ्वोश्शूठ्**—(१६३) इति ऊठि यणादेशे दुद्यूषति ।

देदीव्यते । ऊङ्भावित्वाद्यङ्लुङ्नास्ति । **कृत्सु**—देवितव्यम् । देवनीयम् । देव्यम् । दिव्यम्--परदोषेक्षणदिव्यचक्षुषः--इति माघः । द्यूनः[1] । द्यूतम् । दीव्यन् । दीव्यन्ती[2] । देवितुम् । देवनम् । देवित्वा[3]—द्यूत्वा । प्रदीव्य । देवः । देवता । दैवतम् । द्यौः । दैवम्[4] । दैव्यम् । दैविकम् । आधिदैविकम्[5] । आ+दीव्यति=जिगीषायाम् । परिदेवि—परिदेवने । परिदेवयति—ते । परिदेवना ॥

[३९५] **षिवु**=तन्तुसन्ताने । सकर्म० । सेट् । परस्मै० ॥

१. सीव्यति[6] ॥ २. सीव्यतु ॥ ३. असीव्यत् ॥ ४. सीव्येत् ॥ ५. सिषेव । सिषिवतुः । सिषिवुः ॥ ६. सेविता ॥ ७. सेविष्यति ॥ ८. सीव्यात् ॥ ९. असेवीत् ॥ १०. असेविष्यत् ॥ **कर्मणि**—सीव्यते । **णिचि**—सेवयति । **सनि**—सिसेविषति—सिस्यूषति । **यङि**—सेषीव्यते । यङ्लुङ् न । परिषीव्यति[7] । निषीव्यति । विषीव्यति । **कृत्सु**—सेवितव्यम् । सेवनीयम् । सेव्यम् । स्यूतः[8] । स्यूतिः । सीव्यन् । सीव्यन्ती । सेवितुम् । सेवनम् । सीवनम् । प्रसेवकः । ककुभस्तु प्रसेवकः **इत्यमरः** । सेवित्वा -स्यूत्वा । निषीव्य । सूनः । सूत्रम् ॥

१. दिव् + क्त इति स्थिते **च्छ्वोश्शूठ्** -(१६३) इति ऊठि दि ऊ क्त=यण्=द्युत इति जाते । **हलि च** । इति दीर्घे, द्यूतम् । **दिवोऽविजिगीषायाम्** । दिवो निष्ठातस्य नः स्यादविजिगीषायाम् । द्यूनः । आ+द्यूनः=आद्यूनस्स्यादौदरिक इत्यमरः । विजिगीषायां तु द्यूतम् । द्रव्य लब्धं तेनैव दारा मित्रं द्यूतेनैव । दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥ इति शूद्रकः । २. **शप्श्यनोर्नित्यम्** । इति नित्यं नुम् । ३. **उदितो वा** । इति क्त्वः इड्विकल्पः । ४ नूनमस्य दैवानुग्रहः इति भाष्ये । ५ अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च । इति मनुः । ६. स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति । सर्वापि प्रक्रिया दीव्यति । (३९४) वत् । ७. **परिनिविभ्य** इत्यादिना षत्वम् । ८ चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया । इति भवभूतिः ।

[३९६] **प्लुष**=दाहे । सकर्म० । सेट् । परस्मै० ॥

१. प्लुष्यति ॥ ५. पुप्लोष । ९. [1]अप्लुषत् ॥ कर्मादौ **'शोचति'** (७६) वत् । प्लुष्यन् । प्लोषः । [2]प्लोषणम् ॥

[३९७] **नृती**=गात्रविक्षेपे । अकर्मकः । सेट् । परस्मै० ॥

१. [3]नृत्यति ॥ २. नृत्यतु ॥ ३. अनृत्यत् ॥ ४. नृत्येत् ॥ ५. **प्र०** [4]ननर्त । ननृततुः । ननृतुः ॥ **म०** ननर्तिथ । ननृतथुः । ननृत ॥ **उ०** ननर्त । ननृतिव । ननृतिम ॥ ६. नर्तिता ॥ ७. नर्तिष्यति-[5]नर्त्स्यति ॥ ८. नृत्यात् । नृत्यास्ताम् ॥ ९. [6]अनर्तीत् ॥ १०. अनर्तिष्यत्-अनर्त्स्यत् ॥

**भावे**—नृत्यते । **णिचि**—[7]नर्तयति-ते । **सनि**—निनर्तिषति-निनृत्स्यति । **यङि**—[8]नरीनृत्यते । **यङ्लुकि**—नर्नर्ति-[9]नरिनर्ति-नरीनर्ति इत्यादि ॥ **कृत्सु**—नर्तितव्यम् । नर्तनीयम् । नृत्यम् । नृत्तम् । नृत्यन् । नृत्यन्ती । नर्तिष्यन्-नर्त्स्यन् । नर्तितुम् । नर्तनम् । नर्तित्वा । परिनृत्य ।

१. लृदित्वादङ् । द्वितीयो लुङ् । २. तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः । ३. नृत्यति युवतिजनेन समं सखि ! इति **जयदेवः** । ४. लोलोर्मौ पयसि महोत्पलं ननर्त । इति माघः । ५. **सेऽसिचि कृतचृतच्छृदतृदनृतः** । एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्य इड्वा स्यात् । इति इट्पक्षे-'नर्तिष्यति' । अनिट्पक्षे – नृत् + स्यति । लघूपधगुणः 'नर्त्स्यति' । ६. **असिची**–त्युक्तेः सिचि नित्यमिट् । सप्तमो लुङ् । ७ अस्य धातोश्चलनार्थत्वात् अणौ अकर्मकत्वाच्च **निगरणचलने**ति **अणावकर्मका**दिति च सूत्रद्वयेन कर्त्रभिप्राये क्रियाफले यत्परस्मैपदं प्राप्तं तत् **न पादम्याङ्**इत्यादिना निषिध्यते । अकर्त्रभिप्राये परस्मैपदं स्यादेव । त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् । इति सुभाषितत्रिशत्याम् । ८. **रीगृदुपधस्य च** (७३) इति रीक् । ९. **रुग्रिकौ च लुकि** (७३) ।

[ ३९८] **त्रसी**=उद्वेगे । अकर्म० । सेट् । परस्मै० ॥

१. त्रस्यति ॥ २. त्रस्यतु ॥ ३. अत्रस्यत् ॥ ४. त्रस्येत् ॥ **पक्षे** — [1]त्रसति । त्रसतु । अत्रसत् । त्रसेत् । इत्यादि ॥ ५. तत्रास । त्रेसतुः–तत्रसतुः[2] ॥ ६. त्रसिता ॥ ७. त्रसिष्यति ॥ ८. त्रस्यात् । त्रस्यास्ताम् ॥ ९. अत्रासीत्[3]–अत्रसीत् ॥ १०. अत्रसिष्यत् ॥

**भावे**—त्रस्यते । **णिचि—सनि—यङि—यङ्लुकि**—च **'गदति'** (३७) वत् । **कृत्सु**—त्रसितव्यम् । त्रसनीयम् । त्रास्यम् त्रस्तः[4] । त्रस्यन् । त्रसन् । त्रसितुम् । त्रसनम् । त्रसित्वा । संत्रस्य । त्रस्नुः[5] । त्रासः[6] ॥

[३९९] **क्षिप**=प्रेरणे । सकर्म० । अनिट् । परस्मै० ॥

१. क्षिप्यति ॥ २. क्षिप्यतु ॥ ३. अक्षिप्यत् ॥ ४. क्षिप्येत् ॥ ५. चिक्षेप । चिक्षिपतुः ॥ **म०** चिक्षेपिथ । चिक्षिपथुः । चिक्षिप ॥ **उ०** चिक्षेप । चिक्षिपिव । चिक्षिपिम ॥ ६. क्षेप्ता ॥ ७. क्षेप्स्यति ॥ ८. क्षिप्यात् । क्षिप्यास्ताम् ॥ ९. अक्षैप्सीत्[7] । अक्षैप्ताम् ॥ १०. अक्षेप्स्यत् ॥ आक्षिपति=निराकरोति । **कर्मणि**— क्षिप्यते । **णिचि**—क्षेपयति–ते । **सनि**—चिक्षिप्सति । **यङि**— चेक्षिप्यते । **यङ्लुकि**—चेक्षिपीति-चेक्षेप्ति । **कृत्सु**—क्षेप्तव्यम् ।

१. **वा भ्राश** (१४१) इति श्यन्वा । श्यनोऽभावपक्षे शप् । २. **वा जॄभ्रमुत्रसाम्** । (२४२) इति वा एत्वाभ्यासलोपौ । ३. कपेरत्रासिषुर्नादात्— इति भट्टिः । ४. त्रस्तैकहायनकुरङ्गविलोलदृष्टिः । इति भवभूतिः । ५ अत्रस्नुभिर्युक्तधुरं तुरङ्गैः । इति रघुः । ६ कौमारबर्हित्रासान्नासाग्ररन्ध्रमिति —मालती-माधवे । ७. लुङि षष्ठी विधा ।

क्षेपणीयम् । क्षेप्यम् । क्षिप्तः। क्षिप्यन् । क्षेप्तुम् । क्षेपणम् । क्षिप्त्वा । प्रक्षिप्य । क्षेपः। आक्षेपः निक्षेपः ॥

[४००] **व्रीड**=लज्जायाम् । अकर्म० । सेट् । परस्मै० ॥

१. व्रीड्यति ॥ ५. विव्रीड ॥ ६. व्रीडिता ॥ ९. अव्रीडीत ॥ **भावे**—व्रीड्यते । व्रीडित्वा । व्रीडा ॥ व्रीडः[2] ।

[४०१] **इष**=गतौ । सकर्म० । सेट् । परस्मै० ॥

१. इष्यति ॥ २. इष्यतु ॥ ३. ऐष्यत् ॥ ४. इष्येत् ॥ ५. **प्र०** इयेष । ईषतुः ॥ **म०** इयेषिथ ॥ **उ०** इयेष । ईषिव ॥ ६. एषिता ॥ ७. एषिष्यति ॥ ८. इष्यात् ॥ ९. ऐषीत् ॥ १०. ऐषिष्यत् ॥

**कर्मणि**—इष्यते । **णिचि**—एषयति–ते । ९.

**सनि**—एषिषिषति । **कृत्सु**—एषितव्यम् । एषणीयम् । एष्यम् । इषितः । इष्यन् । एषितुम् । एषणम् । एषित्वा । प्रेष्य । एषणा । अन्वेषणा । पर्येषणा । परीष्टिः । प्रैषः । प्रैष्यः । अन्वेषयति ।

[४०२] **जॄष्**=वयोहानौ । अकर्म० । सेट् । परस्मै० ॥

१. जीर्यति[3] ॥ २. जीर्यतु ॥ ३. अजीर्यत् ॥ ४. जीर्येत् ॥ ५. **प्र०** जजार । जेरतुः[4]–जजरतुः । जेरुः । जजरुः ॥ **म०** जेरिथ–

१. केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः – इति माघः । २ व्रीडमेति न तव प्रियं वदन् ह्रीमताऽत्र भवतैव भूयते । ३. **ऋत इद्धातोः** । (२९२) रपरत्वम्=जिर् । **हलि च** । इति दीर्घः । ४. **वा जॄभ्रमुत्रसाम्** । (२४२) इति वा एत्वाभ्यासलोपौ

जजरिथ। जेरथुः–जजरथु । जेर–जजर ॥ उ० जजार–जजर । जेरि-व–जजरिव । जेरिम–जजरिम ॥ ६. जरीता–जरिता ॥ ७. जरी-ष्यति–जरिष्यति ॥ ८. जीर्यात् । जीर्यास्ताम् ॥ ९. अजरत् । अज-रताम् । अजरन् ॥ **पक्षे** – अजारीत् । अजारिष्टाम् । अजारिषुः ॥ १०. अजरिष्यत् । अजरीष्यत् ॥

**भावे**—जीर्यते । ५. जेरे–जजरे । ९. अजारि । **णिचि**—जैरयति–ते । **सनि**—जिजीर्षति–जिजरिषति–जिजरीषति ॥ **यङि**—जेजीर्यते । **यङ्लुकि**—जाजरीति । जाजर्ति । **कृत्सु**—जरितव्यम्–जरीतव्यम् । जरणीयम् । जार्यम् । अजर्यम्=सैङ्गतम् । जीर्णः । जी-र्यन् । जीर्यन्ती । जैरन् । जरती । जरणम् । जरित्वा–जरीत्वा । नि-जीर्य । जैरा । जारः ॥

[४०३] **षूङ्**=प्राणिप्रसवे । सकर्म० । वेट् । आत्मने० ॥

१. सूयते ॥ २. सूयताम् ॥ ३. असूयत ॥ ४. सूयेत ॥

१. **वॄतो वा** ।(२९२ इति अलिटि दीर्घो वा । २. **जॄस्तम्भुम्रुचु-** (पृ० ११) इत्यङ्वा । **ऋदृशोऽङि गुणः** । (३०७, **पक्षे**—सप्तमी विधा । ३. **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** । इति मित्त्वाद्ध्रस्वः । ४ **इट् सनि वा** । (२९२) इति सनि वेट् । **वॄतो वा** २९२) इति वा दीर्घः । ५ **अजर्यं संग-तम्** । इति कर्तरि सङ्गते यत् निपात्यंते । असङ्गते तु अजरिता=कम्बलः । ६. **ऋत इद्धातोः** । (२९२)**रदाभ्यां निष्ठात**–(२१) इति नः । **हलि च** इति दीर्घः । जग-ज्जीर्णारण्य भवति च कलत्रेष्युपरत—इति भवभूतिः । ७. **जीर्यतेरतृन्** । भूते । ८. कैकीयीशङ्कयेवाऽऽह पलितच्छद्मना जरा—इति रघु । ९. अत्र प्राणिग्रहण-मतन्त्रम् । तेन प्रसूनास्तरव इति भवतीति – **माधवः** ।

५. प्र० सुषुवे ॥ म० सुषुविषे ॥ उ० सुषुविवहे ॥ ६. सोता–सविता ॥ ७. सोष्यते–सविष्यते ॥ ८. सोषीष्ट–सविषीष्ट ॥ ९. असविष्ट–असोष्ट[3] ॥ १०. असोष्यत–असविष्यत ॥

**कर्मणि** —सूयते । ९. असावि । **णिजादिषु**—'**सवति**' (२८४) वत् । **कृत्सु**—सवितव्यम्–सोतव्यम् । सवनीयम् । सव्यम् । साव्यम् । सूनः[4] । सूयमानः । सोतुम् । सवनम् । सवित्वा–सूत्वा । प्रसूय ॥

[४०४] दूङ्=परितापे परितापः खेदः । अकर्म० । सेट् । आत्मने० ॥

सर्वं '**सूयति**' (४०३) वत् । किन्त्वयं नित्यं सेट् ।

[४०५] **डीङ्**=विहायसा गतौ । अकर्म० । सेट् । आत्मने० ॥

१. डीयते । ५. डिड्ये ॥ डिड्यिढ्वे–ध्वे ॥ ६. डयिता ॥ ८. डयिषीष्ट ॥ ढ्वम्–ध्वम् ॥ भावादि सर्वमस्य 'डयति' (२९१) वत् । डीनः[5] । डयित्वा । प्रोड्डीय[6] । डयितुम् । डयनम् । प्रडीनम्[7] । उड्डीनम् । संडीनम् ।

[४०६] **लीङ्**=श्लेषणे । अकर्म० । अनिट् । आत्मने० ॥

१. लीयते[8] ॥ २. लीयताम् ॥ ३. अलीयत ॥ ४. लीयेत ॥

---

१. **स्वरतिसूती**—(३५)ति विकल्पं बाधित्वा **श्र्युकः किति** (२७८) ति निषेधे प्राप्ते, क्रादिनियमान्नित्यमिट् । २. लुङि एकादशी विधा । ३. दशमी विधा । ४. **स्वादय ओदितः** । इति षूङ ओदित्त्वात् **ओदितश्च** । इति निष्ठानत्वम् । ५. स्वादीनाम् ओदित्वा**दोदितश्चेति** नत्वम् । ६ प्रोड्डीयैव बलाकया सरभसं सोत्कण्ठमालिङ्गितः इति शूद्रक. । ७. प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः । इत्यमरः । ८. हरिशिशुरुत्पातितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम्—इति – जगन्नाथः ।

५. लिल्ये । लिल्याते ॥ ६. लेता[1]-लाता ॥ ७. लेष्यते । लास्यते ॥ ८. लेषीष्ट ॥ ९. अलेष्ट-अलास्त ॥

**भावे**—लीयते । ५. लिलीये । ९. अलायि ॥ **णिचि**—विलीनयति[2]-विलाययति[3]-विलालयति[4]-विलापयति[5] । जटाभिर्लापयते=[6]पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते=अभिभवतीत्यर्थः ॥ बालमुल्लापयते=वञ्चयतीत्यर्थः ॥ **सनि**—लिलीषते । **यङि**—लेलीयते । **यङ्लुकि**—लेलयीति-लेलेति । **कृत्सु**—लेतव्यम्-लातव्यम् । लयनीयम् । लानीयम् । लेयः-लायः । लीनः[7] । लीयमानः । लातुम्-लेतुम् । विलयनम् । लयनम्-लानम् । लीत्वा । विलीय-विलाय ॥

[४०७] ईङ्=गतौ । सकर्म० । अनिट् । आत्मने० ॥

१. ईयते ॥ २. ईयताम् ॥ ३. ऐयत ॥ ४. ईयेत ॥ ५. अयाञ्चक्रे ॥ ६. एता ॥ ७. एष्यते ॥ ८. एषीष्ट ॥ ९. ऐष्ट ॥ १०. ऐष्यत ॥

**कर्मणि**—ईयते । **णिचि**—आययति-ते । **सनि**—इषिषते । **कृत्सु**—एतव्यम् । अयनीयम् । एयम् । उपेयम् । ईतः । ईयमानः । एतुम् । अयनम् । ईत्वा । प्रेय । प्रतीय ॥

१ **विभाषा लीयतेः** । लीलीङोरात्व वा स्यात् एज्विषये ल्यपि च । २ **लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने** । लीयतेर्लातेश्च क्रमान्नुग्लुकावगमौ वा स्तो णौ स्नेहद्रवे । नुकि 'विलीनयति' इति रूपम् । ३. वृद्ध्यायादेशौ । ४ लुगागमे रूपम् । ५. पुगागमे रूपम् । ६ **लियः सम्माननशालिनीकरणयोश्च** । लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे । ७ माधव मनसिजविशिखभयादिव भावनया त्वयि लीना—इति जयदेवः ।

[४०८] **प्रीङ्**=प्रीतौ । अकर्म० । अनिट् । आत्मने० ॥

१. प्रीयते ॥ २. प्रीयताम् ॥ ३. अप्रीयत ॥ ४. प्रीयेत ॥ ५. पिप्रिये[1] । पिप्रियाते । पिप्रियिरे ॥ ६. प्रेता ॥ ७. प्रेष्यते ॥ ८. प्रेषीष्ट ॥ ९. अप्रेष्ट ॥ १०. अप्रेष्यत ॥ भावे । प्रीयते ॥ ९. अप्रायि । **णिचि**—प्राययति । **सनि**—पिप्रीषते । **यङि**—पेप्रीयते । **यङ्लुकि**—पेप्रयीति-पेप्रेति । **कृत्सु**—प्रेतव्यः । प्रयणीयः । प्रेयः । प्रीतः । प्रीयमाणः । प्रेतुम् । प्रयणम् । प्रीत्वा । विप्रीय । प्रेष्ठः[2] । प्रेयान् । प्रेमा ।

[४०९] **शो**=तनूकरणे । सकर्म० । अनिट् । परस्मै० ॥

१. श्यति[3] ॥ २. श्यतु ॥ ३. अश्यत् ॥ ४. श्येत् ॥ ५. प्र० शशौ[4] । शशतुः । शशुः ॥ म० शशिथ-शशाथ । शशथुः । शश ॥ उ० शशौ । शशिव । शशिम ॥ ६. शाता ॥ ७. शास्यति ॥ ८. शायात् । शायास्ताम् ॥ ९. अशात्[6] । अशाताम् । अशुः ॥ **पक्षे**—अशासीत्[7] । अशासिष्टाम् ॥ १०. अशास्यत् ॥

**कर्मणि**—शायते । **णिचि**—शाययति । **सनि**—शिशासति । **यङि**—शाशायते । **यङ्लुकि**—शाशेति-शाशाति ॥ **कृत्सु**—शात-

१. स यमुनां हेमभक्तिमतीं भूमेः प्रवेणीमिव पश्यन् पिप्रिये । इति रघुः । २. **प्रियस्थिर**—इत्यादिना प्रादेशः । ३. **ओतः श्यनि** । लोपः स्याच्छ्यनि । ४. **आदेच उपदेशेऽशिति** । (२६४) इत्यात्वम् । **आत औ णलः** (२६४) इत्यौत्वम् । ५ **आतो लोप इटि च** । (२६४) ६. **विभाषा घ्राधेट्शाच्छासः** । (पृ० १०) इति सिचो लुग्वा । लुङि प्रथमा विधा । ७ **यमरमनमातां**—(पृ० ११) इति इट्सकौ । चतुर्थी विधा ।

व्यम् । शानीयम् । शेयम् । निशितः[1]–निशातः । श्यन् । शातुम् । शानम् । शात्वा–शित्वा । निशाय[2] ।

[४१०] **षो**=अन्तकर्मणि । अकर्म० । अनिट् । परस्मै० ॥

१. स्यति ॥ २. स्यतु ॥ ३. अस्यन् ॥ ४. स्येत्[3] ॥ ५. ससौ । इत्यादि '**श्यति**' (४०९) वत् । अव–[4]अवसाने । प्रति+अव=भोजने । परि+अव=परिणामे । अधि+अव=अध्यवसाये ।

[४११] **दो**=अवखण्डने । सकर्म० । अनिट् । परस्मै० ॥

द्यति । ददौ । इत्यादि '**श्यति**' (४०९) वत् ॥

[४१२] **जनी**=प्रादुर्भावे । अकर्म० । सेट् । आत्मने० ॥

१. [5]जायते ॥ २. जायताम् ॥ ३. अजायत ॥ ४. जायेत ॥ ५. [6]जज्ञे । जज्ञाते । जज्ञिरे ॥ **म०** जज्ञिषे ॥ **उ०** जज्ञे । जज्ञिवहे ॥ ६. जनिता ॥ ७. जनिष्यते ॥ ८. जनिषीष्ट ॥ ढ्वम्–ध्वम् ॥ ९. अज[7]नि–अजनिष्ट ।

१. **शाच्छोरन्यतरस्याम्** । अनयोरिकारोन्तादेशो वा स्यात् । क्व च निशितनिपाताः सारपुङ्खाः शरास्ते । इति शाकुन्तले । २. निशा रं द्रेषु विकाशतां गतैः इति भारविः । ३. अमूयतः स्येत् स्वजनोप्यलब्धान्नांशुको ध्रुवम् । इति श्रीवल्लभः । ४. यूपवत्यवसिते क्रियाविधौ इति रघुः । ५ **ज्ञाजनोर्जा** । अनयोर्जादेशः स्याच्छिति । ६. **गमहनजने**–(२५५) त्युपधालोपः । ७ **दीपजने**–(२४७, ति वा चिण् । **चिणो लुक्** । (१४७) ८. लुङि एकादशी विधा ।

**भावे**— कर्तरीव। लुङि अजनि इत्येव। **णिचि**—जनयति[1]। ९. अजीजनत्। **सनि**—जिजनिषते। **यङि**—जञ्जन्यते। **यङ्लुकि**—जञ्जनीति–जञ्जन्ति। **कृत्सु**—जनितव्यम्। जननीयम्। जन्यम्। जातः। जायमानः। जनितुम्। जननम्। जनः। जनानां समूहो जनता। जनित्वा। प्रजन्य। सञ्जन्य–सञ्जाय। जज्ञिवान्। विश्वजनीनम्। विश्वजनाय हितमित्यर्थः।

[४१३] **दीपी**=दीप्तौ। अकर्म०। सेट्। आत्मने०॥

१. दीप्यते[2]॥ २. दीप्यताम्॥ ३. अदीप्यत॥ ४. दीप्येत॥ ५. दिदीपे॥ ६. दीपिता। ७. दीपिष्यते॥ ८. दीपिषीष्ट॥ ध्वम्॥ ९. अदीपि[3]–अदीपिष्ट॥

**भावे**—दीप्यते। ९. अदीपि। **णिचि**—दीपयति-ते। **सनि**—दिदीपिषते। **यङि**—देदीप्यते। **यङ्लुकि**–देदेप्ति–देदीपीति। **कृत्सु**—दीपितव्यम्। दीपनीयम्। दीप्यम्। दीप्तः[4]। दीप्यमानः। दीपनम्। दीपित्वा। प्रदीप्य। दीपः। दीप्रः। दीप्तिः।

[४१४] **पूरी**=आप्यायने। सकर्म०। सेट्। आत्मने०॥

१. पूर्यते॥ ५. पुपूरे॥ इत्यादि सर्वं **'दीप्यति'** (४१३) वत्। पूर्णः[5]। पूरः। पूर्तिः।

---

१. **बुधयुधनशजनेङ्**— (३५३) इति परस्मैपदम्। **जनीजॄष्**— (ग. सू.) इति ह्रस्वः। २. तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम्। इति श्रीहर्षः। ३. **'अजनीति'** (४१२) वत्। ४. **श्वीदितो निष्ठायाम्**। (२१)। इत्यनिट्। ५. **रदाभ्यां**—(२१)।

[४१५] **तप=ऐश्वर्ये वा** । अकर्म० । अनिट् । आत्मने० ॥

१. तप्यते ॥ २. तप्यताम् ॥ ३. अतप्यत ॥ ४. तप्येत ॥ ५. तेपे ॥ तेपिषे ॥ ६. तप्ता ॥ ७. तप्स्यते ॥ ८. तप्सीष्ट ॥ ९. अतप्त । अतप्सातम् ॥ १०. अतप्स्यत ॥

[४१६] **क्लिश=उपतापे** । अकर्म० । सेट् । आत्मने० ॥

१. क्लिश्यते ॥ २. क्लिश्यताम् ॥ ३. अक्लिश्यत ॥ ४. ॥ ५. चिक्लिशे ॥ ६. क्लेशिता ॥ ७. क्लेशिष्यते ॥ ८. ॥ ९. अक्लिष्ट ॥ १०. अक्लेशिष्यत ॥

**भावे**—क्लिश्यते । ९. अक्लेशि । **णिचि**—क्लेशयति-ते । ९. अचिक्लिशत्-त । **सनि**—चिक्लेशिषते-चिक्लिशिषते । **यङि**—चेक्लिश्यते **यङ्लुकि**—चेक्लेष्टि-चेक्लीशीति । **कृत्सु**—क्लेशितव्यम् । क्लेशनीयम् । क्लेश्यम् । क्लिशितः-क्लिष्टः । क्लेशितुम् । क्लेशनम् । क्लेशः । क्लिशित्वा-क्लिष्ट्वा । परिक्लिश्य ।

[४१७] **काशृ=दीप्तौ** । अकर्म० । सेट् । आत्मने० ॥

१. काश्यते ॥ २. काश्यताम् ॥ ३. अकाश्यत ॥ ४. काश्येत ॥ ५. चकाशे । शेषं **'गाधति'** (४) वत् । प्रकाशः ॥

---

१. अयं धातुरैश्वर्ये वा तङ्श्यनौ उत्पादयति । २. क्रादिनियमादिट् । ३. लुङि एकादशी विधा । ४ **रलो व्युपधा**—(१४) दिति कित्वविकल्पः । ५. **क्लिशः क्त्वानिष्ठयोः** । इड्वा स्यात् । ६. क्लेशः फलेन हि पुनर्नवतां विधत्ते । इति कालिदासः । ७. पतिरवनिपतीनां तैश्चकाशे चतुर्भिः—इति रघुः ।

[४१८] **मृष** = तितिक्षायाम् । तितिक्षा = क्षमा । सकर्म० । सेट् । उभय० ॥

१. मृष्यति-ते ॥ २. मृष्यतु-ताम् ॥ ३. अमृष्यत्-त ॥ ४. मृष्येत्-त ॥ ५. **प्र०** ममर्ष ॥ **म०** ममर्षिथ ॥ **उ०** ममृषिव ॥ **आत्मने**—**प्र०** ममृषे ॥ **म०** ममृषिषे । ममृषिध्वे ॥ **उ०** ममृषिवहे ॥ ६. मर्षिता ॥ **म०** मर्षितासि-से ॥ **उ०** मर्षितास्मि-ताहे ॥ ७. मर्षिष्यति-ते ॥ ८. मृष्यात्-मर्षिषीष्ट ॥ ९. अमर्षीत्[1]-अमर्षिष्ट ॥ १०. अमर्षिष्यत्-त ॥ परिमृष्यति[2] ।

**कर्मणि**—मृष्यते । ९. अमर्षि । **णिचि**—मर्षयति-ते । ९. अममर्षत्-त-अमीमृषत्[3]-त । **सनि**—मिमर्षिषते-षति । **यङि**—मरीमृष्यते । **यङ्लुकि**—मर्मृषीति-मर्मष्टि इत्यादि । **कृत्सु**—मर्षितव्यम् । मर्षणीयम् । मृष्यम् । मर्षितः[4] । मृष्यन् । मृष्यमाणः । मर्षितुम् । मर्षणम् । मर्षित्वा[5]-मृषित्वा । आमृष्य ॥

[४१९] **णह**=बन्धने । सकर्म० । अनिट् । उभय० ॥

१. नह्यति-ते । ५. **प्र०** ननाह । नेहतुः । नेहुः ॥ **म०** नेहिथ ॥ **उ०** ननाह-ननह । नेहिव ॥ **आत्मनेपदे**—नेहे ॥ ६.

---

१ लुङि चतुर्थी विधा । २. **परेर्मृषः** । क्रियाफलस्य कर्तृगामित्वेपि परस्मैपदमेव । ३. **उर्ऋत्** । उपधाया ऋवर्णस्य स्थाने ऋद्वा चङ्परे णौ । ४. **मृषस्तितिक्षायाम्** । सेण्निष्ठा किन्न स्यात् । तितिक्षाया अन्यत्र तु—अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः । ५ **तृषिमृषिकृषेः काश्यपस्य** । एभ्यः सेट् क्त्वा किन्न स्यात् । कित्त्वपक्षे **क्ङिति च** । (पृ० ४) इति गुणनिषेधः ।

नद्धा ॥ म० नद्धासि-से ॥ ७. नत्स्यति-ते ॥ ८. नह्यात् । नह्यास्ताम् ॥ ९. अनात्सीत्–अनद्ध ॥ १०. अनत्स्यत् ॥

**कर्मणि**– कर्तरीव रूपाणि । ९. अनाहि इति विशेषः । **णिचि**—नाहयति–ते । **सनि**—निनत्सति–ते । **यङि**—नानह्यते । **यङ्लुकि**—नानहीति-नानद्धि । सम्–कवचधारणे । सन्नह्यति–ते । परि–विशालतायाम् । परिणह्यति । **कृत्सु**—नद्धव्यम् । नहनीयम् । नाह्यम् । नद्धः । नह्यन् । नह्यमानः । नहनम् । नद्ध्वा । संनह्य । नाभिः[1] । पिनद्धम्[2]–अपिनद्धम् ॥

[४२०] **रञ्ज**=रागे । अकर्म० । अनिट् । उभय० ॥

१. रज्यति–ते ॥ २. रज्यतु–ताम् ॥ ३. अरज्यत्–ज्यत ॥ ४. रज्येत्–रज्येत ॥ ५. शेषं सर्वं **'रञ्जति'** (३१५) वत् । रज्यन्–रज्यमानः ॥ वि–विरागे=विरज्यति ॥ अनु–प्रीतौ=अनुरज्यति ॥

[४२१] **पद्**=गतौ । सकर्म० । अनिट् । आत्मने० ॥

१. पद्यते ॥ २. पद्यताम् ॥ ३. अपद्यत ॥ ४. पद्येत ॥ ५. **प्र०** पेदे । पेदाते । पेदिरे ॥ **म०** पेदिषे ॥ **उ०** पेदिवहे ॥ ६. पत्ता ॥ **म०** पत्तासे ॥ ७. पत्स्यते ॥ ८. पत्सीष्ट ॥ ९. अपादि[3] ॥ १०. अपत्स्यत ॥

१. **नहो भश्च** । इञ् । २. मन्दारमाला हरिणा पिनद्धा । इति कालिदासः । ३ **चिण् ते पदः** । पदः च्लेश्चिण् स्यात् तशब्दे परे । उपधावृद्धिः । **चिणो लुक्** (पृ० २२) इति तशब्दलोपः ।

**कर्मणि**—कर्तरिवत् । **णिचि**—पादयति । ९. अपीपदत् ॥ **सनि**—पित्सते । **यङि**—पनीपद्यते । **यङ्लुकि** — पनीपत्ति । **कृत्सु**—पत्तव्यम् । पदनीयम् । पाद्यम् । पन्नः [3] । पत्तुम् । पदनम् । पत्त्वा । प्रपद्य । उत्पदिष्णुः । पादुकः । सम्पत् । आपत् । पादः । पद्यम् । पाद्यम् । पद्मम् । उद्=उद्भवे अकर्म० उत्पद्यते । सम्—सम्पत्तौ । वि–नाशे । विपद्यते । विपत् । विपत्तिः । प्रति=स्वीकारे=प्रतिपद्यते ॥ उप=उपपद्यते ॥ अभि+उप=अङ्गीकरणे=अभ्युपपद्यते=अङ्गीकरोति इत्यर्थः ॥ निर्–निष्पत्तौ ॥ वि+प्रति=विप्रतिपत्तौ ॥ वि+उद्=व्युत्पत्तिः ॥

[४२२] **खिद्**=दैन्ये [4] । अकर्म० । अनिट् । आत्मने० ॥

१. खिद्यते [5] ॥ ५. चिखिदे ॥ ६. खेत्ता ॥ ८. खित्सीष्ट ॥ ९. अखित्त [5] । अखित्साताम् ॥ १०. अखेत्स्यत ॥ **सनि**—चिखित्सते ॥ **यङि**—चेखिद्यते ॥ **यङ्लुकि**—चेखेत्ति । **कृत्सु**—खिन्नः [6] । खेत्तुम् । खित्वा । प्रखिद्य । खेदः । खिद्रम् ॥

[४२३] **विद्**=सत्तायाम् । अकर्म० । अनिट् । आत्मने० ॥

१. विद्यते ॥ २. विद्यताम् ॥ ५. विविदे ॥ **म०** विवि-

---

१. **सनिमीमे**—(२३४) सादेशः । २. **नीग्वञ्चु**—(२१८) इति नीक् । ३. **रदाभ्या**—(२१) मिति दतयोर्नत्वम् । ४. स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः । ५. **लिङ्सिचावात्मनेपदेषु** (११५) । इति कित्वान्न गुणः । **स्को**(पृ० ९)रिति सलोपः । लुङि दशमी विधा । ६. खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र—इति मेघः ॥

दिषे ॥ उ० विविदिवहे ॥ ६. वेत्ता ॥ ७. वेत्स्यते ॥ ८. वित्सीष्ट ॥ ९. अवित्त । अवित्साताम् ॥ १०. अवेत्स्यत ॥

**भावे**—कर्तर्येकवचनान्तवत् । ९. अवेदि इति विशेषः । **णिचि**—वेदयति-ते । **सनि**—विविदिषते । **यङि**—वेविद्यते । **यङ्लुकि**—वेवेत्ति-वेविदीति । **कृत्सु**—वेत्तव्यम् । वेदनीयम् । वेद्यम् । विन्नम्-वित्तम् । विद्यमानः । वेत्तुम् । वेदनम् । वित्त्वा । संविद्य ॥

[४२४] बुध=अवगमे । सकर्म० । अनिट् । आत्मने० ॥

१. बुध्यते ॥ २. बुध्यताम् ॥ ३. अबुध्यत ॥ ४. बुध्येत ॥ ५. बुबुधे ॥ म० बुबुधिषे ॥ उ० बुबुधिवहे ॥ ६. बोद्धा ॥ ७. भोत्स्यते ॥ ८. भुत्सीष्ट ॥ ९. अबोधि-अबुद्ध ॥ १०. अभोत्स्यत ॥

**कर्मणि**—बुध्यते । ९. अबोधि । **णिचि**—बोधयति ॥ **सनि**—बुभुत्सते । **यङि**—बोबुध्यते । **यङ्लुकि**—बोबुधीति-बोबोद्धि । **कृत्सु**—बोद्धव्यम् । बोधनीयम् । बोध्यम् । बुद्धः । बुध्यमानः । बुबुधानः । बोद्धुम् । बोधनम् । बुद्ध्वा । प्रबुध्य । उद्-उद्बोधे=उद्बुध्यते । उद्-बोधि=उद्बोधने=उद्बोधयति । उत्तेजयतीत्यर्थः । सम्+बोधि-सम्बोधने=सम्बोधयति ॥

---

१. **रदाभ्याम्**—(२१) । २. यदि बुध्यते हरिशिशुस्तनन्धयः—इति जगन्नाथः । ३. **एकाचो बशो भष्**—(१८९) इति भष्भावः । ४. **दीपजनबुध**—(१४७)चिण्विकल्पः । एकादशी विधा । हिरण्मयं हंसमबोधि नैषधः ॥ ५. नाबुद्ध कल्पद्रुमतां विहाय—इति रघुः । ६. **बुधयुधनश**—(३५३) परस्मैपदमेव । **णिचश्च**(पृ० १६) इत्यस्यापवादः । ७. केशव धृतबुद्धशरीर जय गोविन्द हरे—इति जयदेवः ।

[४२५] **युध**=संप्रहारे । अकर्म० । अनिट् । आत्मने० ॥

१. युध्यते ॥ ५. युयुधे ॥ इत्यादि '**बुद्ध्यति**' (४२४) वत् ॥ ९. अयुद्ध । अयुत्साताम् । इति विशेषः । योधः । आयुधम् । युयुधानः ।

[४२६] **अनो रुध**=कामे । सकर्म० । अनिट् । आत्मने० ॥

१. अनुरुध्यते । ५. अनुरुरुधे इत्यादि '**बुद्ध्यति**' (४२४) वत् । ९. अन्वरुद्ध ॥

[४२७] **अण**=प्राणने । अकर्म० । सेट् । आत्मने० ॥

१. अण्यते ॥ २. अण्यताम् ॥ ३. आण्यत ॥ ४. अण्येत ॥ ५. आणे ॥ ६. अणिता ॥ ७. अणिष्यते ॥ ८. अणिषीष्ट ॥ ९. आणिष्ट । आणिषाताम् ॥ १०. आणिष्यत ॥

**भावे**—अण्यते । **णिचि**—आणयति । **सनि**—आणिणिषते । **कृत्सु**—अणितव्यम् । अणनीयम् । अण्यम् । अणितः । अण्यमानः । अणितुम् । प्राणनम् । अनित्वा । प्राण्य । प्राणः । प्राणी ॥

[४२८] **मन**=ज्ञाने । सकर्म० । अनिट् । आत्मने० ॥

१. मन्यते ॥ २. मन्यताम् ॥ ३. अमन्यत ॥ ४. मन्येत ॥ ५. **प्र०** मेने । मेनाते । मेनिरे[1] ॥ **म०** मेनिषे । मेनाथे । मेनिध्वे ॥ **उ०** मेनिवहे ॥ ६. मन्ता ॥ **म०** मन्तासे ॥ **उ०** मन्ताहे ॥ ७. मंस्यते ॥ ८. मंसीष्ट ॥ **म०** ढ्वम् ॥ ९. अमंस्त ॥ **म०** अमन्ध्वम् ॥ १०. अमंस्यत ॥

**कर्मणि**—मन्यते । ५. मेने । ९. अमानि । **णिचि**—मानयति । **सनि**—मिमनिषते । **यङि**—मंमन्यते । **यङ्लुकि**—मंमनी-

---

१. जलनिधेः पङ्कं परे मेनिरे ॥

ति–संमन्ति । **कृत्सु**—मन्तव्यम् । मननीयम् । मान्यम् । मतम् । मन्यमानः । मन्तुम् । मननम् । मत्वा । सं[1]मत्य । राज्ञां मतः । पण्डितंमन्यः । पण्डितमानी । मनः । मानसम् । मनुः । मु[2]निः । मं[3]न्तुः । अनुमतौ=अनुमन्यते । सं–सम्मन्यते । वि=विमन्यते । अप–अपमाने–अपमन्यते । अभि–अभिमाने–अभिमन्यते ॥

[४२९] **युज**=समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्म० । अनिट् । आत्मने० ॥

१. युज्यते ॥ ५. युयुजे ॥ ६. योक्ता ॥ ८. युक्षीष्ट ॥ ९. अयु[4]क्त । अयुक्षाताम् ॥ **भावे**—युज्यते । ९. अयोजि । **णिचि**—योजयति । **सनि**—युयुक्षते । **यङि**—योयुज्यते **यङ्लुकि**—योयुजीति-योयोक्ति । **कृत्सु**—योक्तव्यम् । योजनीयम् । युग्यो गौः । योग्यः । युक्तः । युज्यमानः । योक्तुम् । योजनम् । युक्त्वा । संयुज्य । योगः । योगी । प्रयुक् ॥

[४३०] **व्यध**=ताडने । सकर्म० । अनिट् । परस्मै० ॥

१. वि[5]ध्यति ॥ **२.** विध्यतु ॥ **३.** अविध्यत् ॥ **४.** विध्येत् । **५. प्र०** विव्या[6]ध । विवि[7]धतुः । विविधुः ॥ **म०** विव्यधिथ–वि[8]व्यद्ध ।

१. **वा ल्यपि** इत्युक्तत्वेपि नान्तानिट्त्वात् नित्यं लोपः । २ **मनेरुश्च** । इन् । ३. **कपिमतिजनिगाभायाहिभ्यश्च** । एभ्यस्तुः स्यात् । ४. लुङि द्वादशी विधा । ५ **ग्रहिज्येति** (३२१) सम्प्रसारणम् । ६ **लिटि धातो**—(पृ० ७)रिति द्वित्वे व्यध् व्यध् इति जाते पूर्वखण्डस्य **ग्रहिज्या**-(३२१)इति सम्प्रसारणे व्यध् इत्यत्र इकारस्य यकारे विध् इति भवति । पुनः वकारस्य सम्प्रसारणं न । **न सम्प्रसारणे सम्प्रसारणम्** । इत्युक्तेः । हलादिशेषे विव्यध् इति भवति । ७. प्रथमं **लिट्यभ्यासस्ये**—(३१७)ति सम्प्रसारणं ततो द्वित्वं हलादिशेषः । ८. थलि भारद्वाजनियमादिड्विकल्पः **झषस्तथो**—(१८९)रिति थकारस्य धकारः । जश्त्वम् ।

विविधतुः । विविध ॥ उ० विव्याध-विव्यध । विविधिव । विविधिम ॥ ६. व्यद्धा ॥ ७. व्यत्स्यति ॥ ८. विध्यात् । विध्यास्ताम् । ९. अव्यात्सीत्[1] । अव्याद्धाम् । अव्यात्सुः ॥ म० अव्यात्सीः । अव्याद्धम् । अव्याद्ध ॥ उ० अव्यात्सम् । अव्यात्स्व । अव्यात्स्म ॥ १०. अव्यत्स्यत् ॥

**कर्मणि**—विध्यते । ५. विविधे । ९. अव्याधि । **णिचि**—व्याधयति । **सनि**—विव्यत्सति । **यङि**—वेविध्यते । **यङ्लुकि**—वाव्यद्धि-वाव्यधीति । **कृत्सु**—व्यद्धव्यम् । व्यधनीयम् । व्याध्यम् । विद्धः । विध्यन् । व्यद्धुम् । विद्ध्वा । विविध्य । व्याधः । मर्मावित्-द्

[४३१] **पुष**=पुष्टौ । सकर्म० । अनिट् । परस्मै० । पुषादिः ॥

१. पुष्यति[2] ॥ २. पुष्यतु ॥ ३. अपुष्यत् ॥ ४. पुष्येत् ॥ ५. **प्र**० पुपोष[3] । पुपुषतुः । पुपुषुः[4] ॥ **म**० पुपोषिथ । पुपुषथुः । पुपुष ॥ **उ**० पुपोष । पुपुषिव । पुपुषिम ॥ ६. पोष्टा ॥ ७. पोक्ष्यति ॥ ८. पुष्यात् । पुष्यास्ताम् ॥ ९. अपुषत्[5] ॥ १०. अपोक्ष्यत् ॥

**कर्मणि**—पुष्यते । ९. अपोषि । **णिचि**—पोषयति । **सनि**—पुपुक्षति । **यङि**—पोपुष्यते । **यङ्लुकि**—पोपोष्टि । **कृत्सु**—पोष्टव्यम् । पोषणीयम् । पुष्यः[6] । पोष्यम् । पुष्यन् । पोष्टुम् । पुष्टः[7] । पोषणम् । पुष्ट्वा । परिपुष्य ।

१. लुङि षष्ठी विधा । वदव्रजे-(पृ० १२) ति वृद्धिः । २. वपुरभिनवमस्याः पुष्यति स्वां न शोभाम् । ३. पुपोष लावण्यमयान् विशेषान् । ४. पञ्चानामपि भूतानां उत्कर्षं पुपुषुर्गुणाः इति रघुः । ५. **पुषादिद्युताद्लृदितः**—पृ० १०) इत्यङ् । लुङि द्वितीया विधा । एतदादि गृधुधातु (४७०) पर्यन्ताः पुषादयः । ६. पुष्यन्त्यस्मिन्नारब्धानि कार्याणि इति पुष्यः । **पुष्यसिद्ध्यौ नक्षत्रे** इति क्यबन्तो निपातः । ७ यत्पिंषतामपि नृणां पिष्टोपि तनोषि परिमलैः पुष्टिम्-इति जगन्नाथः ।

[४३२] **शुष**=शोषणे। अकर्म०। अनिट्। परस्मै०। पुषादिः॥

शुष्यति। इत्यादि **'पुष्यति'** (४३१) वत्। **कृत्सु**—शुष्कः[1]। शोषः॥

[४३३] **तुष**=तुष्टौ। अकर्म०। अनिट्। परस्मै०। पुषादिः॥

तुष्यति। **५.** तुतोष[2]। इत्यादि **'पुष्यति'** (४३१) वत्।

[४३४] **दुष** वैकृत्ये। वैकृत्यं विकृतिः। अकर्म०। अनिट्। परस्मै०। पुषादिः॥

दुष्यति। इत्यादि **'पुष्यति'** (४३९) वत्। **णिचि**—दूषयति[3]-दोषयति वा चित्तं कामः। अन्यत्र दूषयति[4]।

[४३५] **श्लिष**=आलिङ्गने। सकर्म०। अनिट्। परस्मै०। पुषादिः॥

**१.** श्लिष्यति॥ **२.** श्लिष्यतु॥ **३.** अश्लिष्यत्॥ **४.** श्लिष्येत्॥ **५.** शिश्लेष। शिश्लिषतुः। शिश्लिषुः॥ **म०** शिश्लेषिथ। शिश्लिषथुः। शिश्लिष॥ **उ०** शिश्लेष। शिश्लिषिव। शिश्लिषिम॥ **६.** श्लेष्टा॥ **७.** श्लेक्ष्यति॥ **८.** श्लिष्यात्॥ **९.** अश्लिषत्[5]-अश्लिक्षत्[6]॥ **१०.** अश्लेक्ष्यत्॥

**कर्मणि**—श्लिष्यते। **णिचि**—श्लेषयति-ते। **सनि**—शिश्लिक्षति। **यङि**—शेश्लिष्यते। **यङ्लुकि**—शेश्लिषीति-शेश्लेष्टि। **कृत्सु**—

---

१. **शुषः कः**। निष्ठायाम्। २. तुतोष वीर्यातिशयेन वृत्रहा। इति रघुः। ३. **वा चित्तविरागे**। दुष्यतेरुपधाया ऊत् वा स्याण्णौ चित्तविरागेऽर्थे। ४. तदन्यत्र नित्यमूत्। ५. पुषादित्वादङ्। द्वितीयो लुङ्। अयमालिङ्गनादन्यत्रार्थे एव। यथा—समाश्लिषज्जतुकाष्ठम्। ६. **श्लिष आलिङ्गने**। श्लिषधातोः **शल इगुपधा**-(पृ० ११)दिति प्राप्तः क्सः आलिङ्गनार्थ एव भवति।

श्लेष्टव्यम्   म् । श्लेष्यम् । श्लिष्टः । आश्लिष्टः । श्लिष्यन् । श्लेष्टुम् । श्लेषणम् । श्लिष्ट्वा । आश्लिष्य । आश्लेषः ॥

[४३६] शक=मर्षणे । सकर्म० । शक्तावकर्मकः । सेट् । उभयपदी । पुषादिः ॥

१. शक्यति-ते ॥ २. शक्यतु-ताम् ॥ ३. अशक्यत्-त ॥ ४. शक्येत्-त ॥ ५. शशाक । शेकतुः । शेकुः ॥ म० शेकिथ-शशक्थ । शेकथुः । शेक ॥ उ० शशाक-शशक । शेकिव । शेकिम ॥ आत्मने-शेके । शेकाते । शेकिरे ॥ म० शेकिषे ॥ उ० शेकिवहे ॥ ६. शकिता-शक्ता ॥ म० शकितासि-से-शक्तासि-से ॥ ७. शकिष्यति-ते-शक्ष्यति-ते ॥ ८. शक्यात्-शकिषीष्ट ॥ ९. अशकत्-अशाकीत्-अशकीत् । अशाकिष्टाम्-अशकिष्टाम् । अशाकिषुः-अशकिषुः ॥ आत्मने-अशक्त-अशकिष्ट । अशकिषाताम् ॥ १०. अशकिष्यत्-त अशक्ष्यत्-त ॥

कर्मणि—शक्यते । णिचि-शाकयति-ते । सनि-शिशक्षति-ते । यङि—शाशक्यते । यङ्लुकि-शाशक्ति-शाशकीति । कृत्सु-शकितव्यम् । शकनीयम् । शक्यम् । शक्तः-शकितः । शक्यन् । शक्यमानः । शकनम् । शकित्वा । विशक्य ।

[४३७] ष्विदा=गात्रप्रक्षरणे । अकर्म० । अनिट् । परस्मै० । पुषादिः ॥

१. मेघमाश्लिष्टसानुम्—इति मेघे । २. कण्ठाश्लेषप्रणयिनि जने । ३. भारद्वाजनियमादिड्विकल्पः । ४. केषांचन मते अनिट्कोऽयं धातुः । ५. शकेः कर्मणि निष्ठायामिटमिच्छन्ति केचन । इति विकल्पेन इट् ।

१. स्विद्यति ॥ २. स्विद्यतु ॥ ३. अस्विद्यत् ॥ ४. स्विद्येत् ॥ ५. प्र० सिष्विद ॥ म० सिष्वेदिथ ॥ उ० सिष्वेदिव ॥ ६. स्वेत्ता ॥ ७. स्वेत्स्यति ॥ ८. स्विद्यात् । स्विद्यास्ताम् ॥ ९. अस्विदत् ॥ १०. अस्वेत्स्यत् ॥

**भावे**—स्विद्यते । **णिचि**—स्वेदयति-ते । **सनि**-सिष्वित्सति-**यङि**—सेष्विद्यते । **यङ्लुकि**—सेस्विदीति-सेष्वित्ति । **कृत्सु**-स्वेदितव्यम् । स्वेदनीयम् । स्वेद्यम् । स्विन्नः । स्वेदितुम् । स्विदित्वा । प्रस्विद्य ।

[४३८] क्रुध=क्रोधे । अकर्म० । अनिट् । परस्मै० । पुषादिः ॥

१. क्रुध्यति । ५. प्र० चुक्रोध ॥ म० चुक्रोधिथ ॥ उ० चक्रुधिव ॥ ६. क्रोद्धा ॥ ९. अक्रुधत् ॥

**भावे**—क्रुध्यते । **णिचि**—क्रोधयति । अचुक्रुधत् । **सनि**—चुक्रुत्सति । **यङि**—चोक्रुधीति-चोक्रोद्धि । **कृत्सु**—क्रोद्धव्यम् । क्रोधनीयम् । क्रोध्यम् । क्रुद्धः । क्रुध्यन् । क्रोद्धुम् । क्रोधनम् । क्रुद्ध्वा । संक्रुध्य । क्रोधनः[1] । क्रोधः ।

[४३९] **क्षुध**=बुभुक्षायाम् । अकर्म० । अनिट् । परस्मै० । पुषादिः ॥

१. क्षुध्यति इत्यादि '**क्रुध्यति**' (४३८) वत् । क्षुधितः[2] । क्षुत् क्षुधौ क्षुधः ॥

[४४०] **शुध**=शौचे । अकर्म० । अनिट् । परस्मै० । पुषादिः ॥

१. शुध्यति । ५. शुशोध । शुशुधतुः । **म०** शुशोधिथ । इत्यादि '**क्रुध्यति**' (४३८) वत् ॥

---

१. युक्तायुक्तविवेकरिक्तधिषणो गर्ते पतेत्क्रोधनः । २. **वसतिक्षुधोरिट्** । आभ्यां नित्यमिट् स्यात् ।

[४४१] **षिधु**=निष्पत्तौ । अकर्म० । अनिट् । परस्मै० । पुषादिः ॥

१. सिध्यति[1] ॥ २. सिध्यतु ॥ ३. असिध्यत् ॥ ४. सिध्येत् ॥ ५. प्र० सिषेध । सिषिधतुः । सिषिधुः ॥ म० सिषेधिथ ॥ उ० सिषिधिव ॥ ६. सेद्धा ॥ ७. सेत्स्यति ॥ ८. सिध्यात् ॥ ९. असिधत्[2] ॥ इत्यादि 'क्रुध्यति' (४३८) वत् । **णिचि**—साधयति[3]–सेधयति । सिद्ध्वा[4] सिधित्वा–सेधित्वा ।

[४४२] **णश**=अदर्शने । अकर्म० । सेट् । परस्मै० । पुषादिः रधादिश्च ॥

१. नश्यति ॥ २. नश्यतु ॥ ३. अनश्यत् ॥ ४. नश्येत् ॥ ५. प्र० ननाश । नेशतुः । नेशुः ॥ म० नेशिथ[5]–ननंष्ठ । नेशथुः । नेश ॥ उ० ननाश–ननश । नेशिव–नेश्व । नेशिम–नेश्म ॥ ६. नशिता–नंष्टा ॥ ७. नशिष्यति–नंक्ष्यति ॥ ८. नश्यात् । नश्यास्ताम् ॥ ९. अनशत् ॥ १०. अनश्यत् ॥

**भावे**—नश्यते । **णिचि**—नाशयति[6] । **सनि**—निनशिषति–निनङ्क्षति । **यङि**—नानश्यते । **यङ्लुकि**—नानशीति–नानंष्टि । **कृत्सु**—नशितव्यम्–नंष्टव्यम् । नशनीयम् । नाश्यम् । नष्टः । नशि-

१. यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः । २. पुषादित्वादङ् । द्वितीयो लुङ् । ३. **सिध्यतेरपारलौकिके**। ऐहलौकिकेऽर्थे विद्यमानस्य सिद्ध्यतेरेच आत्वं स्याण्णौ । अन्नं साधयति निष्पादयतीत्यर्थः । पारलौकिके तु तापसः सिद्ध्यति । तं प्रेरयति=सेधयति तापसं तपः । ४. **उदितो वा** । क्त्वः इड्वा स्यात् । इटि, **रलो व्युपधादि**ति कित्वविकल्पः । ५. **रधादिभ्यश्च** । रध् नश् तृप् दृप द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । इति इट्पक्षे **थलि च सेटि**(पृ० ८) इति एत्वाभ्यासलोपौ । इडभावपक्षे **मस्जिनशोर्झलि** । नुम्स्यात् । ६. **बुधयुधे**—(३५३)ति परस्मैपदमेव ।

तुम् -नंष्टुम् । नशनम् । नशित्वा-नंष्ट्वा । प्रणश्य । नेश्वरः । दुःखेन-नाशयितव्यो दूणाशः । प्र+नश्यति=प्रणश्यति[२] ॥ प्रनष्टः[३] ।

[४४३] **तृप**=प्रीणने । प्रीणनं=तृप्तिस्तर्पणं च । आद्येऽकर्मकः । द्वितीये सकर्मकः । वेट् । परस्मै० । पुषादिः । रधादिश्च ॥

१. तृप्यति[४] ॥ ५. ततर्प । ततृपतुः ॥ म० ततर्पिथ[५]-ततर्प्थ-तत्रप्थ[६] । ततृपथुः । ततृप ॥ उ० ततर्प । ततृपिव-ततृप्व । ततृपिम-ततृप्म ॥ ६. तर्पिता तर्प्ता-त्रप्ता ॥ ७. तर्पिष्यति-तर्प्स्यति-त्रप्स्यति ॥ ८. तृप्यात् ॥ ९. अत्राप्सीत्[७] । अत्राप्ताम् । अत्राप्सुः ॥ **पक्षे**—अतार्प्सीत्[८] । अतार्प्ताम् । अतार्प्सुः ॥ **पक्षे**—अतर्पीत्[९] । अतर्पिष्टाम् । अतर्पिषुः ॥ **पक्षे**—अतृपत्[१०] । अतृपताम् । अतृपन् ॥ १०. अतर्पिष्यत्-अत्रप्स्यत्-अतर्प्स्यत् ॥

**कर्मणि**—तृप्यते । **णिचि**-तर्पयति-ते । **सनि**—तितर्पिषति-तितृप्सति[११] । **यङि**-तरीतृप्यते । **यङ्लुकि**-तरीतृपीति-तरीतर्प्ति-इत्यादि ॥ **कृत्सु**—तर्पितव्यम्-त्रप्तव्यम्-तर्प्तव्यम् । तर्पणीयम् । तर्प्यम् । तृप्तः । तृप्यन् । तर्पितुम्-त्रप्तुम्-तर्प्तुम् । तर्पणम् । तृप्त्वा-तर्पित्वा । परितृप्य ।

१. **इणनशिजिसर्तिभ्यः क्वरप्** । २. **उपसर्गादसमासेपी**—ति-णत्वम् । ३. **नशेः षान्तस्य** । णत्वं न स्यात् । ४. को न तृप्यति वित्तेन ? नाग्निस्तृप्यति काष्ठानाम् । पितॄनतार्प्सीत्पममंस्त बन्धून् । ५. रधादित्वादिड्विकल्पः । इट्पक्षे रूपम् । इडभावपक्षे ततर्प्थ । ६. तृप् तृप् **उरत्** (पृ० ८) तप् तृप् । **हलादिः शेषः** (पृ० ७) ततृप्+थ=**अनुदात्तस्य चर्दुपधस्ये**—(२०२)ति अमि, ततृ अप्थ इति जाते । **इको यणचि** इति यणि तत्रप्थ' इति भवति । ७. **अनुदात्तस्य चे**—ति अम्पक्षे षष्ठी विधा । ८. रधादिनिमित्तकानिट्पक्षे **स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः** । इति सिच् । षष्ठी विधा । ९. सेट्पक्षे चतुर्थी विधा । १०. पुषादित्वादङ्पक्षे । द्वितीया विधा । ११. **रधादित्वाद्वेद् हलन्ताच्च** इति कित्त्वान्न गुणो नाप्यम् ।

[४४४] **दृप**=हर्षमोहनयोः । मोहनं गर्वः । अकर्म० । अनिट् । परस्मै० । पुषादिः । रधादिश्च ॥ दृप्यति । इत्यादि सर्वं '**तृप्यति**' (४४३) वत् । दर्पः । दर्पणः ॥

[४४५] **द्रुह**=जिघांसायाम् । सकर्म० । सेट् । परस्मै० । पुषादिः । रधादिश्च ॥

१. द्रुह्यति ॥ २. द्रुह्यतु ॥ ३. अद्रुह्यत् ॥ ४. द्रुह्येत् ॥ ५. **प्र०** दुद्रोह । दुद्रुहतुः । दुद्रुहुः ॥ **म०** दुद्रोहिथ[1]–दुद्रोग्ध[2]–दुद्रोढ[3] । दुद्रुहथुः । दुद्रुह ॥ **उ०** दुद्रोह । दुद्रुहिव–दुद्रुह्व । दुद्रुहिम–दुद्रुह्म ॥ ६. द्रोहिता–द्रोग्धा–द्रोढा ॥ ७. द्रोहिष्यति–ध्रोक्ष्यति[4] ॥ ८. द्रुह्यात् । द्रुह्यास्ताम् ॥ ९. अद्रुहत् ॥ १०. अद्रोहिष्यत्–अध्रोक्ष्यत् ॥

**कर्मणि**—द्रुह्यते । ५. दुद्रुहे । ९. अद्रोहि । **णिचि**—द्रोहयति-ते । **सनि**—दुद्रोहिषति[5]-दुद्रुहिषति । **यङि**—दोद्रुह्यते । **यङ्लुकि**—दोद्रोग्धि-दोद्रोढि । **कृत्सु**—द्रोहितव्यम् । द्रोग्धव्यम् । द्रोढव्यम् । द्रोहणीयम् । द्रोह्यम् । द्रुग्धः–द्रूढः[6] । द्रोहितुम्–द्रोग्धुम् । द्रोहित्वा–द्रुहित्वा–द्रुग्ध्वा–द्रुढ्वा । संद्रुह्य । मित्रध्रुक्–ट् । द्रोही । देवदत्तमभिद्रुह्यति[7] ॥

---

१. **रधादिभ्यश्चे**(४४२)ति इट् । २. अनिट्पक्षे दुद्रोह्+थ इति स्थिते, **वा द्रुहमुहष्णुहष्णिहाम्** । इति वा घः । ३. घादेशाभावपक्षे **हो ढः** इति ढत्वम् । ४. घत्वपक्षे दकारस्य **एकाचो बशः** (१८९) भष्भावः । ढत्वेपि तुल्यं रूपम् । ५ **रलो व्युपधा**—(१४)दिति कित्त्वविकल्पः । ६. **ढ्रलोप** इति दीर्घः । ७ **क्रुधद्रुहोरुपसृष्टयोः कर्म** । इत्युपसृष्टत्वे कर्मत्वम् ।

[४४६] **मुह्**=वैचित्ये । वैचित्यमविवेकः । अकर्म० । सेट् । परस्मै० । पुषादिः । रधादिश्च ॥

१. मुह्यति ॥ २. मुह्यतु ॥ ३. अमुह्यत् ॥ ४. मुह्येत् ॥ ५. **प्र०** मुमोह । मुमुहतुः । **म०** मुमोहिथ–मुमोग्ध–मुमोढ[1] ॥ **उ०** मुमोह । मुमुहिव–मुमुह्व ॥ ६. मोहिता–मोग्धा–मोढा ॥ ७. मोहिष्यति–मोक्ष्यति ॥ ८. मुह्यात् ॥ ९. अमुहत् ॥ १०. अमोहिष्यत्–अमोक्ष्यत् ॥

**भावे**—मुह्यते । ९. अमोहि । **णिचि**—मोहयति[2] । परिमोहयति–ते ॥ **सनि**—मुमुहिषति–मुमोहिषति–मुमुक्षति । **यङि**—मोमुह्यते । **यङ्लुकि**—मोमोग्धि–मोमोढि । **कृत्सु**—मोहितव्यम्–मोग्धव्यम्–मोढव्यम् । मोहनीयम् । मोह्यम् । मुग्धः । मुह्यन् । मोक्ष्यन् । मोहितुम्–मोग्धुम्–मोढुम् । मोहनम् । मुहित्वा–मोहित्वा–मुग्ध्वा–मूढ्वा । परिमुह्य । मूढः ॥ मूर्धा[3] ।

[४४७] **ष्णिह्**=प्रीतौ । अकर्म० । सेट् । परस्मै० । पुषादिः । रधादिश्च ॥

१. ॥ २. ३. अस्निह्यत् ॥ ४. स्निह्येत् ॥ ५. **प्र०** सिष्णेह । सिष्णिहतुः । **म०** सिष्णेहिथ[4]–सिष्णेग्ध–सिष्णेढ । सिष्णिहथुः । सिष्णिह ॥ **उ०** सिष्णेह । सिष्णिहिव–सिष्णिह्व ।

१. 'द्रुह्' धातुवदस्यापि प्रक्रियाः । २. चित्तवत्कर्तृकत्वे **अणावकर्मकादि**–(२८ ति परस्मैपदमेव । परिपूर्वत्वे–**न पादम्या** (२१४) ङित्यादिना निषेधात् उभयं भवति । ३. **श्वन्नुक्षन्**–– (३२५) इति निपातः । ४. **'द्रुह'** (४४५) वदस्यापि प्रक्रियाः ।

सिष्णिहिम-सिष्णिह्म ॥ ६. स्नोहिता-स्नेग्धा-स्नेढा ॥ ७. स्नेहिष्यति-स्नेक्ष्यति ॥ ८. स्निह्यात् । स्निह्यास्ताम् ॥ ९. अस्निहत् ॥ १०. अस्नेहिष्यत्-अस्नेक्ष्यत् ॥

**भावे**—स्निह्यते । **णिचि**—स्नेहयति-ते । **सनि**—सिस्निहिषति-सिस्नेहिषति-सिस्निक्षति । **यङि**—सेष्णिह्यते । **यङ्लुकि**—सेष्णेग्धि-सेष्णिहीति-सेष्णेढि । **कृत्सु**—स्नेहितव्यम् । इत्यादि द्रोहितव्य (४४५) मित्यादिवत् ॥ इति रधादयः ।

[४४८] **शमु**=उपशमे । अकर्म० । सेट् । परस्मै० । पुषादिः । शमादिश्च ॥

१. शाम्यति[1] ॥ २. शाम्यतु ॥ ३. अशाम्यत् ॥ ४. शाम्येत् ॥ ५. **प्र०** शशाम । शेमतुः । शेमुः ॥ **म०** शेमिथ ॥ **उ०** शशाम-शशम । शेमिव ॥ ६. शमिता ॥ ७. शमिष्यति ॥ ८. शम्यात् ॥ ९. अशमत् ॥ १०. अशमिष्यत् ॥

**भावे**—शम्यते । ९. अशमि । **णिचि**—शमयति[2]-ते वचः । निशामयति[3]-ते । **सनि**—शिशमिषति । **यङि**—शंशम्यते । **यङ्लुकि**—शंशमीति-शंशन्ति । **कृत्सु**—शमितव्यम् । शमनीयम् । शम्यम् । शान्तः[4]-शमितः । शाम्यन् । शमितुम् । शमनम् । शमित्वा[5]-शान्त्वा । प्रशम्य । प्रशान् प्रशामौ प्रशामः । शान्तिः । शमी ॥

१ **शमामष्टानां दीर्घः श्यनि** । शमादीनां श्यनि दीर्घः स्यात् । २. **शमोऽदर्शने** । इति मित्त्वात् ह्रस्वः । ३. दर्शने मित्वनिषेधः । ४. **वा दान्तशान्तेति** निष्ठायाः पक्षे इडभावः उपधावृद्धिश्च निपात्यते । ५. **उदितो वा** (३५) ।

[४४९] **तमु**=काङ्क्षायाम्[1] । अकर्म० । सेट् । परस्मै० । पुषादिः । शमादिश्च ॥

१. ताम्यति । इत्यादि '**शाम्यति**' (४४८) वत् । ताम्रम् । तमः तमसी तमांसि । तमिस्रा । अवतमसम्[2] । सन्तमसम् । अन्धतमसम् ॥

[४५०] **दमु**=उपशमे । अन्तर्भावितण्यर्थः । सकर्म० । सेट् । परस्मै० । पुषादिः । शमादिश्च । दाम्यति । '**शाम्यति**' (४४८) वत् । दमनः । दमुनाः । दण्डः[3] ॥

[४५१] **श्रमु**=तपसि खेदे च । अकर्म० । सेट् । परस्मै० । पुषादिः । शमादिश्च ॥ श्राम्यति । इत्यादि '**शाम्यति**' (४४८) वत् । श्रान्तः ॥

[४५२] **भ्रमु**=अनवस्थाने । अकर्म० । सेट् । परस्मै० । पुषादिः । शमादिश्च ॥

१. भ्राम्यति ॥ २. भ्राम्यतु ॥ ३. अभ्राम्यत् ॥ भ्राम्येत् ॥ ५. बभ्राम । भ्रेमतुः[4]–बभ्रमतुः । भ्रेमुः–बभ्रमुः ॥ इत्यादि '**शाम्यति**' (४४८) वत् । **पक्षे**–भ्रमति[5] । भ्रमतु । अभ्रमत् । भ्रमेत् । इत्यादि-शबन्तरूपाणि । **कृत्सु**—भ्राम्यन्–भ्रमन् । भ्रूः[6] भ्रमरः[7] ।

[४५३] **क्षमू**=सहने । सकर्म० । वेट् । परस्मै० । पुषादिः शमादिश्च ॥

१. क्षाम्यति ॥ ५. **प्र०** चक्षाम । चक्षमतुः । चक्षमुः ॥

---

१. काङ्क्षा—ग्लानिरिति केषाञ्चिन्मतम् । तथा च प्रयोगः—तृष्णे मुधा ताम्यसि । २. "**अवसमन्धेभ्यस्तमसः** इत्यच् समासान्तः ॥ ३. जमन्ताड्डः । ४. **वा जृभ्रमुत्रसाम्** इति वा एत्वाभ्यासलोपौ । ५. **वा भ्राशे**(१४१)ति वा श्यन् । श्यनभावपक्षे शप् । ६. **भ्रमेश्च डूः** । ७. **अर्तिकमिभ्रमि—** इत्यादिना अरः ।

**म०** चक्षमिथ–चक्षन्थ[1] । चक्षमथुः । चक्षम ॥ **उ०** चक्षाम–चक्षम । चक्षमिव–चक्षण्व[2] । चक्षमिम–चक्षण्म ॥ शेषं शाम्यति (४४८) वत् ॥ क्षान्तिः । क्षमा इति तु क्षमूषः (१३३) ।

[४५४] **क्लमु=ग्लानौ** । अकर्म० । सेट् । परस्मै० । पुषादिः शमादिश्च ॥

१. क्लाम्यति ॥ २. क्लाम्यतु ॥ ३. अक्लाम्यत् ॥ ४. क्लाम्येत् ॥ **पक्षे**—क्लामति[3] । क्लामतु । अक्लामत् । क्लामेत् । इत्यादि-शबन्तरूपाणि । शेषं '**शाम्यति**' (४४८) वत् श्यन्नन्तरूपाणि । क्लान्तः ।

[४५५] **मदी=हर्षे** । अकर्म० । सेट् । परस्मै० । पुषादिः शमादिश्च ॥

१. माद्यति ॥ ५. **प्र०** ममाद । मेदतुः ॥ **म०** मेदिथ ॥ **उ०** ममाद–ममद । मेदिव ॥ ६. मदिता ॥ ७. मदिष्यति ॥ ८. मद्यात् । मद्यास्ताम् ॥ ९. अमदत् । अमदताम् ॥

**भावे**—मद्यते । ९. अमादि । **णिचि**—मदयति–मदयते । **सनि**—मिमदिषति । **यङि**—मामद्यते । **यङ्लुकि**—मामदीति–मामत्ति । **कृत्सु**—मदितव्यम् । मदनीयम् । मैद्यम्[4] । प्रमाद्यम् । मत्तः[5] । माद्यन् । मदितुम् । मदनम् । मदित्वा । उन्मद्य । मदनः । उन्मदिष्णुः[6] । मदिरा ॥

---

१. ऊदित्वाद्वेट् । चक्षम् + थ = **मोऽनुस्वारः** । चक्षं + थ = **अनुस्वारस्य ययि परसवर्णः** । चक्षन्थ । २. चक्षम् + व = **म्वोश्च** । (१३३) इति नत्वम् । ३. **वा भ्राश**—(१४१) श्यन्वा । **ष्ठिवुक्लमुचमां शिति** । (१४०) इति शप्यपि दीर्घः । ४. माद्यत्यनेन मन इति । **गदमद**—(३०३) इत्यनुपसर्गे यत् । ५. **श्वीदित**—(२१) इति नेट् । **न ध्याख्यापॄमूर्च्छिमदाम्** । इति निष्ठातस्य नत्वं न । ६. **अलंकृञ्निराकृञ्**—इति इष्णुच् ।

[४५६] **असु**=क्षेपणे । सकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. अस्यति ॥ २. अस्यतु ॥ ३. आस्यत् ॥ ४. अस्येत् ॥ ५. **प्र**० आस । आसतुः । आसुः ॥ **म**० आसिथ ॥ **उ**० आसिव ॥ ६. असिता ॥ ७. असिष्यति ॥ ८. अस्यात् ॥ ९. आस्थत्[1] । आस्थताम् ॥ १०. आसिष्यत् ॥ अभि=अभ्यस्यति आवृत्तिं करोति ॥

**कर्मणि**—अस्यते । **णिचि**—आसयति-ते । **सनि**—असिसिषति । अजादित्वाद् यङ्यङ्लुकौ न स्तः । **कृत्सु**—असितव्यम् । असनीयम् । अस्यम् । अस्तः । अस्तवान्[2] । अस्यन् । असितुम् । असनम् । असित्वा-अस्त्वा[3] । प्रास्य ॥

[४५७] **यसु**=प्रयत्ने । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. यस्यति[4]-यसति ॥ २. यस्यतु-यसतु ॥ ३. अयस्यत्-अयसत् ॥ ४. यस्येत्-यसेत् ॥ प्रयस्यति[5] । संयस्यति[6]--संयसति ॥ ५. ययास । येसतुः ॥ **म**० येसिथ । येसथुः । **उ**० ययास-ययस । येसिव ॥ ६. यसिता ॥ ७. यसिष्यति ॥ ८. यस्यात् ॥ ९. अयसत् ॥ १०. अयसिष्यत् ॥

**भावे**—यस्यते । ९. अयासि । **णिचि**—यासयति । आयासयते[7] । **सनि**—यियासिषति । **यङि**—यायस्यते । **यङ्लुकि**—यायसीति-यायस्ति । **कृत्सु**—यासितव्यम् । यसनीयम् । यास्यम् ।

---

१. पुषादित्वादङ् । **अस्यतेस्थुक्** । अङि परे । २. **यस्य विभाषा** । इति इण्णिषेधः । ३. **उदितो वा** (३५) इति वेट् । ४. **यसोऽनुपसर्गात्** । अनुपसृष्टात् यसः श्यन्वा स्यात् । ५. सम्भिन्नोपसर्गपूर्वात्तु नित्यं श्यन् । ६. **संयसश्च** । समुपसृष्टाद्यसुधातोस्तु वा श्यन् । ७. **अणावकर्मकादिति** परस्मैपदस्य **न पादम्याङ्**इत्यादिना निषेधः ।

यस्तः–यस्तवान् । आयस्तः । यस्यन्–यसन् । प्रयस्यन् । यसितुम् । यसनम् । यसित्वा–यस्त्वा । आयस्य ॥ आयासः । प्रयासः ॥

[४५८] **कुस**=संश्लेषणे । सकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. कुस्यति ॥ ५. चुकोस ॥ ६. कोसिता ॥ ८. कुस्यात् ॥ ९. अकुसत् ॥

**कर्मणि**—कुस्यते । **णिचि**—कोसयति–ते । **सनि**—चुकुसिषति–चुकोसिषति । **यङि**—चोकुस्यते । **यङ्लुकि**—चोकुसीति–चोकोस्ति । **कृत्सु**—कोसितव्यम् । कोसनीयम् । कोस्यम् । कुसितः । कुस्यन् । कोसितुम् । कोसनम् । कुसित्वा–कोसित्वा । प्रकुस्य ॥

[४५९] **लुट**=लोडने । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. लुट्यति । इत्यादि सर्वं **'कुस्यति'** (४५८) वत् ।

[४६०] **भ्रंशु**=अधः पतने । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. भ्रश्यति[1] ॥ २. भ्रश्यतु ॥ ३. अभ्रश्यत् ॥ ४. भ्रश्येत् ॥ ५. बभ्रंश । बभ्रंशतुः । बभ्रंशुः ॥ म० बभ्रंशिथ ॥ उ० बभ्रंश । बभ्रंशिव ॥ ६. भ्रंशिता ॥ ७. भ्रंशिष्यति ॥ ८. भ्रश्यात् ॥ ९. अभ्रशत्[2] ॥

**भावे**—भ्रश्यते । **णिचि**—भ्रंशयति । **सनि**—बिभ्रंशिषति । **यङि**—बाभ्रश्यते । **यङ्लुकि**—बाभ्रंशीति-बाभ्रंष्टि । **कृत्सु**—भ्रंशि-

१ अनिदिता—(३१) मिति नलोपः । २. पुषादित्वादङ् ।

तव्यम् । भ्रंशनीयम् । भ्रंश्यम् । भ्रष्टः । भ्रश्यन् । भ्रंशितुम् भ्रंशनम् । भ्रंशित्वा–भ्रष्ट्वा । विभ्रश्य ॥

[४६१] **कृश**=तनूकरणे । सकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. कृश्यति ॥ २. कृश्यतु ॥ ३. अकृश्यत् ॥ ४. कृश्येत् ॥ ५. प्र० चकर्श । चकृशतुः । चकृशुः ॥ म० चकर्शिथ । उ० चकृशिव ॥ ६. कर्शिता ॥ ८. कृश्यात् ॥ ९. अकृशत् ॥

**कर्मणि**—कृश्यते । ९. अकर्शि । **णिचि**—कर्शयति–ते । **सनि**—चिकृशिषति । **यङि**—चरीकृश्यते । **यङ्लुकि**—चर्कृशीति–चरीकृशीति–चरिकृशीति–चर्कर्शि–चरिकर्शि–चरीकर्शि । **कृत्सु**—कर्शितव्यम् । कर्शनीयम् । कृश्यम् । कृशः । प्रकृशितः । परिकृशितः । कृशितवान् । कृश्यन् । कर्शितुम् । कृशित्वा[3]–कर्शित्वा । परिकृश्य । कृशानुः । क्रशिमा । क्रशिष्ठः । क्रशीयान् ॥

[४६२] **ञितृष**=पिपासायाम् । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

तृष्यति ॥ ततर्ष ॥ इत्यादि **'कृश्यति'** (४६१) वत् । तृट् तृषौ तृषः । तृष्णक् । तृष्णजौ । तृष्णजः ।

[४६३] **हृष**=तुष्टौ । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. हृष्यति ॥ ५. जहर्ष । जहृषतुः । इत्यादि **'कृश्यति'** (४६१) वत् । क्त्वायां हर्षित्वा इत्येव । हृषितः । हृष्ट इति तु भौवादिकस्य ।

---

१. पुषादित्वादङ् । २. **अनुसर्गात्फुल्लक्षीबकृशोल्लाघाः** । इति तलोपः इडभावश्च निपात्यते । ३. **तृषिमृषिकृशेः काश्यपस्य** । इति वा किस्त्वम् ।

[४६४] **रुष=रोषे** । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. रुष्यति ॥ २. रुष्यतु ॥ ३. अरुष्यत् । ४. रुष्येत् ॥ ५. रुरोष । रुरुषतुः ॥ ६. रोषिता–रोष्टा ॥ ७. रोषिष्यति ॥ ८. रुष्यात् ॥ ९. अरुषत् ॥ १०. अरोषिष्यत् ॥

**भावे**—रुष्यते । **णिचि**—रोषयति–ते । **सनि**—रुरुषिषति–रुरोषिषति । **यङि**—रोरुष्यते । **यङ्लुकि**—रोरुषीति–रोरोष्टि । **कृत्सु**—रोषितव्यम्–रोष्टव्यम् । रोषणीयम् । रोष्यम् । रुष्यम् । रुषितः–रुष्टः[2] । रुष्यन् । रोषितुम्–रोष्टुम् । रोषणम् । रुषित्वा–रोषित्वा–रुष्ट्वा । प्ररुष्य ।

[४६५] **कुप=क्रोधे** । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

कुप्यति । इत्यादि **'कुस्यति'** (४९८) वत् ।

[४६६] **लुभ=गार्ध्ये** । गार्ध्यमाकांक्षा । सकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. लुभ्यति ॥ २. लुभ्यतु ॥ ३. अलुभ्यत् ॥ ४. लुभ्येत् ॥ ५. लुलोभ । लुलुभतुः ॥ ६. लोभिता–लोब्धा ॥ ७. लोभिष्यति ॥ ८. लुभ्यात् ॥ ९. अलुभत् ॥ १०. अलोभिष्यत् ॥ इत्यादि सर्वं **'कुस्यति'** (३५८) वत् ।

[४६७] **क्षुभ=सञ्चलने** । अकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. **तीषसहे** (३४४)ति इड्विकल्पः । २. **रुष्यमत्वर** (२२८) इति कल्पः ।

क्षुभ्यति। इत्यादि 'कुप्यति' (३६५) वत्। निष्ठायां क्षुब्ध-स्वान्तध्वान्ते-ति अनिट्।

[४६८] क्लिदू=आर्द्रीभावे। अकर्म०। वेट्। परस्मै०। पुषादिः॥

१. क्लिद्यति॥ २. क्लिद्यतु॥ ३. अक्लिद्यत्॥ ४. क्लिद्येत्॥ ५. प्र० चिक्लेद। चिक्लिदतुः। चिक्लिदुः। म० चिक्लेदिथ-चिक्लेत्थ। चिक्लिदथुः। चिक्लिद॥ उ० चिक्लेद। चिक्लिदिव-चिक्लिद्व। चिक्लिदिम-चिक्लिद्म॥ ६. क्लेदिता-क्लेत्ता॥ ७. क्लेदिष्यति-क्लेत्स्यति॥ ८. क्लिद्यात्॥ ९. अक्लिदत्॥ १०. अक्लेदिष्यत्-अक्लेत्स्यत्॥

**भावे**—क्लिद्यते। **णिचि**—क्लेदयति। **सनि**—चिक्लिदिषति। चिक्लित्सति। **यङि**—चेक्लिद्यते। **यङ्लुकि**—चेक्लिदीति-चेक्लेत्ति। **कृत्सु**—क्लेदितव्यम्-क्लेत्तव्यम्। क्लेदनीयम्। क्लेद्यम्। क्लिन्नः। क्लिद्यन्। क्लेदितुम्-क्लेत्तुम्। क्लेदनम्। क्लिदित्वा-क्लेदित्वा। विक्लिद्य। विक्लेदनम्। विक्लित्तिः।

[४६९] ऋधु=वृद्धौ। अकर्म०। सेट्। परस्मै०। पुषादिः॥

१. ऋध्यति॥ २. ऋध्यतु॥ ३. आर्ध्यत्॥ ४. ऋध्येत्॥ ५. प्र० आनर्ध[1]। आनृधतुः॥ म० आनर्धिथ॥ उ० आनर्ध। आनृधिव॥ ६. अर्धिता॥ ७. अर्धिष्यति॥ ८. ऋध्यात्। ऋध्यास्ताम्॥ ९. आर्धत्[2]॥ १०. आर्धिष्यत्॥

१. **तस्मान्नुड् द्विहलः**। इति नुट्। ऋकारैकदेशो रेफो हल्त्वेन गृह्यते इति द्विहल्त्वम्। २. पुषादित्वादङ्। **आडजादीनाम्**। (२) इत्याट्।

**भावे**—ऋध्यते । **णिचि**—अर्धयति । ९. आर्दिधत् । **सनि**—अर्दिधिषति[1]-ईर्त्स्यति[2] । **कृत्सु**—अर्धितव्यम् । अर्धनीयम् । ऋध्यम् । ऋद्धः[3] । ऋध्यन् । अर्धितुम । अर्धनम् । अर्धित्वा-ऋद्ध्वा । समृध्य । समृद्धिः[4] ॥

[४७०] **गृधु**=अभिकाङ्क्षायाम् । सकर्म० । सेट् । परस्मै० । पुषादिः ॥

१. गृध्यति ॥ जगर्ध ॥ इत्यादि '**कुश्यति**' (४६१) वत् । गृध्नुः[5] । गृधित्वा[6]-गर्धित्वा । गृद्धः । गर्धयते[7] माणवकं=वञ्चयतीत्यर्थः ॥

इति दिवादयः ॥ ४ ॥

१. **सनीवन्त**—(१६३) इति इड्विकल्पः । तत्रेटि गुणेऽजादित्वात् **नन्द्राः संयोगादयः** । (१७) इति रेफवर्जितस्य द्वितीयस्यैकाचो द्विर्वचनम् । २. अनिटि तु **आप्ज्ञप्यृधामीत्** । आप् ज्ञप् ऋध् एषां अचः ईत्स्यात् । इति ईत्वे रपरत्वे **अत्र लोपोभ्यासस्य** । सनिर्मीमा इत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । इत्यभ्यासलोपः । **खरि चे ति** धकारस्य चर्त्वम् । ३. ऋद्धं हि राज्यं पदमैन्द्रमाहुः । इति कालिदासः । ४. मधुसमृद्धिसमेधितमेधया-इति माघः । ५. त्रसिगृधिधृषिक्षिपेः क्नुः । इति क्नुः । अगृध्नुराददे सोर्थानिति रघुः । ६. उदित्त्वादिड्विकल्पः । ७. गृधिवञ्च्योः प्रलम्भने । इत्यकर्त्रभिप्रायेपि तङ् । अन्यत्र श्वानं गर्धयति गर्धयते इति वा । गर्धमस्योत्पादयतीत्यर्थः ।

॥ श्रीः ॥

# बृहद्धातुरूपावल्याम् ।

## अथ स्वादयः ॥ ५ ॥

[४७१] षुञ्=अभिषवे । अभिषवः स्नपनं पीडनं स्नानं सुरायाः सन्धानं च । तत्र स्नानेऽकर्मकः अन्यत्र सकर्मकः । अनिट् । उभयपदी । ञित् ॥

### परस्मैपदे

१. प्र० सुनोति[1] । सुनुतः । सुन्वन्ति[2] ॥ म० सुनोषि । सुनुथः । सुनुथ ॥ उ० सुनोमि । सुन्वः[3]–सुनुवः । सुन्मः–सुनुमः ॥ २. प्र० सुनोतु–सुनुतात् । सुनुताम् । सुन्वन्तु ॥ म० सुनु[4]–सुनुतात् । सुनुतम् । सुनुत ॥ उ० सुनवानि । सुनवाव । सुनवाम ॥ ३. प्र० असुनोत् । असुनुताम् । असुन्वन् ॥ म० असुनोः । असुनुतम् । असुनुत ॥ उ० असुनवम् । असुन्व–असुनुव । असुन्म–असुनुम ॥ ४. प्र० सुनुयात् । सुनुयाताम् । सुनुयुः ॥ म० सुनुयाः । सुनुयातम् । सुनुयात ॥ उ० सुनुयाम् । सुनुयाव । सुनुयाम ॥ ५. प्र० सुषाव[5] । सुषुवतुः[6] । सुषुवुः ॥ म० सुषविथ[7]–सुषोथ । सुषुवथुः ।

१. **स्वादिभ्यः श्नुः** । शपोपवादः । षु तिप् इति स्थिते षु नु ति= **धात्वादेः षः सः** । (१९) इति सुनु+ति इति भवति । श्नुप्रत्ययस्य शित्वेन सार्वधातुकत्वात् **सार्वधातुकार्धधातुकयो**– (पृ० ३) रिति गुणः । २. **हुश्नुवो**–(२८५) रिति यण् । ३. **लोपश्चान्यतरस्यां म्वोः** । (१८०) इति उकारलोपः । ४. **उतश्च प्रत्ययादसंयोगपूर्वात्** । (१७०) इति हेर्लुक् । ५. **धात्वादेः षः सः** । अजन्तसादित्वात्षोपदेशत्वम् । सु इति भवति । **लिटि धातो**रिति द्वित्वे सु सु णल् इति स्थिते द्वितीयसकारस्य आदेशसकारत्वात्षत्वे सुषु अ इति जाते णित्वाद्वृद्धौ आवादेशे च 'सुषाव' इति । ६. **अचि श्नुधा**— (पृ० ११) त्विति उवङ् । ७. भारद्वाजनियमादिट् ।

सुषुव ॥ उ० सुषाव-सुषव । सुषुविव । सुषुविम ॥ ६. प्र० सोता ॥ म० सोतासि ॥ उ० सोतास्मि ॥ ७. प्र० सोष्यति ॥ म० सोष्यसि ॥ उ० सोष्यामि ॥ ८. प्र० सूयात्[1] । सूयास्ताम् । सूयासुः ॥ म० सूयाः ॥ उ० सूयाम् ॥ ९. प्र० असावीत्[2] । असाविष्टाम्[3] । असाविषुः ॥ म० असावीः । असाविष्टम् । असाविष्ट ॥ उ० असाविषम् । असाविष्व । असाविष्म ॥ १०. असोष्यत् ॥ अभिषुणोति[4] । अभ्यषुणोत्[5] । अभिसुषाव[6] । अभिसोष्यति[7] ।

## आत्मनेपदे—

१. प्र० सुनुते । सुन्वाते । सुन्वते[8] ॥ म० सुनुषे । सुन्वाथे । सुनुध्वे ॥ उ० सुन्वे । सुनुवहे-सुन्वहे । सुनुमहे-सुन्महे ॥ २. प्र० सुनुताम् । सुन्वाताम् । सुन्वताम् ॥ म० सुनुष्व । सुन्वाथाम् । सुनुध्वम् ॥ उ० सुनवै । सुनवावहै । सुनवामहै ॥ ३. प्र० असुनुत । असुन्वाताम् । असुन्वत ॥ म० असुनुथाः । असुन्वाथाम् । असुनुध्वम् ॥ उ० असुन्वि । असुनुवहि-असुन्वहि । असुनुमहि--असुन्महि ॥ ४. प्र० सुन्वीत । सुन्वीयाताम् । सुन्वीरन् ॥ म० सुन्वीथाः । सुन्वीयाथाम् । सुन्वीध्वम् ॥ उ० सुन्वीय । सुन्वीवहि । सुन्वीमहि ॥ ५. प्र० सुषुवे । सुषुवाते । सुषुविरे ॥ म० सुषुविषे । सुषुवाथे ।

---

१. **अकृत्सार्वधातुकयो**—(९४) रिति दीर्घः । २ **अस्ति सिचोऽपृक्ते** । इति ईट् । ३. **स्तुसुधूञ्भ्यः परस्मैपदेषु** । (२८४) इति सिच इट् । ४ **उपसर्गात्सुनोती**त्यादिना षत्वम् । ५. **प्राक्सितादड्व्यवायेऽपि** । ६. **स्थादिष्वभ्यासेन चाभ्यासस्य** । ७. **सुनोतेः स्यसनोः** । स्ये सनि च परे सुञः षो न स्यात् । ८ **आत्मनेपदेष्वनतः** ।

सुषुविढ्वे—ध्वे ॥ उ० सुषुवे । सुषुविवहे । सुषुविमहे ॥ ६. सोता । सोतासे ॥ ७. सोष्यते ॥ ८. सोषीष्ट ॥ ९. असोष्ट । असोषाताम् ॥ ढ्वम् ॥ १०. असोष्यत ॥

कर्मादिषु सर्वं 'सवति' (२८४) वत् । **कृत्सु**—सोतव्यः । सवनीयः । सव्यः—साव्यः । सुतः । सुन्वन्—सुन्वानः । सुन्वती । सोतुम् । सुत्वा । अभिषुत्य[1] । सोमसुत् । सुत्या । सुत्वा । सुत्वानौ । सुरा । राजसूयः ॥

[४७२] **षिञ्**=बन्धने । सकर्म० । अनिट् । उभय० ।

## परस्मैपदे—

१. **प्र०** सिनोति । सिनुतः । सिन्वन्ति ॥ **म०** सिनोषि ॥ **उ०** सिनोमि । सिनुवः—सिन्वः ॥ २. **प्र०** सिनोतु ॥ **म०** सिनु ॥ **उ०** सिनवानि ॥ ३. **प्र०** असिनोत् ॥ **म०** असिनोः ॥ **उ०** असिनवम् । असिनुव—असिन्व ॥ ४. सिनुयात् । सिनुयाताम् ॥ ५. **प्र०** सिषाय । सिष्येतुः[2] । सिष्युः ॥ **म०** सिषयिथ—सिषेथ । सिष्यथुः । सिष्य ॥ **उ०** सिषाय—सिषय । सिष्यिव । सिष्यिम ॥ ६. सेता ॥ ७. सेष्यति ॥ ८. सीयात् । सीयास्ताम् ॥ ९. असैषीत् । असैष्टाम् ॥ १०. असेष्यत् ॥

## आत्मनेपदे—

१. **प्र०** सिनुते । सिन्वाते । सिन्वते[3] ॥ **म०** सिनुषे । सिन्वाथे । सिनुध्वे ॥ **उ०** सिन्वे । सिनुवहे—सिन्वहे ॥ २. **प्र०** सिनुताम् ।

---

१. **ह्रस्वस्य पिति कृति**—(३००) इति तुक् । २ **एरनेकाच** इति यण् । ३ **आत्मनेपदेष्वनतः** ।

सिन्वाताम् । सिन्वताम् ॥ **म०** सिनुष्व ॥ **उ०** सिनवै । सिनवावहै ॥ **३. प्र०** असिनुत । असिन्वाताम् ॥ **म०** असिनुथाः ॥ **उ०** असिन्वि । असिनुवहि–असिन्वहि ॥ **४.** सिन्वीत ॥ **५. प्र०** सिष्ये । सिष्याते । सिष्यिरे ॥ **म०** सिष्यिषे । सिष्याथे । सिष्यिढ्वे–ध्वे ॥ **उ०** सिष्ये । सिष्यिवहे । सिष्यिमहे ॥ **६. प्र०** सेता ॥ **म०** सेतासे ॥ **७.** सेष्यते ॥ **८.** सेषीष्ट ॥ **९.** असेष्ट[1] । असेषाताम् ॥ **१०.** असेष्यत ॥

**भावे**—सीयते । **९.** असायि । **णिचि**—साययति । **९.** असीषयत् । **सनि**—सिषीषति–ते । **यङि**—सेषीयते । **यङ्लुकि**—सेषयीति–सेषेति । **कृत्सु**—सयनीयम् । सेयम् । सितः–सिनः[2] । सिन्वन् । सिन्वती । सिन्वानः । सेतुम् । सयनम् । सित्वा । सेत्रम् । सेतुः । सीरः । केशेषु प्रसितः[3] । केशैरिति वा ॥

[४७३] डुमिञ्=प्रक्षेपणे । सकर्म० । अनिट् । उभय० ॥

## परस्मैपदे—

**१.** मिनोति ॥ **२.** मिनोतु ॥ **३.** अमिनोत् ॥ **४.** मिनुयात् ॥ **५. प्र०** ममौ[4] । मिम्यतुः । मिम्युः ॥ **म०** ममिथ[5]–ममाथ ।

---

१. लुङि दशमी विधा । २. सिता पाशेन सूकरी । **सिनोतेर्ग्रासकर्तृकस्येति वक्तव्यम्** । सिनो ग्रासः स्वयमेव । ३ **प्रसितोत्सुकाभ्यां तृतीयाऽन्यतरस्याम्** । ४. लिटि, **मीनाति मिनोति दीङां ल्यपि च** । एषामात्वं स्यात् ल्यपि अशित्येज्निमित्ते च । इति मा इति जाते द्वित्वे मामा । ह्रस्वे ममा+णलि=आत औत्वे ममौ । ५. थलि **आतो लोप इटि च** (२६४)इत्याकारलोपे मम्+इथ=ममिथ । इडभावे मा, मामा ह्रस्वः । ममा+थ ।

मिम्यथुः । मिम्य ॥ उ० ममौ । मिम्यिव । मिम्यिम ॥ ६. प्र० माता ॥ म० मातासि ॥ उ० मातास्मि ॥ ७. मास्यति ॥ ८. मीयात्[1] । मीयास्ताम् ॥ ९. अमासीत्[2] । अमासिष्टाम् ॥

## आत्मनेपदे—

१. मिनुते ॥ २. मिनुताम् ॥ म० मिनुष्व ॥ उ० मिनवै ॥ ३. अमिनुत । अमिन्वाताम् ॥ म० अमिनुथाः ॥ उ० अमिन्वि । अमिनुवहि-अमिन्वहि ॥ ४. मिन्वीत । मिन्वीयाताम् ॥ ५. प्र० मिम्ये । मिम्याते ॥ म० मिम्यिषे ॥ उ० मिम्ये । मिम्यिवहे ॥ ६. माता ॥ मातासे ॥ ७. मास्यते ॥ ८. मासीष्ट ॥ ९. अमास्त । अमासाताम् ॥ १०. अमास्यत ॥

**कर्मणि**—मीयते । ५. ममे । ९. अमायि । **णिचि**—मापयति-ते । **सनि**—मित्सति[3]-ते । **यङि**—मेमीयते । **यङ्लुकि**—मामेति-मामाति । **कृत्सु**—मातव्यः । मानीयः । पाय्यम्[4]=मानम् । मेयः । मितः । मिन्वन् । मिन्वानः । मातुम् । मानम् । मित्वा । प्रमाय[5] । अनु=अनुमितौ अनुमिनोति । उप=उपमाने उपमिनोति । उपमितिः । उपमानम् । प्र-प्रमाणे=प्रमिणोति । प्रमितिः । प्रमाणम् ॥

[४७४] **चिञ्**=चयने । द्विकर्म० । अनिट् । उभय० ॥

---

१. यासुटि कित्त्वादात्वाभावे **अकृत्सार्वधातुकयो**—(९४)रिति दीर्घः । २. आत्वे सगिटौ । लुङि चतुर्थी विधा । ३. **इको झल्** (पृ० २६) इति सनः कित्वात् **अज्झन**—(९४) इति दीर्घे **सनि मीमा**—(२६४) इति इस्भावे **सस्यार्धधातुके** (२०४) इति सस्य तत्वम् । **अत्र लोपोऽभ्यासस्य** इत्यभ्यासलोपः । ४. **पाय्यधाय्ये**—(३८६)ति मानार्थे निपातः । ५. **मीनातिमिनोती**—(४७३)**ति** आत्वम् ।

## परस्मैपदे—

१. प्र० चिनोति । चिनुतः । चिन्वन्ति ॥ म० चिनोषि । चिनुथः । चिनुथ ॥ उ० चिनोमि । चिनुवः–चिन्वः । चिनुमः–चिन्मः ॥ २. प्र० चिनोतु–चिनुतात् । चिनुताम् । चिन्वन्तु । म० चिनु–चिनुतात् । चिनुतम् । चिनुत ॥ उ० चिनवानि । चिनवाव । चिनवाम ॥ ३. प्र० अचिनोत् ॥ म० अचिनोः ॥ उ० अचिनवम् । अचिनुव–अचिन्व । अचिनुम–अचिन्म ॥ ४. चिनुयात् । चिनुयाताम् । चिनुयुः ॥ ५. प्र० चिकाय[1] । चिक्यतुः । चिक्युः ॥ म० चिकयिथ–चिकेथ । चिक्यथुः । चिक्य ॥ उ० चिकाय–चिकय । चिक्यिव । चिक्यिम ॥ पक्षे—चिचाय[2] । चिच्यतुः । चिच्युः ॥ इत्यादि ॥ ६. प्र० चेता ॥ म० चेतासि ॥ उ० चेतास्मि ॥ ७. चेष्यति ॥ ८. चीयात् । चीयास्ताम् ॥ ९. अचैषीत्[3] । अचैष्टाम् ॥ १०. अचेष्यत् ॥ प्रणिचिनोति[4] ॥

## आत्मनेपदे—

१. चिनुते ॥ २. चिनुताम् ॥ म० चिनुष्व ॥ उ० चिनवै ॥ ३. अचिनुत ॥ म० अचिनुथाः ॥ उ० अचिन्वि । अचिनुवहि–अचिन्वहि ॥ ४. चिन्वीत । चिन्वीयाताम् । चिन्वीरन् ॥ ५. प्र० चिक्ये । चिक्याते । चिक्यिरे ॥ पक्षे—चिच्ये । चिच्याते । चिच्यिरे । ६. चेता ॥ चेतासे ॥ चेतास्वहे ॥ ७. चेष्यते ॥ ८. चेषीष्ट ॥ ९. अचेष्ट । अचेषाताम् ॥ १०. अचेष्यत ॥

---

१. **विभाषा चेः** । अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिंटि च । इति कुत्वपक्षे रूपम् । २. कुत्वाभावपक्षे रूपम् । ३. लुङि षष्ठी विधा । ४. **नेर्गदे—**(३७)ति णत्वम् ।

**कर्मणि**—चीयते । ९. अचायि । **णिचि**—चाययंति-ते । चापयंति-ते । **सनि**—चिचीषति-चिकीषति । **यङि**—चेचीयते । **यङ्लुकि**—चेचेति-चेचयीति । **कृत्सु**—चेतव्यः । चयनीयः । चेयः । निकाय्यः । सञ्चाय्यः । परिचाय्यः । उपचाय्यः । चित्यः । अग्निचित्या । चितः । चिन्वन् । चिन्वानः । चेतुम् । चयनम् । चित्वा । विचित्य । उप=वर्धने उपचनोति । अप-अपचये । (सं+उत्) (अभि+उत्) समुच्चये=समुच्चिनोति-अभ्युच्चिनोति । निर्-निश्चये=निश्चिनोति । परि-परिचये=परिचिनोति । वि-अन्वेषणे=विचिनोति । विचिन्वन् । "सीतां विंचिन्वन् पथि चारणानाम्" इति भोजः । सम्=सञ्चये । नि-व्याप्तौ=निचयः । इत्यादि ॥ उच्चैः । नीचैः ॥

[४७५] **स्तृञ्**=आच्छादने । सकर्म० । अनिट् । उभय० ॥

## परस्मैपदे—

१. **प्र०** स्तृणोति ॥ **म०** स्तृणोषि ॥ **उ०** स्तृणोमि स्तृणुवः-स्तृण्वः ॥ २. स्तृणोतु ॥ **म०** स्तृणु ॥ **उ०** स्तृणवानि ॥ ३. **प्र०** अस्तृणोत् ॥ **म०** अस्तृणोः ॥ अस्तृणवम् । अस्तृणुव-

१. **चिस्फुरोर्णौ** । आत्वं वा स्यात् । आत्वाभावपक्षे चि+णि इति स्थिते, **अचो ञ्णिति** । (पृ० २०) इति वृद्धौ, चै+इ इति जाते, आयादेशे चायि+शप्+ति=**सार्वधातुकार्धधातुकयो**(पृ० ३)रिति गुणे अयादेशे=चाययति । २. आत्वपक्षे **अर्तिह्री**—(१६४)ति पुकि रूपम् । ३. **विभाषा चेः** । ४. **पाय्यसान्नाय्ये**—(३८६)ति निवासार्थे निपातः । ५. **क्रतौ कुण्डपाय्यसञ्चाय्यौ** । इति क्रत्वर्थे निपातः । ६. **अग्नौ परिचाय्योपचाय्यसमूह्याः** इति निपातः । ७. **चित्याग्निचित्ये च** । इति निपातः । ८. **उदिचेर्डैसिः** । ९. **नौ दीर्घश्च**

अस्तृण्व ॥ ४. स्तृणुयात् । स्तृणुयाताम् ॥ ५. प्र० तस्तार[1] । तस्तरतुः[2] । तस्तरुः ॥ म० तस्तर्थ[3] । तस्तरथुः । तस्तर ॥ उ० तस्तार–तस्तर । तस्तरिव[4] । तस्तरिम ॥ ६. स्तर्ता ॥ म० स्तर्तासि ॥ ७. स्तरिष्यति[5] ॥ ८. स्तर्यात्[6] । स्तर्यास्ताम् ॥ ९. अस्तार्षीत्[7] । अस्तार्ष्टाम् ॥ १०. अस्तरिष्यत् ॥

## आत्मनेपदे—

१. स्तृणुते ॥ २. प्र० स्तृणुताम् ॥ म० स्तृणुष्व ॥ उ० स्तृणवै ॥ ३. प्र० अस्तृणुत । अस्तृण्वाताम् । अस्तृण्वत ॥ म० अस्तृणुथाः ॥ उ० अस्तृण्वि ॥ ४. स्तृण्वीत ॥ ५. प्र० तस्तरे ॥ म० तस्तरिषे[8] । तस्तरिढ्वे–ध्वे ॥ उ० तस्तरिवहे ॥ ६. प्र० स्तर्ता ॥ म० स्तर्तासे ॥ ७. स्तरिष्यते ॥ ८. स्तारिषीष्ट[9]-स्तृषीष्ट । स्तारिषीयास्ताम् ॥ म० ढ्वम्–ध्वम् ॥ ९. प्र० अस्तारिष्ट[10]–अस्तृत[11] । अस्तृषाताम् ॥ म० ढ्वम् ॥ १०. अस्तरिष्यत ॥

**कर्मणि**—स्तर्यते । ९. अस्तारि । **णिचि**—स्तारयति–ते । **सनि**—तिस्तीर्षति-ते । **यङि**—तास्तर्यते । **यङ्लुकि**—तस्तर्ति–त-

---

१. तस्तार सरवाव्याप्तैः स क्षौद्रपटलैरिव—इति रघुः । २. **ऋतश्च संयोगादेर्गुणः** (२७८) इति लिटि गुणः । ३. **अचस्तास्वत्**—(पृ० ७) दिति थलि नित्यानिट् । ४. क्रादिनियमादिट् । ५. **ऋद्धनोः स्ये** । (२६०) इति इट् । ६. **गुणोर्तिसंयोगाद्योः** । (२७८) इति गुणः । ७. लुङि षष्ठी विधा । ८. **ऋतश्च संयोगादेर्गुणः** । इति लिटि गुणः । ९. **ऋतश्च संयोगादेः** । ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । इति विकल्पेन गुणः । १०. इट्पक्षे गुणः । ११. इडभावपक्षे **ह्रस्वादङ्गात्** । (२६०) इति सिचो लोपः ।

स्तरीति । कृत्सु—स्तर्तव्यम् । स्तरणीयम् । स्तार्यम् । स्तृतः । स्तृण्वन् । स्तृण्वानः । स्तर्तुम् । स्तरणम् । स्तृत्वा । आस्तृत्य । आ-आस्तरणम्[1] । वि-विस्तारयति ॥

[४७६] कृञ्=हिंसायाम् । सकर्म० । अनिट् । उभय० ॥

## परस्मैपदे—

१. कृणोति ॥ उ० कृणुवः-कृण्वः ॥ २. कृणोतु ॥ ३. अकृणोत् ॥ ४. कृणुयात् ॥ ५. प्र० चकार । चक्रतुः । चक्रुः ॥ म० चकर्थ । चक्रथुः । चक्र ॥ उ० चकार-चकर । चकृव । चकृम ॥ ६. कर्ता ॥ ७. करिष्यति ॥ ८. क्रियात् । क्रियास्ताम् ॥ ९. अकार्षीत् । अकार्ष्टाम् ॥ १०. अकरिष्यत् ॥

## आत्मनेपदे—

१. कृणुते ॥ २. कृणुताम् ॥ ३. अकृणुत ॥ ४. कृण्वीत ॥ ५. प्र० चक्रे । चक्राते । चक्रिरे ॥ म० चकृषे । चक्राथे । चकृढ्वे ॥ उ० चक्रे । चकृवहे । चकृमहे ॥ ६. कर्ता ॥ से ॥ हे ॥ ७. करिष्यते ॥ ८. कृषीष्ट ॥ ढ्वम् ॥ ९. अकृत[2] । अकृषाताम् ॥ म० अकृथाः ॥ अकृढ्वम् ॥ १०. अकरिष्यत ॥

**कर्मणि**—क्रियते । ९. अकारि । **णिचि**—कारयति-ते । ९. अचीकरत्-त । **सनि**— चिकीर्षति-ते । **यङि**—चेक्रीयते । **यङ्लुकि**—

---

१. तमालपत्रास्तरणासु रन्तुम्—इति रघुः । २. **ह्रस्वादङ्गात्** । (२६०) इति सिचो लोपः । दशमो लुङ् ।

चर्कर्ति–चर्करीति इत्यादि । **कृत्सु**—कर्तव्यम् । करणीयम् । कार्यम् । कृतः । कृण्वन् । कृण्वती । कृण्वानः । कर्तुम् । करणम् । कृत्वा । उत्कृत्य ।

[४७७] **वृञ्**=वरणे । सकर्म० । सेट् । उभयपदी ।

## परस्मैपदे—

१. वृणोति ॥ २. वृणोतु ॥ ३. अवृणोत् ॥ ४. वृणुयात् । वृणुयाताम् ॥ ५. **प्र०** ववार । वव्रतुः । वव्रुः ॥ **म०** ववरिथ । वव्रथुः । वव्र ॥ **उ०** ववार–ववर । ववृव । ववृम ॥ ६. वरिता[1]–वरीता ॥ ७. वरिष्यति–वरीष्यति ॥ ८. व्रियात् ॥ ९. [2]अवारीत् ॥ १०. अवरिष्यत्–अवरीष्यत् ॥

## आत्मनेपदे—

१. वृणुते ॥ २. वृणुताम् ॥ ३. अवृणुत । अवृण्वाताम् ॥ ४. वृण्वीत ॥ ५. **प्र०** वव्रे । वव्राते । वव्रिरे ॥ **म०** ववृषे । वव्राथे । ववृढ्वे ॥ **उ०** वव्रे । ववृवहे । ववृमहे ॥ ६. वरिता–वरीता ॥ **म०** वरितासे–वरीतासे ॥ ७. वरिष्यते–वरीष्यते ॥ ८. [3]वृषीष्ट–वरिषीष्ट ॥ ९. अवृत । अवृषाताम् ॥ १०. अवरिष्ट[4]–अवरीष्ट ॥

---

१. **वृतो वा** (२९२) । इति इटो वा दीर्घः । २. सप्तमो लुङ् । ३. **लिङ्सिचोरात्मनेपदेषु** । वृङ् वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात् तङि । **न लिङि** । वृतो लिङ इटो दीर्घो न स्यात् । ४. लुङि एकादशी विधा ।

**कर्मणि**—व्रियते । **णिचि**—वारयति–ते । **सनि**—विवरि[1]षति–ते । विवरीषति–ते । [2]वुवूर्षति–ते । **यङि**—वेव्रीयते । **यङ्लुकि**—वरिवर्ति–वरीवर्ति । **कृत्सु**—वरितव्यम्–वरीतव्यम् । वरणीयम् । वर्यम् । वृत्त्या कन्या । वृतः । वृण्वन् । वृण्वती । वृण्वानः । वरितुम्–वरीतुम् । वरणम् । वृत्वा । विवृत्य । पतिंवरा कन्या । नीवारः । प्रावारः । [3]वरेण्यः । वर्षम् । वर्मा । वरुणः । [4]वरुणानी । वर्णः । सम्–सङ्कोचने=संवृणुते । वि–विवृणोति । विवृण्वन् । विवृण्वती शैलसुतापि भावम्–इति कालिदासः ॥

[४७८] धूञ्=कम्पने । सकर्म० । अनिट् । उभय० । ऊदित् ॥

१. **प्र०** धूनोति । धूनुतः । धून्वन्ति ॥ **म०** धूनोषि ॥ **उ०** धूनोमि । धूनुवः–धून्वः । धूनुमः–धून्मः ॥ २. **प्र०** धूनोतु–धूनुताम् ॥ **म०** धूनु–धूनुतात् ॥ **उ०** धूनवानि । धूनवाम ॥ ३. **प्र०** अधूनोत् ॥ **म०** अधूनोः ॥ **उ०** अधूनवम् । अधूनुव–अधून्व ॥ ४. धूनुयात् ॥ ५. **प्र०** दुधाव । दुधुवतुः । दुधुवुः ॥ **म०** दुधविथ–दुधोथ । दुधुवथुः । दुधुव ॥ **उ०** दुधाव–दुधव । दुधुविव ॥ ६. **प्र०** धविता–धोता ॥ **म०** धवितासि ॥ **उ०** धवितास्मि ॥ ७. धविष्यति–धोष्यति ॥ ८. धूयात् । धूयास्ताम् ॥ ९. **प्र०** [5]अधावीत् । अधाविष्टाम् ॥ १०. अधविष्यत् ॥

---

१. **इट् सनि वा** । (२९२) इति वेट् । **वृतो वे**—(४७७)ति दीर्घपक्षे विवरीषति । २. अनिट्पक्षे **इको झल्** (पृ० २६) इति सनः कित्वान्न गुणः । **अज्झने**—(९४)ति दीर्घः । ३. **वृञ एण्यः** । ४. **इन्द्रवरुणभवे**-त्यादिना ङीषानुगौ । ५. **स्तुसुधूञ्भ्यः** (२८४) इति सिच इट् ।

## आत्मनेपदे—

१. धूनुते ॥ २. धूनुताम् । धून्वाताम् । धून्वताम् ॥ म० धूनुष्व ॥ उ० धूनवै ॥ ३. अधूनुत ॥ म० अधूनुथाः ॥ अधून्वि । अधूनुवहि-अधून्वहि ॥ ४. धून्वीत ॥ ५. प्र० दुधुवे । दुधुवाते । दुधुविरे ॥ म० दुधुविषे । उ० दुधुवे । दुधुविवहे ॥ ६. धोता—धविता ॥ ७. धोष्यते-धविष्यते ॥ ८. धोषीष्ट—धविषीष्ट ॥ ९. अधोष्ट—अधविष्ट ॥ १०. अधोष्यत -अधविष्यत ॥

**कर्मणि**—धूयते । **णिचि** धावयति--ते । **सनि** दुधूषति—ते । **यङि**—दोधूयते । **यङ्लुकि**—दोधोति । **कृत्सु**—धोतव्यः । धवनीयः । धव्यः—धाव्यः । धूतः । धूतवान् । धून्वन् । धून्वती । धून्वानः । धोतुम् । धवनम् । धूत्वा । विधूय ॥

**धुञ्**=कम्पने । इति ह्रस्वान्तपक्षे ऊदित्त्वप्रयुक्तानिड्रूपवर्जं धूनोतिवत् । धातुकोशं पश्यत ।

[४७९] टु दु=उपतापे । सकर्म० । अनिट् । परस्मै० ॥

१. दुनोति ॥ २. दुनोतु ॥ ३. अदुनोत् ॥ ४. दुनुयात् ॥ ५. दुदाव ॥ म० दुदविथ—दुदोथ ॥ उ० दुदाव—दुदव । दुदुविव ॥ ६. दोता ॥ ७. दोष्यति ॥ ८. दूयात् । दूयास्ताम् ॥ ९. अदौषीत् ॥ १०. अदोष्यत् ॥

**कर्मणि**—दूयते । ५. ९. अदावि **णिचि**-दावयति—ते । ९. अदीदवत् । **सनि**—दुदूषति । ९. अदुदूषीत् । **यङि**—दोदूयते । **यङ्लुकि**—दोदोति—दोदवीति । **कृत्सु**—दोत-

व्यम् । दवनीयम् । दव्यम्—आवश्यके तु-दाव्यम् । दुतः । दुन्वन् । दुन्वती । दोतुम् । दवनम् । दुत्वा । विदुत्य । दवथुः ॥

[४८०] हि=गतौ वृद्धौ च । अकर्म० । अनिट् । परस्मै० ।

१. प्र० हिनोति । हिनुतः । हिन्वन्ति ॥ म० हिनोषि ॥ उ० हिनोमि । हिनुवः-हिन्वः ॥ २. प्र० हिनोतु ॥ म० हिनु ॥ उ० हिनवानि ॥ ३. अहिनोत् ॥ ४. हिनुयात् । ५. प्र० जिघाय । जिघ्यतु । जिघ्युः ॥ म० जिघयिथ-जिघेथ । जिघ्य ॥ उ० जिघाय-जिघय । जिघ्यिव ॥ ६. हेता ॥ ७. हेष्यति ॥ ८. हीयात् । हीयास्ताम् ॥ ९. अहैषीत् । अहैष्टाम् ॥ १०. अहेष्यत् ॥ प्र+हि=प्रेषणे । प्रहिणोमि । प्राहिणवम् ॥

**भावे**—हीयते । ५. जिघ्ये । ९. अहायि । **णिचि**—हाययति-ते । अजीहयत्-त । **सनि**—जिघीषति । **यङि**—जेघीयते । **यङ्लुकि**—जेघयीति-जेघेति ॥ **कृत्सु**—हेतव्यः । हयनीयः । हेयः । हित । हिन्वन् । हिन्वती । हेष्यन् । हेतुम् । हित्वा । प्रहित्य ॥ हयः-हयी । हेतिः । हेतुः ।

[४८१] पृ=प्रीतौ । सकर्म० । अनिट् । परस्मै० ॥

---

१. **ह्रस्वस्य पिति कृति तुक्** (३००) इति तुक् । २. **लिटि धातो**—(पृ० ७ रिति द्वित्वे हि हि इति जाते । **कुहोश्चुः** (पृ० ७) इति अभ्यासस्य चुत्वे झि हि इति जाते **अभ्यासे चर्च**—(पृ० ७)ति जिहि इति जाते, **हेरचङि** । अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यात् न तु चङि । इति कुत्वे, 'जिघि'+अ=जिघाय । ३ **हिनुमीना** । उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात् । ४ **हेरचङि** (४८०) । ५. **कमिमनिजनिगाभायाहिभ्यश्च** । एभ्यस्तुः स्यात् ।

१. पृणोति ॥ २. पृणोतु ॥ ३. अपृणोत् ॥ ४. पृणुयात् ॥ ५. प्र० पपार । पप्रतुः ॥ म० पपर्थ ॥ उ० पपार–पपर ॥ ६. पर्ता ॥ ७. परिष्यति[1] ॥ ८. प्रियात्[2] । प्रियास्ताम् ॥ ९. अपार्षीत् । अपार्ष्टाम् ॥ १०. अपरिष्यत् ॥ **कर्मणि**—प्रियते । **णिचि**—पारयति–ते । **सनि** – पुपूर्षति । **यङि**—पेप्रीयते । **यङ्लुकि**—पर्पर्ति–परिपर्ति-परीपर्ति । इत्यादि ॥ **कृत्सु**—पर्तव्यम् । परणीयम् । पार्यम् । पृतः । पृण्वती । पर्तुम् । परणम् । पृत्वा । सम्पृत्य ॥

[४८२] **आप्लृ**=व्याप्तौ । सकर्म० । अनिट् । परस्मै० ॥

१. आप्नोति । आप्नुतः । आप्नुवन्ति । २. **प्र**० आप्नोतु ॥ **म**० आप्नुहि ॥ **उ**० आप्नवानि । ३. आप्नोत् ॥ ४. आप्नुयात् ॥ ५. **प्र**० आप । आपतुः । आपुः ॥ **म**० आपिथ ॥ **उ**० आप । आपिव ॥ ६. आप्ता ॥ ७. आप्स्यति ॥ ८. आप्यात् । आप्यास्ताम् ॥ ९. आपत्[3] । आपताम् ॥ १०. आप्स्यत् ॥

**कर्मणि** -आप्यते ५. आपे । ९. आपि । **णिचि**—आपयति–ते । ९. मा भवानापिपत् । **सनि** – ईप्सति[4] । ५. ईप्साञ्चकार । **कृत्सु**—आप्तव्यम् । आपनीयम् । आप्यम् । आप्तः । आप्तवान् । आप्नुवन् । आप्नुवती । आप्तुम् । आपनम् । आप्त्वा । प्राप्य । आप्तिः । आपः । अन्तर्गता आपो यस्मिन्–अन्तरीपम् । द्वीपम् । अनूपम् । वि–व्याप्तौ=व्याप्नोति । व्याप्तिः । अव्याप्तिः ।

---

१. **ऋद्धनोः स्ये** (२६० इति इट् । २ **रिङ्शयग्लिङ्क्षु** । (२६०) इति ऋतो रिङादेशः । ३. द्वितीयो लुङ् । ऌदित्वादङ् । ४ **आप्ज्ञप्यृधामीत्** । एषामच ईत्स्यात्सनि ।

अतिव्याप्तिः । व्यापकः । परि—पर्याप्तौ, सम्पूर्तौ च अकर्मकः । पर्याप्नोति, समर्थः सम्पूर्णो वा भवति । सम्—समाप्तौ । समाप्नोति=अन्तं गच्छति इत्यर्थः । समाप्तः । समापयति ॥ परिपूर्वो धातुरेष पालनार्थेपि दृश्यते । यथा—पर्याप्नोति सुकृतं महाभाग ।

[४८३] शक्लृ=शक्तौ । अकर्म० । अनिट् । परस्मै० ।

१. शक्नोति । शक्नुत ॥ २. प्र० शक्नोतु–शक्नुतात् । म० शक्नुहि ॥ उ० शक्नवानि ॥ ३. अशक्नोत् ॥ ४. शक्नुयात् ॥ ५. प्र० शशाक । शेकतुः । शेकुः ॥ म० शेकिथ[1]–शशक्थ ॥ उ० शेकिव ॥ ६. शक्ता ॥ ७. शक्ष्यति ॥ ८. शक्यात । शक्यास्ताम् ॥ ९. अशकत्[2] । अशकताम । १०. अशक्ष्यत् ॥ **भावे**—शक्यते । ५. शेके । ९. अशाकि । **णिचि**—शाकयति–ते । ९. अशीशकत । **सनि**—शिशकिषति । **यङि**—शाशक्यते । **यङ्लुकि**—शाशकीति–शाशक्ति ॥ **कृत्सु**—शक्तव्यम् । शकनीयम् । शक्यम् । शक्तः । शक्नुवन् । शक्नुवती । शक्ष्यन् । शक्तुम् । शकनम् । शक्त्वा । प्रशक्य । शकलम् । शक्रः ॥

[४८४] राध=संसिद्धौ । अकर्म० । अनिट् । परस्मै० ॥

१. राध्नोति । राध्नुतः । राध्नुवन्ति ॥ २. प्र० राध्नोतु ॥ म० राध्नुहि ॥ उ० राध्नवानि ॥ ३. अराध्नोत् ॥ ४. राध्नुयात् ॥ ५. रराध । रराधतुः । रराधुः । हिंसार्थे तु—अपरराध । अपरेधतुः[3] ।

१. **ऋतो भारद्वाजस्ये**(पृ० ७ ति थलि वेट । २ लृदित्वादङ् । द्वितीयो लुङ् । ३ **राधो हिंसायाम्** । एत्वाभ्यासलोपौ स्तः ।

अपरेद्युः । इत्यादि ॥ ६. राद्धा ॥ ७. रात्स्यति ॥ ८. राध्यात् । राध्यास्ताम् ॥ ९. अरात्सीत्[1] । अराद्धाम् । अरात्सुः ॥ १०. अरात्स्यत् ॥

**भावे**—राध्यते । ५. रराधे । ९. अराधि । **णिचि**—राधयति-ते । **सनि**—रित्सति । **यङि**--राराध्यते । **यङ्लुकि**—राराधीति-राराद्धि ॥ **कृत्सु**--राद्धव्यम् । राधनीयम् । राध्यम् । राद्धः । राद्धवान् । राध्नुवन् । राध्नुवती । रात्स्यन् । राद्धुम् । राधनम् । राद्ध्वा । आराध्य ॥

[४८५] **साध**=संसिद्धौ । अकर्म० । अनिट् । परस्मै० ॥

साध्नोति । इत्यादि **'राध्नोति'** (४८४) वत् । **सनि**--सिषात्सति । साधनः । साधुः ॥

[४८६] **अश्**=व्याप्तौ । सकर्म० । वेट् । आत्मने० ॥

१. **प्र०** अश्नुते । अश्नुवाते । अश्नुवते ॥ २. अश्नुताम् ॥ ३. आश्नुत ॥ ४. अश्नुवीत । अश्नुवीयाताम् ॥ ५. **प्र०** आनशे[2] । आनशाते ॥ म० आनशिढ्वे-ध्वे ॥ उ० आनशिवहे-आनश्वहे ॥ ६. अशिता-अष्टा ॥ ७. अशिष्यते-अक्ष्यते ॥ ८. अशिषीष्ट-अक्षीष्ट ॥ ९. आशिष्ट[3] । आशिषाताम् । आशिषत ॥ **म०** आशिष्ठाः । आशिढ्वम्-ध्वम् ॥ **उ०** आशिषि ॥ **अनिट्पक्षे**--**प्र०** आष्ट[4] । आक्षाताम् । आक्षत ॥ **म०** आष्ठाः । आक्षाथाम् । आड्ढम् ॥ **उ०** आक्षि । आक्ष्वहि ॥ १०. आशिष्यत-आक्ष्यत ॥

---

१. लुङि षष्ठी विधा । २. **अश्नोतेश्च** । दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात् । ३. लुङि एकादशी विधा । ४. दशमो लुङ् ।

**कर्माणि**—अश्यते । **णिचि**—आशयति । **सनि**—अशिशिषते ॥ **कृत्सु**—अशितव्यः–अष्टव्यः । अशनीयः । अश्यः । अष्टः । अष्टवान् । अश्नुवानः । अशिष्यमाणः–अक्ष्यमाणः । अशितुम्–अष्टुम् । अशनम् । अशित्वा–अष्ट्वा । समश्य । रशना[1] । आशुः=व्रीहिविशेषः । श्वशुरः । अक्षरम् । अष्टन्[2] । अश्वः[3] । अक्षः । अक्षि ॥

[४८७] **ञि धृषा**=प्रागल्भ्ये । अकर्म० । सेट् । परस्मै० ॥

१. धृष्णोति । धृष्णुतः ॥ २. धृष्णोतु ॥ ३. अधृष्णोत् ॥ ४. धृष्णुयात् ॥ ५. **प्र०** दधर्ष । दधृषतुः । दधृषुः ॥ **म०** दधर्षिथ ॥ **उ०** दधृषिव ॥ ६. धर्षिता ॥ ७. धर्षिष्यति ॥ ८. धृष्यात् । धृष्यास्ताम् ॥ ९. अधर्षीत् । अधृष्टाम् । अधृषुः ॥ १०. अधर्षिष्यत् ॥ **भावे**—धृष्यते । **णिचि**—धर्षयति–ते । **सनि**—दिधर्षिषति । **यङि**—दरीधृष्यते । **यङ्लुकि**—दर्धृषीति–दरीधृषीति–दरिधृषीति–दर्धृष्टि ॥ **कृत्सु**—धर्षितव्यः । धर्षणीयः । धृष्यः । धृष्टः–धर्षितः[6] । धृष्णुवन् ॥ धृष्णुवती । धर्षितुम् । धर्षणम् । धृषित्वा । प्रधृष्य ॥ धृष्णुः[7] । दधृक् । धृष्णक् । धृष्णजौ । धिषणो गुरुः । धिषणा बुद्धिः ।

---

१. **अशेरश च** । २. **सप्यशूभ्यां तुट् च** । ३. **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** । ४ **अशेर्नित्** । क्सिः । ५. षष्ठी विधा । ६. **धृषिशसी वैयात्ये** । इत्यनिट् । ततोन्यत्र धर्षितः । ७. **त्रसिगृधिधृषिक्षिपेः क्नुः** ।

[४८८] ऋधु=वृद्धौ । अकर्म० । सेट् । परस्मै० ।

१. ऋध्नोति ॥ २. ऋध्नोतु ॥ ३. आर्ध्नोत् ॥ ४. ऋध्नु-यात् ॥ ५. आनर्ध[1] । आनृधतुः । आनृधुः ॥ अर्धिता ॥ ७. अर्धि-ष्यति ॥ ८. ऋध्यात् । ऋध्यास्ताम् ॥ ९. आर्धीत्[2] । आर्धिष्टाम् ॥ १०. आर्धिष्यत् ॥ **भावे**--ऋध्यते । **णिचि**--अर्धयति । ९॰ आर्दिधत् । **सनि**--आर्दिधिषति । ९- आर्दिधिषीत् । **कृत्सु**--अर्धि-तव्यम् । अर्धनीयम् । ऋध्यम् । ऋद्धः । ऋद्धवान् । ऋद्धवती । अर्धितुम् । अर्धनम् । अर्धित्वा-ऋद्ध्वा । समृद्धय ॥ ऋद्धिः ॥

इति स्वादयः समाप्ताः ॥ ५ ॥

१. नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यत इति द्विहल्त्वात् **तस्मान्नुड्-द्विहलः** । इति नुट् । २. सप्तमो लुङ् ।

॥ श्रीः ॥

# बृहद्धातुरूपावल्याम् ।

## अथ तुदादयः ॥ ६ ॥

---

[४८९] तुद=व्यथने । सकर्म० । अनिट् । उभय० ॥

### परस्मैपदे—

१. प्र० तुदति[1] । तुदतः । तुदन्ति ॥ म० तुदसि । तुदथः । तुदथ ॥ उ० तुदामि । तुदावः । तुदामः ॥ २. तुदतु–तुदतात् । तुदताम् । तुदन्तु ॥ म० तुद–तुदतात् । तुदतम् । तुदत ॥ उ० तुदानि । तुदाव । तुदाम ॥ ३. प्र० अतुदत् । अतुदताम् । अतुदन् ॥ म० अतुदः । अतुदतम् । अतुदत ॥ उ० अतुदम् । अतुदाव । अतुदाम ॥ ४. प्र० तुदेत् । तुदेताम् । तुदेयुः ॥ म० तुदेः । तुदेतम् । तुदेत ॥ उ० तुदेयम् । तुदेव । तुदेम ॥

५. प्र० तुतोद[2] । तुतुदतुः । तुतुदुः ॥ म० तुतोदिथ[3] । : । तुतुद ॥ उ० तुतोद । तुतुदिव । तुतुदिम ॥ ६. तोत्ता ।

१. तुद्+लट् इति स्थिते **तुदादिभ्यश्शः** । कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः 'श' प्रत्ययः स्यात् । शबाद्यपवादः । तुद्+अ+ति=शस्य अपित्त्वात् **सार्वधातुकमपित्** (पृ० ४) इति ङिद्वत्वात् **क्ङिति च**—(पृ० ४ ति गुणो न । २ वाकसायकैरथ तुतोद तदा विपक्ष· इति माघ: । ३ तुद्+थ इत्यत्र लिट-आर्धधातुकत्वात् शो न । तुदेरनिट्त्वेपि क्रादिनियमा(पृ० ७)त्थल्यपि नित्यमिट् ।

तोत्तारौ ॥ ७. तोत्स्यति ॥ ८. तुद्यात् । तुद्यास्ताम् ॥ ९. प्र० अतौत्सीत्[1] । अतौत्ताम्[2] । अतौत्सुः[3] ॥ म० अतौत्सीः । अतौत्तम् । अतौत्त ॥ उ० अतौत्सम् । अतौत्स्व । अतौत्स्म ॥ १०. अतोत्स्यत् ॥

## आत्मनेपदे—

१. प्र० तुदते । तुदेते । तुदन्ते ॥ म० तुदसे । तुदेथे । तुदध्वे ॥ उ० तुदे । तुदावहे । तुदामहे ॥ २. प्र० तुदताम् ॥ म० तुदस्व । तुदेथाम् ॥ उ० तुदै । तुदावहै ॥ ३. अतुदत ॥ म० अतुदथाः ॥ उ० अतुदे । अतुदावहि ॥ ४. प्र० तुदेत । तुदेयाताम् ॥ म० तुदेथाः ॥ उ० तुदेय ॥

५. प्र० तुतुदे । तुतुदाते । तुतुदिरे ॥ म० तुतुदिषे । तुतुदाथे । तुतुदिध्वे ॥ उ० तुतुदे । तुतुदिवहे । तुतुदिमहे ॥ ६. प्र० तोत्ता ॥ म० तोत्तासे ॥ उ० तोत्ताहे ॥ ७. प्र० तोत्स्यते ॥ म० तोत्स्यसे ॥ उ० तोत्स्ये ॥ ८. प्र० तुत्सीष्ट । म० तुत्सीष्ठाः ॥ उ० तुत्सीय ॥ ९. प्र० अतुत्त[4] । अतुत्साताम् । अतुत्सत ॥ म० अतुत्थाः । अतुत्साथाम् । अतुध्वम् । उ० अतुत्सि । अतुत्स्वहि । अतुत्स्महि ॥ १०. अतोत्स्यत ॥

१. **वदव्रज**—(पृ० १२)ति हलन्तलक्षणा वृद्धिः । लुङि षष्ठी विधा ।
२ झलो झलि (३५) इति सलोपः । ३ शितैरतौत्सुः शूलैश्च (भट्टिः १५ । ४)
४. लुङि दशमी विधा ।

**कर्मणि**—तुद्यते । **णिचि**—तोदयति-ते । **सनि**—तुतुत्सति-ते । **यङि**—तोतुद्यते । **यङ्लुकि**—तोतुदीति-तोतोत्ति ॥
**कृत्सु**—तोत्तव्यम् । तोदनीयम् । तोद्यम् । तुन्नः[1] । तुदन् । तुदती-तुदन्ती । तुदमानः । तोत्स्यन् । तोत्स्यती-तोत्स्यन्ती । तोत्स्यमानः । तोत्तुम् । तोदनम् । तुत्त्वा । प्रतुद्य ॥ तोत्रम् । प्रतोदः । तुत्थम् । अरुन्तुदः[2] । विधुन्तुदः ॥

[४९०] णुद=प्रेरणे । सकर्म० । अनिट् । उभय० ॥

सर्वं 'तुदति' (४८९) वत् । नुत्तः[3]--नुन्नः । प्रणुदते । अपनुदति=दूरीकरोति । प्र=प्रेरणे । प्रणुदति । वि-णिच्=प्रीणने--विनोदयति[4] ॥

[४९१] दिश=अतिसर्जने । अतिसर्जनं=दानम् । सकर्म० । अनिट् । उभय० ॥

१. दिशति-ते ॥ २. दिशतु-दिशताम् ॥ ३. अदिशत्-त ॥ ४. दिशेत्-त ॥ ५. प्र० दिदेश । दिदिशतुः । दिदिशुः ॥ म० दिदेशिथ ॥ उ० दिदिशिव ॥ आत्म०—दिदिशे । दिदिशाते । दिदिशिरे ॥ ६. देष्टा ॥ म० देष्टासि-से ॥ उ० देष्टास्मि-देष्टाहे ॥

---

१ **रदाभ्या**—(२१)मिति नत्वम् । २. **विध्वरुषोस्तुदः** । इति खश् । **अरुर्द्विषदजन्तस्य मुम्** । इति मुम् । अरुन्तुदत्वं महतां ह्यगोचरः । इति भारविः । विधुमिव विकटविधुन्तुददन्तदलनगलितामृतधारम् । इति जयदेवः । ३. **नुदविदोन्दत्रा**—(२७३) इति नो वा । ४. विनोदयिष्यन्ति नवाभिषङ्गा उदारवाचो मुनिकन्यकास्त्वाम् । इति रघुः ।

७. देक्ष्यति--ते ॥ ८. दिश्यात्--दिक्षीष्ट ॥ ९. अदिक्षत्[1] । अदिक्षताम् । अदिक्षन् ॥ **आत्म०** अदिक्षत । अदिक्षाताम् । अदिक्षन्त ॥ १०. अदेक्ष्यत्--त ॥

**कर्मणि**[2]—दिश्यते । **णिचि**—देशयति-ते । **सनि**—दिदक्षति—ते । **यङि**—देदिश्यते । **यङ्लुकि**—देदिशीति—देदेष्टि । **कृत्सु**—देष्टव्यम् । देशनीयम् । देश्यम् । दिष्टः । दिशन् । दिशती—दिशन्ती । दिशमानः । देष्टुम् । देशनम् । दिष्ट्वा । निर्दिश्य । निदिशति । आदिशति[3]=आज्ञापयति । प्रत्यादिशति[4]=निराकरोति । अतिदिशति=अन्यधर्ममन्यत्रारोपयति । सम्=सन्देशे । सन्दिशति । उप=उपदिशति—शिक्षयति । उद्=उद्दिशति । अप=व्याजे । अपदिशति ॥ वि+अप=व्यपदिशति । निर्=कथने=निर्दिशति ।

[४९२] **भ्रस्ज**=पाके । सकर्म० । अनिट् । उभय० ॥

१. भृज्जति[5]—ते । २. भृज्जतु—ताम् ॥ ३. अभृज्जत्—त ॥ ४. भृज्जेत्—त ॥ ५. **प्र०** बभर्ज[6] । बभर्जतुः । बभर्जुः ॥ **म०** बभर्[7]-

१. **शल इगुपधादनिटः क्सः** (पृ०११) पञ्चमो लुङ् । २ द्वादशी विधा । ३ आदिक्षदादीप्रक्रुशानुकल्पम् (भट्टि: । ३ । ३) । ४. इति प्रत्यादिशद्रामो भारतीमपि भारतीम् (चंपूरा । ५. भ्रस् ज् अ ति इति स्थिते शस्य **सार्वधातुकमपित्** (पृ० ४) इति ङित्वात् **ग्रहिज्ये**—३२१ इति सम्प्रसारणे **सम्प्रसरणाच्च** । इति पूर्वरूपे च भृस्ज इति जाते सस्य श्चुत्वेन शकारे तस्य पुनर्जस्त्वेन जः । ६. भ्रस्ज्+अ इति स्थिते **भ्रस्जोरोपधयोरन्यतरस्याम्** । भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । इति धकारोत्तररेफस्य जकारात्प्राक्सकारस्य च स्थाने रमागमे भर्ज् अ इति जाते द्वित्वादौ रूपम् । ७. भारद्वाजनियमात्थलि वेट् (पृ० ७) ।

र्जिथ-बभर्ष्ठ। बभर्जथुः। बभर्ज॥ उ० बभर्ज। बभर्जिव। बभर्जिम॥ **रमागमाभावपक्षे**—बभ्रज्ज। बभ्रज्जतुः। बभ्रज्जुः॥ **म०** बभ्रज्जिथ-बभ्रष्ठ। इत्यादि॥ **आत्मने०** बभर्जे। बभर्जाते। बभर्जिरे॥ **म०** बभर्जिषे। बभर्जाथे। बभर्जिध्वे॥ **उ०** बभर्जे। बभर्जिवहे। बभर्जिमहे॥ **रमागमाभावपक्षे**—बभ्रज्जे। बभ्रज्जाते। बभ्रज्जिरे॥ बभ्रज्जिषे इत्यादि॥ ६. भ्रष्टा-भर्ष्टा॥ ७. भ्रक्ष्यति-ते॥ **पक्षे**—भर्क्ष्यति-भर्क्ष्यते॥ ८. भृज्ज्यात्। भृज्ज्यास्ताम्॥ **आत्म०**—भ्रक्षीष्ट-भर्क्षीष्ट॥ ९. अभ्राक्षीत्। अभ्राष्टाम्। अभ्राक्षुः॥ **पक्षे**—अभार्क्षीत्। अभार्ष्टाम्। अभार्क्षुः॥ **आत्म०**—अभ्रष्ट। अभ्रक्षाताम्। अभ्रक्षत॥ **पक्षे**—अभर्ष्ट। अभर्क्षाताम्। अभर्क्षत॥ १०. अभ्रक्ष्यत्-त॥ अभर्क्ष्यत्-त॥

**कर्मणि**—भृज्ज्यते। ९. अभ्रज्जि-अभर्जि। **णिचि**—भ्रज्जयति-ते—भर्जयति-ते। **सनि** - बिभ्रज्जिषति-ते — बिभर्जिषति-ते॥ **पक्षे**—बिभ्रक्षति-ते—बिभर्क्षति-ते॥ **यङि**—बरीभृज्ज्यते-बरिभृज्ज्यते इत्यादि॥ **यङ्लुकि**—बाभ्रज्जीति-बाभ्रष्टि—इत्यादि॥ **कृत्सु**—भ्रष्टव्यम्-भर्ष्टव्यम्। भ्रज्जनीयम्-भर्जनीयम्। भ्रग्य - भर्ग्य। भृष्टः। भृज्जन्। भृज्जती-भृज्जन्ती। भृज्जमान। भ्रक्ष्यन्-भर्क्ष्यन्। भ्रष्टुम्-भर्ष्टुम्। भ्रज्जनम्-भर्ज्जनम्। भृष्ट्वा। विभृज्ज्य॥ भर्गः। भृगुः।

१. क्रादिनियमान्नित्यमिट् २ बभ्रज्ज निहते तस्मिञ्शोको रावणमभ्रिवत् इति भट्टिः। ३. थलि भारद्वाजनियमादिट्पक्षे रमभावे रूपम्। ४ इडभावपक्षे **स्कोरिति**—सलोपः। **व्रश्चेति** षत्वम्। ५. षष्ठो लुङ्। रमागमपक्षे रूपम्। ६. रमागमाभावपक्षे रूपम्।

[४९३] **क्षिप**=प्रेरणे । सकर्म० । अनिट् । उभय० ।

१. क्षिपति–ते ॥ २. क्षिपतु–ताम् ॥ ३. अक्षिपत्–त ॥ ४. क्षिपेत्–त ॥ ५. चिक्षेप । चिक्षिपतुः ॥ **म०** चिक्षेपिथ ॥ **उ०** चिक्षिपिव ॥ **आत्म०**—चिक्षिपे ॥ **म०** चिक्षिपिषे ॥ ६. क्षेप्ता ॥ ७. क्षेप्स्यति–ते ॥ ८. क्षिप्यात्–क्षिप्सीष्ट ॥ ९. अक्षैप्सीत्[१] । अक्षैप्ताम् । अक्षैप्सुः ॥ **आत्म०** —अक्षिप्त[२] । अक्षिप्साताम् । अक्षिप्सत ॥ १०. अक्षेप्स्यत्–त ॥

**कर्मणि**—क्षिप्यते । **णिचि**—क्षेपयति–ते । **सनि**—चिक्षिप्सति–ते । **यङि**—चेक्षिप्यते । **यङ्लुकि**—चेक्षिपीति–चेक्षेप्ति । **कृत्सु**—क्षेप्तव्यम् । क्षेपणीयम् । क्षेप्यम् । क्षिप्तः । क्षिपन् । क्षिपती–क्षिपन्ती । क्षिपमाणः । क्षेप्तुम् । क्षेपणम् । क्षिप्त्वा । प्रक्षिप्य ॥ अभिक्षिपति[३] । प्रतिक्षिपति अतिक्षिपति=निवारयति । आक्षिपति=अपवदति । संक्षिपति=ह्रस्वं करोति । अधिक्षिपति=निन्दति । प्रक्षिपति, निक्षिपति=अस्यति । उत्क्षिपति=ऊर्ध्वं क्षिपति । अवक्षिपति=अधो विक्षिपति । उपक्षिपति=प्रारभते ॥

[४९४] **कृष**=विलेखने । सकर्म० । अनिट् । उभय० ।

१. कृषति–ते ॥ २. कृषतु–ताम् ॥ ३. अकृषत्–त ॥ ४. कृषेत्–त ॥ ५. चकर्ष । चकृषतुः । चकृषुः ॥ **म०** चकर्षिथ ॥ **उ०** चकर्ष । चकृषिव ॥ **आत्म०**—**प्र०** चकृषे ॥ **म०** चकृषिषे ॥ **उ०**

१. ग्रो लुङ् । **वदव्रजे**–(पृ० १२) ति वृद्धिः । २. दशमो लुङ् । लिङ्सिचावात्मनेपदेषु(११५)इति कित्वान्न गुणः । ३. **अभिप्रत्यतिभ्यः क्षिपः ।** इति **परस्मैपदमेव** ।

चकृषिवहे ॥ ६. कर्ष्टा–क्रष्टा ॥ ७. क्रक्ष्यति–ते—कर्क्ष्यति–ते ॥ ८. कृष्यात्–कृषीष्ट ॥ ९. अक्राक्षीत्। अक्राष्टाम्–अकार्क्षीत्। अकार्ष्टाम्–अकृक्षत्। अकृक्षताम्॥ आत्म०—अकृष्ट। अकृक्षाताम्। अकृक्षत क्सादेशपक्षे—अकृक्षत। अकृक्षाताम्। अकृक्षन्त ॥ १०. अक्रक्ष्यत्–त ॥ पक्षे—अकर्क्ष्यत्–त ॥

**कर्मणि**—कृष्यते। **णिचि**—कर्षयति–ते। **सनि**—चिकृक्षति–ते। **यङि**—चरीकृष्यते। **यङ्लुकि**—चर्कृषीति–चरिकृषीति–चरीकृषीति–चर्कर्ष्टि–चरिकर्ष्टि–चरीकर्ष्टि ॥ **कृत्सु**—क्रष्टव्यः–कर्ष्टव्यः। कर्षणीयः। कृष्यः। कृष्टः। कर्षन्। कृषती–कृषन्ती। कृषमाणः। क्रष्टुम्–कर्ष्टुम्। कर्षणम्। कृष्ट्वा। आकृष्य ॥ सङ्कर्षणः। कृषिः। अपकर्ष। प्रकर्षः=आधिक्यम् ॥ आकर्षः। निष्कर्षः।

[४९५] **जुषी**=प्रीतिसेवनयोः। सकर्म०। सेट्। आत्मने०॥ ईदित्॥

१. जुषते ॥ २. जुषताम् ॥ ३. अजुषत ॥ ४. जुषेत ॥ ५. जुजुषे ॥ ६. जोषिता ॥ ७. जोषिष्यते ॥ ८. जोषीष्ट ॥ ९. ॥ १०. अजोषिष्यत ॥

**कर्मणि**—जुष्यते। **णिचि**—जोषयति–ते। ९. अजूजुषत्–त। **सनि**—जुजुषिषते–जुजोषिषते। **यङि**—जोजुष्यते। यङ्-

१ **अनुदात्तस्य चर्दुपधस्ये**—(३०२) ति वा अमागमः। २ **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः**(३०९) इति सिच्पक्षे रूपम्। ३. अमभावे सिचि वृद्धौ रूपम्। ४. पक्षे **शल इगुपधा**—(पृ० ११ दिति क्सः। पञ्चमी विधा। ५ **लिङ्सिचावात्मनेपदेषु**(११५) इति कित्वादत्र। ६. **झलो झलि** इति सिज्लोपः। दशमो लुङ्। ७ जुषन्ते पर्वतश्रेष्ठमृषयः पर्व-। ८. एकादशो लुङ्। ९. **रलो व्युपधा**दिति कित्वविकल्पः।

**लुङि**—जोजुष्टि । **कृत्सु**—जोषितव्यः । जोषणीयः । जुष्यः । जुष्टः । जुषमाणः । जोषितुम् । जोषणम् । जोषित्वा-जुषित्वा । उपजुष्य ।

[४९६] **ओ विजी**=भयचलनयोः । सकर्म० । सेट् । आत्मने० ॥ ईदित् । प्रायेणायमुत्पूर्वः ॥

१. उद्विजते[1] ॥ २. उद्विजताम् ॥ ३. उदविजत ॥ ४. उद्विजेत ॥ ५. उद्विविजे ॥ उद्विविजाते ॥ ६. उद्विजिता[2] ॥ ७. उद्विजिष्यते ॥ ८. उद्विजिषीष्ट ॥ ९. उदविजिष्ट ॥ १०. उदविजिष्यत ॥

**कर्मणि**—उद्विज्यते । **णिचि**—उद्वेजयति[3] । **सनि**—उद्विविजिषते । **यङि**—उद्वेविज्यते । **यङ्लुकि**—उद्वेविजीति-उद्वेवेक्ति । **कृत्सु**—उद्विजितव्यम् । उद्विजनीयम् । उद्वेज्यम् । उद्विग्नः[4] । उद्विजमानः । उद्विजितुम् । उद्विजनम् । विजित्वा । उद्विज्य ॥ वेगः । उद्वेगः ।

[४९७] **ओ लस्जी**=व्रीडने । अकर्म० । सेट् । आत्मने० । ईदित् ॥

१. लज्जते[5] ॥ २. लज्जताम् । ३. अलज्जत ॥ ४. लज्जेत ॥ ५. ललज्जे ॥ ६. लज्जिता ॥ ७. लज्जिष्यते ॥ ८. लज्जिषीष्ट ॥ ९. अलज्जिष्ट[6] ॥ १०. अलज्जिष्यत ॥ **भावे**—लज्जते । **णिचि**—

१. यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः । इति गीता । २. **विज इट्** । विजेः पर इडादिः प्रत्ययः ङिद्वत्स्यात् । इति ङिद्वत्त्वान्न गुणः । ३. उद्वेजयत्यंगुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेपि यत्र इति कुमारसम्भवे । ४. **श्वीदितो निष्ठायाम्** (२१) इत्यनिट् । कुत्वम् । **ओदितश्च**—इति निष्ठानत्वम् । ५. **झलां जश् झशि** इति सकारस्य दकारः तस्य चुत्वेन जः । ६. एकादशो लुङ् । अलज्जिष्टाङ्गदस्तत्र भट्टिः १५ । ३३) ।

लज्जयंति--ते ॥ ९. अललज्जत्--त ॥ **सनि**—लिलज्जिषते । **यङि**—लालज्यते । **यङ्लुकि**—लालज्जीति- लालक्ति । **कृत्सु**—लज्जितव्यम् । लज्जनीयम् । लज्ज्यम् । लग्नः । लज्जमान । लज्जितुम् । लज्जनम् । लज्जित्वा । विलज्ज्य । लज्जा । लज्जित इति तु इताचि ।

[४९८] **ओ व्रश्चू**=छेदने । सकर्म० । वेट् । परस्मै० ॥

१. वृश्चति[2] ॥ २. वृश्चतु ॥ ३. अवृश्चत् ॥ ४. वृश्चेत् ॥ ५. **प्र०** वव्रश्च[3] । वव्रश्चतुः । वव्रश्चुः ॥ **म०** वव्रश्चिथ-वव्रष्ठ । वव्रश्चथुः ॥ **उ०** वव्रश्चिव-वव्रश्च्व । वव्रश्चिम-वव्रश्च्म ॥ ६. व्रश्चिता-व्रष्टा ॥ ७. व्रश्चिष्यति-व्रक्ष्यति ॥ ८. वृश्च्यात्[4] । वृश्च्यास्ताम् ॥ ९. अव्रश्चीत्[5] । अव्रश्चिष्टाम् । अव्राक्षीत्[6] । अव्राष्टाम् ॥ १०. अव्रश्चिष्यत् अव्रक्ष्यत् ॥

**कर्मणि**—वृश्च्यते । **णिचि**—व्रश्चयति-ते । ९. अवव्रश्चत् । **सनि**—विव्रश्चिषति-विव्रक्षति । **यङि**—वरीवृश्च्यते । **यङ्लुकि**—वाव्रश्चीति-वाव्रष्टि ॥ **कृत्सु**—व्रश्चितव्यम्-व्रष्टव्यम् । व्रश्चनीयम् । व्रश्च्यम् । वृक्णः । वृश्चन् । वृश्चती-वृश्चन्ती । व्रश्चिष्यन्-व्रक्ष्यन् । व्रश्चितुम्-व्रष्टुम् । व्रश्चनम् । व्रश्चित्वा । विवृश्च्य ॥ वृक्षः । वृश्चिकः ॥

१. नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत्—इति रघुः । २. शप्रत्ययस्य **सार्वधातुकमपित्** इति ङिद्वत्त्वात् **ग्रहिज्ये** (३२१)ति सम्प्रसारणम् । ३. **लिट्यभ्यासस्योभयेषाम्** (३१७) इति सम्प्रसारणम् । **उरत्** (पृ० ८) इति ऋकारस्य अकारः । **न सम्प्रसारणे सम्प्रसारणम्** । ४. **किदाशिषि** (पृ० १९) इति आशीर्लिङः कित्त्वात्सम्प्रसारणम् । ५. ऊदित्वादिट् पक्षे **नेटि** इति हलन्तलक्षणवृद्धिनिषेधः । सप्तमो लुङ् । ६ इडभावे हलन्तलक्षणा वृद्धिः । षष्ठो लुङ ।

[४९९] **ऋच्छ**=गतीन्द्रियप्रलयमूर्तिभावेषु । इन्द्रियप्रलयः इन्द्रिय-नाशः । मूर्तिभावः काठिन्यम् । अकर्म० । सेट् । परस्मै० ॥

१. ऋच्छति ॥ २. ऋच्छतु ॥ ३. आर्च्छत् ॥ ४. ऋच्छेत् ॥ ५. **प्र०** आनर्च्छ[1] । आनर्च्छतुः । आनर्च्छुः ॥ **म०** आनर्च्छिथ ॥ **उ०** आनर्च्छिव ॥ ६. ऋच्छिता ॥ ७. ऋच्छिष्यति ॥ ८. ऋच्छयात् । ऋच्छयास्ताम् ॥ ९. आर्च्छीत्[2] । आर्च्छिष्टाम् ॥ १०. आर्च्छिष्यत् ॥ समृच्छते[3] । **भावे**—ऋच्छयते । **णिचि**—ऋच्छयति–ते । ९. आर्चिच्छत्–त । **सनि**—ऋचिच्छिषति । **कृत्सु**—ऋच्छितव्यम् । ऋच्छनीयम् । ऋच्छयम् । ऋच्छितः । ऋच्छन् । ऋच्छती–ऋच्छन्ती । ऋच्छितुम् । ऋच्छनम् । ऋच्छित्वा । समृच्छय ।

[५००] **ऋच**=स्तुतौ । सकर्म० । सेट् । परस्मै० ॥

१. ऋचति ॥ २. ऋचतु ॥ ३. आर्चत् ॥ ४. ऋचेत् ॥ ५. आनर्च[4] । आनृचतुः ॥ **म०** आनर्चिथ ॥ ६. अर्चिता ॥ ७. अर्चिष्यति ॥ ८. ऋच्यात् । ऋच्यास्ताम् ॥ ९. आर्चीत् ॥ १०. आर्चिष्यत् ॥

---

१. **ऋच्छत्यृताम्** (२८१) इति लिटि गुणः । **तस्मान्नुड् द्विहल** इत्यत्र द्विहल्ग्रहणमनेकहलुपलक्षणमिति नुडागमः । **इजादेश्च** (पृ० ८)त्यत्र अनृच्छ– इति पर्युदासान्नाम् । २. सप्तमो लुङ् । ३. **समो गम्यृच्छिभ्याम्**—इत्यात्मनेपदम् । ४. आनर्च गीत्यन्वितषट्पदैः सा स्तवप्रसूनस्तबकैर्नवीनैः । इति श्रीहर्षः ।

**कर्मणि**—ऋच्यते । **णिचि**—अर्चयति-ते । **सनि**—अर्चिचिषति । **कृत्सु**—अर्चितव्यम् । अर्चनीयम् । अर्च्यम् । ऋचितः ऋचन् । ऋचती-ऋचन्ती । अर्चितुम् । अर्चनम् । अर्चित्वा । प्राच्र्य । ऋक् ऋचौ ऋचः । अर्धर्चम् ।

[५०१] उज्झ=उत्सर्गे । सकर्म० । सेट् । परस्मै० ॥

१. उज्झति ॥ ५. उज्झाञ्चकार[1] ॥ ६. उज्झिता ॥ ९. औज्झीत् ॥

**कर्मणि**—उज्झ्यते । **णिचि**—उज्झयति-ते । **सनि**—उजिज्झिषति । **कृत्सु**—उज्झितव्यः । उज्झनीयः । उद्ध्यः[2]-उज्झ्यः । उज्झितः । उज्झन् । उज्झितुम् । उज्झनम् । उज्झित्वा । समुज्झ्य ॥

[५०२] **टु तृप**=प्रीणने । सकर्म० । सेट् । परस्मै० ॥

१. तृपति ॥ २. तृपतु । ३. अतृपत् ॥ ४. तृपेत् ॥ ५. **प्र०** ततर्प । ततृपतुः ॥ **म०** ततर्पिथ । ततृपथुः । ततृप ॥ **उ०** ततर्प । ततृपिव ॥ ६. तर्पिता ॥ ७. तर्पिष्यति ॥ ८. तृप्यात् ॥ ९. अतर्पीत्[3] ॥ १०. अतर्पिष्यत् ॥

**कर्मणि**—तृप्यते । **णिचि**—तर्पयति-ते । ९. अतीतृपत्-अततर्पत्[4] । **सनि**—तितर्पिषति । **यङि**—तरीतृप्यते । **यङ्लुकि**—

१. इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार इति रघुः । २. नदविशेषः । **भिद्योद्ध्यौ नदे** इति क्यप् धत्वं च । ३. सप्तमो लुङ् । **स्पृशमृशे** (३०९)ति सिचो विकल्पनं पौषादिकस्यैव । अङपवादत्वात् । ४. **उरृत्** ।

तरितर्षि–तर्तर्सि-तरीतृपीति--तर्तृपीति--तरितृपीति इत्यादि ॥ **कृत्सु** — तर्पितव्यम् । तर्पणीयम् । तृप्यम् । तृपितः । तृपन् । तृपती--तृपन्ती । तर्पितुम् । तर्पणम् । तर्पित्वा । संतृप्य ॥

[५०३] **गुम्फ**=ग्रन्थे । सकर्म० । सेट् । परस्मै० ॥

१. गुम्फति ॥ ५. जुगुम्फ ॥ ८. गुफ्यात् । ९. अगुम्फीत् ॥ इत्यादि सर्वं '**कुश्नाति**' (७७) वत् । गुफित्वा--गुम्फित्वा । **यङि**—जोगुम्फ्यते । **यङ्लुकि** — जोगुम्फीति--जोगुम्प्ति ।

[५०४] **मृड**=सुखने । सकर्म० । सेट् । परस्मै० ॥

१. मृडति ॥ ५. ममर्ड ॥ ६. मर्डिता ॥ इत्यादि '**तृपति**' (५०२) वत् ॥

[५०५] **घूर्ण**=भ्रमणे । अकर्म० । सेट् । परस्मै० ॥

१. घूर्णति ॥ ५. जुघूर्ण ॥ ६. घूर्णिता ॥ इत्यादि '**कूजति**' (८५) वत् । घूर्णन् । घूर्णती–घूर्णन्ती ॥

[५०६] इष=इच्छायाम् । सकर्म० । सेट् । परस्मै० ॥

इच्छति ॥ २. इच्छतु ॥ ३. ऐच्छत् ॥ इच्छेत् ॥ ५. **प्र०** इयेष । ईषतुः । ईषुः ॥ **म०** इयेषिथ । ईषथुः । ईष ॥ **उ०** इयेष ।

---

१ **नोपधात्थफान्ताद्वा** (३१) । इति वा कित् । २ **इषुगमियमां छः** । ३. इष् इष्=इ इष्=णल् इत्यत्र लघूपधगुणे इ एष् इति जाते **अभ्यासस्यासवर्णे** (६५) इति इयङ् । ४. इ इष्=अतुस् इत्यत्र अतुस अपित्त्वेन कित्त्वात् गुणाभावे सवर्णदीर्घे रूपम् ।

ईषिव। ईषिम॥ ६. एषिता-एष्टा॥ ७. एषिष्यति॥ ८. इष्यात्॥ ९. ऐषीत्॥ १०. ऐषिष्यत्॥

**कर्मणि**—इष्यते। **णिचि**—एषयति-ते। **सनि**—एषिषति। **कृत्सु**—एषितव्यम्-एष्टव्यम्। एषणीयम्। एष्यम्। इष्टः। इच्छन्। इच्छती-इच्छन्ती। एषितुम्-एष्टुम्। एषणम्। एषित्वा-इष्ट्वा। समिष्य। इच्छुः। इच्छा। प्रतीच्छति=गृह्णाति। अधीच्छति सत्करोति। अधीष्टः=सत्कृतः। अध्येषणं=सत्कारः।

[५०७] **मिष**=स्पर्धायाम्। अकर्म०। सेट्। परस्मै०॥

१. मिषति॥ ५. मिमेष। मिमिषतुः॥ **म०** मिमेषिथ॥ ६. मेषिता॥ इत्यादि **'लिखति'** (५०८) वत्। मेषः। निमेषः। निमिषति। उन्मिषति॥

[५०८] **ओ लिख**=अक्षरविन्यासे। सकर्म०। सेट्। परस्मै०॥

१. लिखति॥ ५. लिलेख। लिलिखतुः॥ **म०** लिलेखिथ॥ ६. लेखिता॥ ७. लेखिष्यति॥ ८. लिख्यात्॥ ९. अलेखीत्॥

**कर्मणि**—लिख्यते। **णिचि**—लेखयति। **सनि**—लिलेखिषति-लिलिखिषति। **यङि**—लेलिख्यते। **यङ्लुकि**—लेलिखीति-लेलेक्ति। **कृत्सु**—लिखितव्यम्। लिखनीयम्। लेख्यम्। लिखित। लिखन्। लिखती-लिखन्ती। लिखितुम्। लेखनम्-लिखनम्। लिखि-

१. **तीषसहलुभे**—(२४४)ति इड्वा। २ ऐषीः पुनर्जन्मजयाय यत्त्वं (भट्टि १।१८)। ३. **यस्य विभाषा** इत्यनिट्। ४ **तीषसहे**—(२४४)ति इड्वा। ५. कुटादिरप्ययम्- इति केचित्। त मते लिखनमित्यपि।

त्वा—लेखित्वा । विलिख्य ॥ लेखनः । लेखनी । लेखा । रेखा ॥ उद्=उल्लेखे, उल्लेखः,—अभिलापः, कर्षणम् ; भेदनम् । उल्लिखति । वि=चित्रीकरणम् ।

[५०९] **स्फुट**=विकसने । अकर्म० । सेट् । परस्मै० । कुटादिः ॥

१. स्फुटति ॥ ५. पुस्फोट । पुस्फुटतुः ॥ म० पुस्फोटिथ[1] ॥ ६. स्फोटिता ॥ ८. स्फुट्यात् ॥ ९. अस्फुटीत् ॥ **भावे**—स्फुट्यते । **णिचि**—स्फोटयति । अपुस्फुटत् । **सनि**– पुस्फुटिषति । **यङि**—पोस्फुट्यते । **यङ्लुकि**—पोस्फोट्टि–पोस्फुटीति ॥ **कृत्सु**—स्फुटितव्यम् । स्फुटनीयम् । स्फोट्यम् । स्फुटितः । स्फुटन् । स्फुटती–स्फुटन्ती । स्फुटितुम् । स्फुटनम् । स्फुटित्वा । संस्फुट्य ॥

[५१०] **त्रुट**=छेदने । सकर्म० । सेट् । परस्मै० ॥ कुटादिः ॥

१. त्रुट्यति[2]–त्रुटति ॥ २. त्रुट्यतु–त्रुटतु ॥ ३. अत्रुट्यत्–अत्रुटत् ॥ ४. त्रुट्येत्–त्रुटेत् ॥ ५. प्र० तुत्रोट । तुत्रुटतुः ॥ म० तुत्रुटिथ ॥ ६. त्रुटिता ॥ ७. त्रुटिष्यति ॥ ८. त्रुट्यात् ॥ ९. अत्रुटीत्[3] ॥

**कर्मणि**—त्रुट्यते । **णिचि**—त्रोटयति । ९. अतुत्रुटत् । **सनि**—तुत्रुटिषति–तुत्रोटिषति । **यङि**—तोत्रुट्यते । **यङ्लुकि**—तोत्रुटीति–तोत्रोट्टि । **कृत्सु**—त्रुटितव्यम् । त्रुटनीयम् । त्रोट्यम् । त्रुटती–त्रुटन्ती । त्रुटितुम् । त्रुटनम् । त्रुटित्वा । वित्रुट्य ॥

[५११] **स्फुर**=सञ्चलने । अकर्म० । सेट् । परस्मै० । कुटादिः ।

---

१. **गाङ्कुटादिभ्योऽञ्णिन्ङित्** । इति ङित्वान्न गुणः । २ वा भ्राशेति श्यन् वा । ३. सप्तमो लुङ् ।

१. स्फुरति[1] ॥ ५. पुस्फोर पुस्फुरतुः ॥ म० पुस्फुरिथ ॥ ६. स्फुरिता ॥ ८. स्फूर्यात्[2] इत्यादि **'स्फुटति'** (५०९) वत् । **णिचि**—स्फारयति[3]-ते — स्फोरयति-ते ॥

[५१२] **णू=स्तवने** । सकर्म० । सेट् । परस्मै० । कुटादिः ॥

१. नुवति ॥ २. नुवतु ॥ ३. अनुवत् ॥ ४. नुवेत् ॥ ५. प्र० नुनाव । नुनुवतुः । म० नुनुविथ ॥ उ० नुनाव—नुनुव ॥ ६. नुविता ॥ ७. नुविष्यति ॥ ८. नूयात् ॥ ९. अनुवीत् । अनुविष्टाम् ॥ १०. अनुविष्यत् ॥

**कर्मणि**—नूयते । **णिचि**—नावयति-ते । **सनि**—नुनूषति । **यङि**—नोनूयते । **यङ्लुकि**—नोनोति । **कृत्सु**—नुवितव्यम् । नुवनीयम् । नूयम्-नाव्यम् । नूतः । नुवन् । नुवती-नुवन्ती । नुवितुम् । नुवनम् । नूत्वा । प्रणूय ॥

[५१३] **धू=विधूनने** । सकर्म० । सेट् । परस्मै० । कुटादिः ॥

१. धुवति ॥ ५. दुधाव[4] ॥ इत्यादि **'नुवति'** (५१२) वत् ॥

[५१४] **गु=पुरीषोत्सर्गे** । अकर्म० । अनिट् । परस्मै० । कुटादिः ॥

१. गुवति ॥ ५. जुगाव । जुगुवतुः ॥ म० जुगुविथ[5]—जुगुथ ॥ ६. गुता ॥ ७. गुष्यति ॥ ८. गूयात् ॥ ९. अगुषीत् । अगुताम्[6] । अगुषुः ॥ म० अगुषीः । अगुतम् । अगुत ॥ उ० अगु-

१. शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य । इति शाकुन्तले । २. **हलि चे**ति दीर्घः । ३. **चिस्फुरोर्णौ** इत्यात्वविकल्पः । ४. दुधुवुर्वाजिनः स्कन्धान् इति रघुः । ५. भारद्वाजनियमात्थलि इड्विकल्पः । ६. कुटादित्वेन ङित्त्वात् गुणनिषेधे **ह्रस्वादङ्गात्** (२६० इति सिचो लोपः ।

षम् । अगुष्व ॥ १०. अगुष्यत् ॥ **भावे**—गूयते । **णिचि**—गावयति-ते ॥ **सनि**—जुगूषति । **यङि**—जोगूयते । **यङ्लुकि**—जोगुवीति-जोगुति ॥ **कृत्सु**—गुवितव्यम् । गुवनीयम् । गुयम्-गाव्यम् । गूनः[1] । गुवन् । गुवती-गुवन्ती । गुतुम् । गुवनम् । गुत्वा । प्रगुत्य ॥

[५१५] **मृङ्**=प्राणत्यागे । सकर्म० । अनिट् । उभय० ।

१. म्रियते[2] ॥ २. म्रियताम् ॥ ३. अम्रियत ॥ ४. म्रियेत ॥ ५. प्र० ममार । मम्रतुः । मम्रुः ॥ म० ममर्थ[3] । मम्रथुः । मम्र ॥ उ० ममार-ममर । मम्रिव[4] मम्रिम ॥ ६. मर्तासि ॥ ७. मरिष्यति[5] ॥ ८. मृषीष्ट[6] ॥ ९. अमृत[7] । अमृषाताम् ॥ १०. अमरिष्यत ॥

**भावे**—म्रियते । **णिचि**—मारयति । ९. अमीमरत् । **सनि**—मुमूर्षति[8] । **यङि**—मेम्रियते । **यङ्लुकि**—मर्मर्ति-मरीमर्ति-मर्मरीति इत्यादि । **कृत्सु**—मर्तव्यम् । मरणीयम् । मार्यम् । मृतः । म्रियमाणः । मरिष्यमाणः । मर्तुम् । मरणम् । मृत्वा । उन्मृत्य ॥ अमरः । मृत्युः । अमृतम् ॥

[५१६] **क्षि**=निवासगत्योः । अकर्म० । अनिट् । परस्मै० ॥

१. **ढुग्वोर्दीर्घश्च** । इति निष्ठानत्वं दीर्घश्च । २. मृ+श+ते इति स्थिते **म्रियतेर्लुङ् लिङोश्च** । लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । **रिङ् शयग्लिङ्क्षु** इति रिङादेशे म्रि अ ते इति जाते, **अचि श्नुधा**—(पृ०११) त्विति इयङि म्रियते इति रूपम् । ३ **ऋतो भारद्वाजस्य** (पृ० ११) इति थल्यपि नेट् । ४ क्रादिनियमादिट् । ५. **ऋद्धनोः स्ये** (२६०) इति इट् । ६ **उश्च** (२६०) इति लिङ्सिचोः किरवान्न गुणः । ७. दशमो लुङ् । **ह्रस्वादङ्गात्** (२६०) इति सिचो लोपः । ८. सनः कित्त्वे दीर्घोत्परपरदीर्घाः ।

१. क्षियति । क्षियतः । क्षियन्ति ॥ २. क्षियतु ॥ ३. अक्षियत् ॥ क्षियेत् ॥ ५. लिडादिषु **'क्षयति'** (९२) वत् ॥ क्षियन् । क्षियती–क्षियन्ती ॥

[५१७] **षू**=प्रेरणे सकर्म० । सेट् । परस्मै० ॥

१. सुवति ॥ २. सुवतु ॥ ३. असुवत् ॥ ४. सुवेत् ॥ ५. सुषाव । सुषवतुः । सुषवुः ॥ **म०** सुषविथ । सुषवथुः ॥ ६. सविता ॥ **म०** सवितासि ॥ ७. सविष्यति ॥ ८. सूयात् ॥ ९. असावीत्[1] । असाविष्टाम् ॥ १०. असविष्यत् ॥ कर्मादिषु **'सवति'** (२८४) वत् । सूर्यः । सूर्या । सूरी मानुषी चेत् । प्रसवी । सवित्रम् । सूरः ॥

[५१८] **कॄ**=विक्षेपे । सकर्म० । सेट् । परस्मै० ॥

१. किरति[2] ॥ २. किरतु ॥ ३. अकिरत् ॥ ४. किरेत् ॥ ५. **प्र०** चकार । चकरतुः[3] । चकरुः ॥ **म०** चकरिथ ॥ **उ०** चकार–चकरिव ॥ ६. करिता–करीता[4] ॥ ७. करिष्यति–करीष्यति ॥ ८. कीर्यात् ॥ ९. अकारीत्[5] । अकारिष्टाम् ॥ १०. अकरिष्यत् ॥ उपस्किरति[6] । उपचस्कार[7] । उपास्किरत् । प्रतिस्किरति[8] । अवकिरति[9] । अवाकिरत्

१. सप्तमो लुङ् । २. **ऋत इद्धातोः** (२९२) दिशि दिशि किरति सजलकणजालम् इति जयदेवः । ३. **ऋच्छत्यॄताम्** (२८१) इति गुणः । ४. वृतो वा (२९२) इति वा दीर्घः । ५ सप्तमो लुङ् । ६. **किरतौ लवने** । उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । ७. **अडभ्यासव्यवायेऽपि** । ८. **हिंसायां प्रतेश्च** । उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । ९. अवाकिरन्बाललताः प्रसूनैः । इति रघुः । १०. **किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्** । इत्यात्मनेपदम् । अपस्किरते वृषो हृष्टः । कुक्कुटो भिक्षार्थी । श्वा आश्रयार्थी । **अपाच्चतुष्पाच्छकुनिष्वालेखने** । इति सुट् ।

**कर्मणि**—कीर्यते। ५. चक्रे। **णिचि**—कारयति-ते। ९. अचीकरत्। **सनि**—चिकरिषति[1]। **यङि**—चेकीर्यते। **यङ्लुकि**—चाकर्ति-चाकरीति। **कृत्सु**—करितव्यम्-करीतव्यम्। करणीयम्। कार्यम्। कीर्णः[2]। किरन्। किरती-किरन्ती। करितुम्-करीतुम्। करणम्। कीर्त्वा। विकीर्य। उपस्करः। अवकरः। विष्किरः। विकिरः। अवकीर्णी ॥

[५१९] **गॄ**=निगरणे। सकर्म०। सेट्। परस्मै० ॥

१. गिरति-गिलति[3] ॥ २. गिरतु-गिलतु ॥ ३. अगिरत्-अगिलत् ॥ ४. गिरेत्-गिलेत् ॥ ५. जगार-जगाल। जगरतुः-जगलतुः। जगरुः-जगलुः ॥ **म०** जगरिथ-जगलिथ ॥ ६. गरिता[4]-गरीता। गलिता-गलीता ॥ ७. गरिष्यति-गरीष्यति। गलिष्यति-गलीष्यति ॥ ८. गीर्यात् ॥ ९. अगारीत्[5]-अगालीत् ॥ १०. अगरिष्यत् ॥ सङ्गिरन्ते[6]। ५. सञ्जगरिरे ॥ अवगिरते[7]। उद्=उद्गमने। उद्गिरति।

---

१. **किरश्च पञ्चभ्यः**। कॄ गॄ दृङ् धृङ् प्रच्छ् एभ्यः सन इट् स्यात्। २. **ॠत इद्धातोः**(२९२)। **हलि च**। **रदाभ्याम्**—(२१)। ३ **ॠत इद्धातोः**। **अचि विभाषा**। गिरते रेफस्य लत्वं वा स्यादजादौ। ४. तासादिषु **सार्वधातुकार्धधातुकयोः** (पृ० ३) इति गुणः। **वॄतो वा**। ५. सप्तमो लुङ्। ६. **समः प्रतिज्ञाने**। इत्यात्मनेपदम्। सङ्गिरन्तां गिरं ताम्। इति चंपू रा। सारङ्गं कतिचिच्च सञ्जगरिरे भूच्छायमैच्छन् परे। ७. **अवाद्गः**। इत्यात्मनेपदम्। तथाऽवगिरमाणैश्च पिशाचैर्मांसशोणितम्। इति भट्टिः।

**कर्मणि**—गीर्यते । **णिचि**—गारयति-गालयति । **सनि**—जिगरिषति-जिगलिषति । **यङि**—जेगिल्यते । **यङ्लुकि**—जागरीति-जागलीति-जागर्ति ॥ **कृत्सु**—गरितव्यम्-गलितव्यम् । गरणीयम्-गलनीयम् । गार्यम् । गीर्णम् । गिरन्-गिलन् । गिरती-गिलती-गिरन्ती-गिलन्ती । गरितुम्-गलितुम्-गरीतुम्-गलीतुम् । गरणम्-गलनम् । गीर्त्वा । निगीर्य ॥ गलो=ग्रीवा । गरो=विषः । निगारः । उद्गारः । गुरुः । गरिमा । गरिष्ठः । गरीयान् । गर्मः ॥ मुदं गिरतीति=मुद्गरः ॥

[५२०] दृङ्=आदरे । सकर्म० । अनिट् । आत्मने० । प्रायेणाय-माङ्पूर्वः ॥

१. आद्रियते ॥ २. आद्रियताम् ॥ ३. आद्रियत ॥ ४. आद्रियेत ॥ ५. प्र० आदद्रे । आदद्राते ॥ म० आदद्रिषे ॥ ६. आदर्ता ॥ ७. आदरिष्यते ॥ ८. आदृषीष्ट ॥ ९. आदृत । आदृषाताम् । १०. आदरिष्यत ॥

**कर्मणि**—आद्रियते । ५. आदद्रे ॥ **णिचि**—आदारयति-ते । ९. आदीदरत्-त । **सनि**—आदिदरिषते । **यङि**—आदेद्रीयते । **यङ्लुकि**—आददर्ति-आदरीदरति इत्यादि । **कृत्सु**—आदर्तव्यः ।

---

१. **निगरणचलनार्थेभ्यश्च** । इति परस्मैपदमेव । २. **किरश्च पञ्चभ्यः** (५१८) । ३. **लुपसदचरे**—ति भावगर्हायां यङ् । गर्हितं गिरति । **ग्रो यङि** । गिरते रेफस्य लत्वं स्याद्यङि । ४. रिङ् इयङ् च । वाक्यं नाद्रियते च बान्धवजनः । ५. **ऋद्धनोः स्ये** । ६. दशमो लुङ् । **ह्रस्वादङ्गात्** । ७. **किरश्च पञ्चभ्यः** (५१८) ।

आदरणीयः । आदृत्यः[1] । आदृतः । आद्रियमाणः । आदर्तुम् । आदरणम् । दृत्वा । आदृत्य । आदरी । आदरः[2] । आदृतिः ।

[५२१] धृङ्=अवस्थाने । अकर्मकः । अनिट् । आत्मने० ॥

१. ध्रियते[3] ॥ ५. दध्रे । इत्यादि सर्व 'दरति' (५२०) वत् ॥ **कृत्सु**—विशेषः । धार्यम् । आधारः । धर्मम् ।

[५२२] **प्रच्छ**=ज्ञीप्सायाम् । सकर्म० । अनिट् । परस्मै० ।

१. पृच्छति[4] ॥ २. पृच्छतु ॥ ३. अपृच्छत् ॥ ४. पृच्छेत् ॥ ५. **प्र०** पप्रच्छ । पप्रच्छतुः ॥ **म०** पप्राच्छिथ—पप्रष्ठ ॥ **उ०** पप्रच्छिव ॥ ६. प्रष्टा ॥ ७. प्रक्ष्यति ॥ ८. पृच्छ्यात् ॥ ९. अप्राक्षीत्[5] । अप्राष्टाम् । अप्राक्षुः ॥ १०. अप्रक्ष्यत् ॥ आपृच्छते[6] । संपृ

**कर्मणि**—पृच्छ्यते[8] । **सनि**—पिपृच्छिषति[9] । **णिचि**—प्रच्छयति–ते । **यङि**—परीपृच्छ्यते । **यङ्लुकि**—पाप्रष्टि–पाप्रच्छीति । **कृत्सु**—प्रष्टव्यम् । प्रच्छनीयम् । प्रच्छ्यम् । पृष्टः । पृच्छन् ।

---

१ **एतिस्तुशास्वृदृजुषः क्यप्** । **ह्रस्वस्य पिति**—(३००) इति तुक् । २ भूयान्दारार्थमादरः । ३. ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् । ४. ग्रहिज्ये—(३२१)ति सम्प्रसारणम् । ५. षष्ठो लुङ् । **वदव्रजे**—(पृ० १२)ति वृद्धिः । झलि सिचो लोपः । अप्राक्षीच्च निशाचरान् (१५ । ५ भट्टिः) । ६. **आङि नुपृच्छयोरुपसंख्यानम्** । इति तङ् । आपृच्छस्व प्रियसखममुम् । इति मेघः । ७. **समो गम्यृच्छिस्वरत्यर्तिश्रुविदिभ्यः** । इति तङ् । ८. यकः कित्त्वात्सम्प्रसारणम् । ९. **किरश्च पञ्चभ्यः** । (५१८) । **रुदविदे**-(३७१)ति कित्त्वात्सम्प्रसारणम् ।

पृच्छती–पृच्छन्ती। प्रक्ष्यन्। प्रष्टुम्। प्रच्छनम्। पृष्ट्वा। आपृच्छ्य। प्रश्नः। पृच्छा॥

[५२३] **सृज**=विसर्गे। सकर्म०। अनिट्। परस्मै०॥

१. सृजति॥ २. सृजतु॥ ३. असृजत्॥ ४. सृजेत्॥ ५. प्र० ससर्ज। ससृजतुः॥ म० ससर्जिथ[1]-सस्रष्ठ॥ उ० ससृजिव॥ ६. स्रष्टा॥ ७. स्रक्ष्यति॥ ८. सृज्यात्॥ ९. अस्राक्षीत्[2]। अस्राष्टाम्। अस्राक्षुः॥

**कर्मणि**—सृज्यते। **णिचि**—सर्जयति-ते। **सनि**—सिसृक्षति। **यङि**—सरीसृज्यते। **यङ्लुकि**—सरीस्रष्टि। **कृत्सु**—स्रष्टव्यम्। सर्जनीयम्। सृज्यम्। पाणिभ्यां सृज्यते पाणिसर्ज्या[3]=रज्जु। सृष्टः। सृजन्। सृजती–सृजन्ती। स्रक्ष्यन्। स्रष्टुम्। सर्जनम्। सृष्ट्वा। विसृज्य॥ सृष्टिः। स्रक्। रज्जुः। उद्=उत्सर्गे। उत्सृजति।

[५२४] **टु मस्जो**=शुद्धौ। अकर्म०। अनिट्। परस्मै०॥

१. मज्जति[4]॥ २. मज्जतु॥ ३. अमज्जत्॥ ४. मज्जेत्॥ ५. ममज्ज। ममज्जतुः॥ म० ममज्जिथ[5]–ममङ्क्थ॥ उ० ममज्ज। ममज्जिव॥ ६. मङ्क्ता॥ ७. मङ्क्ष्यति॥ ८. मज्ज्यात्॥ ९. अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षु॥ १०. अमङ्क्ष्यत्॥

---

१. **विभाषा सृजिदृशोः**। इति थलि इड्विकल्पः। २. षष्ठो लुङ्। ३ **पाणौ सृजेर्ण्यद्वाच्यः**। ४ मस्ज्+अ+ति इत्यत्र सस्य श्चुत्वेन शः। तस्य पुनर्जश्त्वेन जः। सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा। इति भवभूतिः। ५. भारद्वाजनियमात्थलि इड्विकल्पः। अनिट्पक्षे **मस्जिनशो–(४४२)**रिति नुम्।

**भावे**—मज्ज्यते । **णिचि**--मज्जयति । ९. अममज्जत् । **सनि**--मिमङ्क्षति । **यङि**--मामज्ज्यते । **यङ्लुकि**--मामङ्क्ति ॥ **कृत्सु**--मङ्क्तव्यम् । मज्जनीयम् । मज्ज्यम् । मग्नः । मज्जन् । मज्जती-मज्जन्ती । मङ्क्ष्यन् । मङ्क्तुम् । मज्जनम् । मङ्क्त्वा । निमज्ज्य ॥ मज्जा । मज्जानौ ।

[५२५] **स्पृश**=संस्पर्शे सकर्म० । अनिट् । परस्मै० ॥

१. स्पृशति ॥ २. स्पृशतु ॥ ३. अस्पृशत् ॥ ४. स्पृशेत् ॥ ५. पस्पर्श । पस्पृशतुः ॥ म० पस्पर्शिथ । पस्पृशथुः ॥ उ० पस्पर्श ॥ पस्पृशिव ॥ ६. स्प्रष्टा-स्पर्ष्टा ॥ ७. स्प्रक्ष्यति-स्पर्क्ष्यति ॥ ८. स्पृश्यात् ॥ ९. अस्प्राक्षीत्-अस्पार्क्षीत्-अस्पृक्षत् ॥ १०. अस्प्रक्ष्यत् ॥

**कर्मणि**--स्पृश्यते । **णिचि**--स्पर्शयति । **सनि**--पिस्पृक्षति । **यङि**--परीस्पृश्यते । **यङ्लुकि**--परीस्पार्ष्टि-पर्स्पार्ष्टि-परिस्पार्ष्टि-परीस्पृशीति-परिस्पृशीति इत्यादि । **कृत्सु**--स्प्रष्टव्यम्-स्पर्ष्टव्यम् । स्पर्शनीयम् । स्पृश्यम् । स्पृष्टः । स्पृशन् । स्पृशती-स्पृशन्ती । स्प्रक्ष्यन् । स्प्रष्टुम्-स्पर्ष्टुम् । स्पर्शनम् । स्पृष्ट्वा । संस्पृश्य ॥ मन्त्रस्पृक् । उदकस्पर्शः ॥ उप=आचमने । उपस्पृशति । णिजन्तोऽयं दानार्थेऽपि ॥

---

१. **ओदितश्च** । इति निष्ठानत्वम् । २. **अनुदात्तस्य चर्दुपधस्ये-(३९२)** ति झल्यकिति वा अमागमः । अमागमे यणादेशः । तदभावे गुणः । ३. लुङि षष्ठी विधा । सिचि **अनुदात्तस्ये--(३०२)**ति अमागमपक्षे रूपम् । ४. अमागमाभावपक्षे **सिचिवृद्धि** (२८४)रिति वृद्धौ रूपम् । ५. **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः** । इति सिजभावे **शल इगुपधा**दिति क्से रूपम् । पञ्चमी विधा । ६ **ऋदुपधा**—(२२४)दिति क्यप् । ७. **स्पृशोऽनुदके क्विन्** ।

[५२६] **विच्छ**=गतौ । सकर्म० । सेट् । परस्मै० ॥

१. विच्छायति[1] ॥ २. विच्छायाञ्चकार-विविच्छ । इत्यादि सर्वं '**धूपायति**' (१२४) वत् ॥ **सनि**—विविच्छायिषति-विविच्छिषति । **यङि**—वेविच्छ्यते ॥ **विश्नः** ।

[५२७] **विश**=प्रवेशने । सकर्म० । अनिट् । परस्मै० ॥

१. विशति ॥ २. विशतु ॥ ३. अविशत् ॥ ४. विशेत् ॥ ५. प्र० विवेश । विविशतुः । विविशुः ॥ म० विवेशिथ । विविशथुः । विविश ॥ उ० विवेश । विविशिव । विविशिम ॥ ६. वेष्टा ॥ ७. वेक्ष्यति ॥ ८. विश्यात् ॥ ९. अविक्षत्[2] ॥ १०. अवेक्ष्यत् ॥ निविशते[3] ॥

**कर्मणि**—विश्यते । ९. अवेशि । **णिचि**—वेशयति-ते । **सनि**—विविक्षति । **यङि**—वेविश्यते । **यङ्लुकि**—वेविशीति-वेवेष्टि ॥ **कृत्सु**—वेष्टव्यम् । वेशनीयम् । वेश्यम् । विष्टः । विशन् । विशती-विशन्ती । वेष्टुम् । वेशनम् । विष्ट्वा । प्रविश्य ॥ विट् विशौ विशः । वेशः । वेश्म । वेशन्तः । संविशति[4]=शेते । निर्विशति[5]=अनुभवति । उपविशति=निषीदति ॥

[५२८] **मृश**=आमर्शने । आमर्शनं स्पर्शः । सकर्मकः । अनिट् । परस्मै० ॥

१. **गुपूधूपे**—(१२३) ति सार्वधातुके आयप्रत्ययः । २. लुङि पञ्चमी विधा । ३. **नेर्विशः** । इत्यात्मनेपदम् । धर्ममभिनिविशते । नवाम्बुदश्यामतनुर्न्यविक्षत । इति माघः । अभिन्यविक्षथास्त्वं मे यथैवाऽव्याहता मनः । इति भट्टिः । ४. संविष्टः कुशशयने निशां निनाय—इति रघुः । ५ एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखः स पार्थिवः—इति रघुः ।

१. मृशति ॥ ५. ममर्श ॥ इत्यादि **'स्पृशति'** (५२९) वत् ॥ अभिमृशति=मृद्नाति पराभावयति वा । विमृशति[1]=चिन्तयति ॥

[५२९] **णुद्**=प्रेरणे । सकर्म० । अनिट् । परस्मै० ॥

सर्वं परस्मैपदि **'नुदति'** (४२०) वत् । इह पुन पाठ· कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थः ॥

[५३०] **षद्लृ**=विशरणगत्यवसादनेषु । विशरणे अकर्म० । सेट् । परस्मै० ॥

सर्वं भौवादिक **'सीदति'** (२४६) वत् ॥ इह पुनः पाठे प्रयोजनं तु शतरि स्त्रियां 'सीदती-सीदन्ती' इति नुम्विकल्पः ।

[५३१] **मिल**=सङ्गमे । अकर्म० । सेट् । उभयपदी ॥

१. मिलति-मिलते ॥ २. मिलतु-ताम् ॥ ३. अमिलत्-त ॥ ४. मिलेत्--त ॥ ५. मिमेल-मिमिले ॥ ६. मेलिता । मेलितासि-से ॥ ७. मेलिष्यति-ते ॥ ८. मिल्यात्-मिलिषीष्ट ॥ ९. अमेलीत्[2]-अमेलिष्ट[3] ॥ १०. अमेलिष्यत्-त ॥

**भावे**—मिल्यते । **णिचि**—मेलयति-ते । **सनि**—मिमिलिषते-मिमेलिषते । **यङि**—मेमिल्यते । **यङ्लुकि**—मेमिलीति-मेमेल्ति ॥ **कृत्सु**—मेलितव्यम् । मेलनीयम् । मेल्यम् । मिलितः । मिलन् । मिलती-मिलन्ती । मिलमानः । मेलितुम् । मेलनम्[4] । मिलित्वा-मेलित्वा । संमिल्य-संमेल्य ॥

---

१. वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः । २. सप्तमो लुङ् । ३. एकादशो लुङ् । ४. व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् । इति प्रयोगात् **'मिलनम्'** इत्यपि ।

[५३२] मुच्लृ=मोक्षणे । सकर्म० । अनिट् । उभयपदी० ॥

१. मुञ्चति–ते[1] ॥ २. मुञ्चतु-ताम् ॥ ३. अमुञ्चत्–त ॥ ४. मुञ्चेत्–त ॥ ५. प्र० मुमोच-मुमुचे । मुमुचतुः–मुमुचाते । मुमुचु–मुमुचिरे ॥ म० मुमोचिथ–मुमुचिषे ॥ उ० मुमुचिव–मुमुचिवहे ॥ ६. मोक्ता ॥ म० मोक्तासि-से ॥ ७. मोक्ष्यति–ते ॥ ८. मुच्यात्–मुक्षीष्ट ॥ ९. प्र० अमुचत्[2] । अमुचताम् । अमुचन् ॥ आत्मने०—अमुक्त[3] । अमुक्षाताम् । अमुक्षत ॥ १०. अमोक्ष्यत्–त ॥

कर्मणि—मुच्यते । णिचि—मोचयति–ते । सनि—मुमुक्षति–ते । यङि—मोमुच्यते । यङ्लुकि—मोमोक्ति । कृत्सु—मोक्तव्यम् । मोचनीयम् । मोच्यम् । मुक्तः । मुञ्चन् । मुञ्चती–मुञ्चन्ती । मुञ्चमानः । मोक्ष्यन् । मोक्तुम् । मोचनम् । मुक्त्वा । उन्मुच्य ॥ मोक्षः । मुक्तिः । जलमुक् । आमुञ्चति[4]=धारयति । प्रतिमुञ्चति[5]=प्रत्यर्पयति । विमुञ्चति ॥

[५३३] लुप्लृ=छेदने । सकर्म० । अनिट् । उभय० । मुचादिः ॥

१. लुम्पति[6]–ते । २. लुम्पतु–ताम् ॥ ३. अलुम्पत्–त ॥ ४. लुम्पेत्–त ॥ ५. परस्मैपदे—प्र० लुलोप ॥ लुलुपतुः । लुलुपुः ॥ म० लुलोपिथ । लुलुपथुः । लुलुप ॥ उ० लुलोप । लुलुपिव ॥ आत्म—प्र० लुलुपे । लुलुपाते ॥ म० लुलुपिषे ॥ उ० लुलुपे ।

१. शे मुचादीनाम् (५३२) इति नुम् । २ लृदित्वादङ् । द्वितीयो लुङ् । स कालेनामुचत्क्वचित् (भट्टिः । ६ । २४) । ३ दशमो लुङ् । झलि सिचो लोपः । ४. आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते—इति रघुः । ५. अमुं तुरङ्गं प्रतिमोक्तुमर्हसि—इति रघुः । ६. शे मुचादीनाम् (५३२) इति नुम् ।

लुलुपिवहे ॥ ६. प्र० लोप्ता । म० लोप्तासि-से ॥ ७. लोप्स्यति-ते । ८. लुप्यात्-लुप्सीष्ट ॥ ९. अलुपत् । अलुपताम् । अलुपन् ॥ आत्म०—अलुप्त । अलुप्साताम् । अलुप्सत ॥ १०. अलोप्स्यत्-त ॥

**कर्मणि**—लुप्यते । **णिचि**—लोपयति-ते । ९. अलूलुपत्-त-अलुलोपत्-त । **सनि**—लुलुप्सति-ते । **यङि**—लोलुप्यते । **यङ्लुकि**—लोलोप्ति-लोलुपीति ॥ **कृत्सु**—लोप्तव्यम् । लोपनीयम् । लोप्यम् । लुप्तः । लुम्पन् । लुम्पती-लुम्पन्ती । लुम्पमानः । लोप्स्यन्-लोप्स्यमानः । लोप्तुम् । लोपनम् । लुप्त्वा । विलुप्य । लोपः । लोप्त्वम् ॥

[५३४] **विद्लृ=लाभे** । सकर्म० । अनिट् । व्याघ्रभूत्यादिमते सेट्कोऽप्ययं धातुः । उभयपदी । मुचादिः ॥

१. विन्दति-ते ॥ २. विन्दतु-विन्दताम् ॥ ३. अविन्दत्-त ॥ ४. विन्देत्-त ॥ ५. विवेद-विविदे ॥ ६. वेत्ता-वेदिता ॥ ७. वेत्स्यति-ते—वेदिष्यति-ते ॥ ८. विद्यात्-वित्सीष्ट ॥ ९. अविदत्-अवित्त । अविदताम्-अवित्साताम् । अविदन्-अवित्सत ॥ १०. अवेत्स्यत्-त ॥

**कर्मणि**—विद्यते । **णिचि**—वेदयति-ते । **सनि**—विविदिषति-ते-विवेदिषति-ते । **यङि**—वेविद्यते । **यङ्लुकि**—वेवेत्ति । **कृत्सु**—वेत्तव्यम् । वेदनीयम् । वेद्यम् । वित्तम्=धनम् । वित्तः=

---

१-२. **मुच्** (५३२) धातुवत् । ३. **काण्यादीनां वेति वक्तव्यम्** । इत्युपधाह्रस्वविकल्पः । ४ **वित्तो भोगप्रत्यययोः** । इति निष्ठान्तस्य निपातः ।

पुरुष.। अन्यत्र[1] विन्नः। विन्दन्। विन्दती–विन्दन्ती। वेत्तुम्–वेदितुम्। वेदनम्। वित्त्वा–विदित्वा–वेदित्वा। संविद्य। विन्दः॥

[५३५] **लिप**=उपदेहे। उपदेहो लेपनम्। सकर्म०। अनिट्। उभयपदी। मुचादिः॥

१. लिम्पति–ते॥ इत्यादि '**लुम्पति**' (५३३) वत्। ९. अलिपत्[2]। अलिपताम्। अलिपन्। **आत्म**०—अलिपत[3]। अलिपेताम्। अलिपन्त॥ **पक्षे**—अलिप्त[4]। अलिप्साताम्। अलिप्सत॥ लिम्पः। लिपिः–लिबिः। निलिम्पाः=देवाः। अव=गर्वे, अक०। अवलिम्पति। अवलेपः[5]। अनु–चन्दनादिविमर्दने। अनुलिम्पति[6]।

[५३६] **षिच**=क्षरणे। सकर्म०। अनिट्। उभय०। मुचादिः॥

१. सिञ्चति–ते॥ ५. प्र० सिषेच। सिषिचतुः॥ **म**० सिषेचिथ-सिषिचिषे॥ **उ**० सिषिचिव-सिषिचिवहे॥ ६. सेक्ता॥ ७. सेक्ष्यति–सेक्ष्यते॥ ८. सिच्यात्–सिक्षीष्ट॥ ९. असिचत्[7]। असिचताम्। असिचन्॥ **आत्मने**०—असिचत। असिचेताम्। असिचन्त॥ **पक्षे**—असिक्त। असिक्षाताम्। असिक्षत॥ १०. असेक्ष्यत्–त॥

---

१. भोगप्रत्यययोरन्यत्र विन्नः। २. **लिपि सिचि ह्वश्च**। इत्यङ्। द्वितीयो लुङ्। ३ **आत्मनेपदेष्वन्यतरस्याम्**। इत्यङ्। लुङि अष्टमी विधा। ४. अङभावपक्षे द्वादशो लुङ्। ५. मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम्। ६. विरहार्तिदलध्दृदय्युतासृगनुलिप्तामिवेति माघः। ७ लुङि '**लुम्पति**' (५३५) वत्।

**कर्मणि**—सिच्यते। **णिचि**—सेचयति-ते। ९. असीषिचत्–त। **सनि**—सिसिक्षति। **यङि**—सेसिच्यते। **यङ्लुकि**—सेषिचीति-सेषेक्ति ॥ **कृत्सु**—सेक्तव्यम्। सेचनीयम्। सेच्यम्। सिक्तः। सिञ्चन्। सिञ्चती-सिञ्चन्ती। सिञ्चमानः। सेचनम्। सिक्त्वा। निषिच्य। सेक्रम् ॥ अभिषिञ्चति। अभिषेकः। निषिञ्चति। निषेकः। उत्सिञ्चति। उत्सिषिचे। उत्सेको गर्वः ॥

[५३७] **कृती**=छेदने। सकर्म०। सेट्। परस्मै०। मुचादिः ॥

१. कृन्तति। ५. **प्र०** चकर्त। चकृततुः ॥ **म०** चकर्तिथ। चकृथतुः ॥ **उ०** चकर्त। चकृतिव ॥ ६. कर्तिता ॥ ७. कर्तिष्यति–कर्त्स्यति ॥ ८. कृत्यात् ॥ ९. अकर्तीत्। अकर्तिष्टाम् ॥ १०. अकर्तिष्यत्–अकर्त्स्यत् ॥

**कर्मणि**—कृत्यते। **णिचि**—कर्तयति--ते। **सनि**—चिकर्तिषति। **यङि**—चरीकृत्यते। **यङ्लुकि**—चरीकर्ति-चरीकृतीति ॥ **कृत्सु**—कर्तितव्यम्। कर्तनीयम्। कृत्यम्। कृत्तः। कृन्तन्। कृन्तती–कृन्तन्ती। कर्तितुम्। कर्तनम्। कर्तित्वा। निकृत्य ॥ विकर्तनः। कृत्तिः। कृत्स्नम् ॥

---

१. **स्तौतिण्योरेवे**ति नियमान्न षत्वम्। २ **सिचो यङि**। इति न षत्वम्। ३. तानि तस्मिन्समस्तानि न तस्योत्सिषिचे मनः। इति रघुः। ४. प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्। ५. भुजौ चकृततुस्तस्य (भट्टिः। ६। ४५)। ६. **सेऽसिचि कृतचृते** (३९७)ति वेट्।

[५३८] **खिद्**=परिघाते। सकर्म०। अनिट्। परस्मै०। मुचादिः॥

१. खिन्दति॥ ५. प्र० चिखेद। चिखिदतुः॥ म० चिखेदिथ॥ उ० चिखिदिव॥ ६. खेत्ता॥ ७. खेत्स्यति॥ ८. खिद्यात्॥ ९. अखैत्सीत्[1]। अखैत्ताम्॥ १०. अखेत्स्यत्॥

**कर्मणि**—खिद्यते। **णिचि**—खेदयति। **सनि**—चिखित्सति। **यङि**—चेखिद्यते। **यङ्लुकि**—चेखिदीति- चेखेत्ति। **कृत्सु**—खेत्तव्यम्। खेदनीयम्। खेद्यम्। खिन्नः[2]। खिन्दन्। खिन्दती--खिन्दन्ती। खेत्तुम्। खेदनम्। खित्त्वा। परिखिद्य॥

इति तुदादयः॥ ६॥

१. षष्ठो लुङ्। **वदव्रजे** (पृ० १२)ति वृद्धिः। २. **रदाभ्या**(२१)मिति निष्ठातस्य नत्वम्।

॥ श्रीः ॥

# बृहद्धातुरूपावल्याम् ।

## अथ रुधादयः ॥ ७ ॥

[५३९] रुधिर्=आवरणे । द्विकर्म० । अनिट् । उभय० ।

### परस्मैपदे—

१. प्र० रुणद्धि[1] । रुन्धः[2] । रुन्धन्ति ॥ म० रुणत्सि । रुन्धः । रुन्ध ॥ उ० रुणध्मि[3] । रुन्ध्वः । रुन्ध्मः ॥ २. प्र० रुणद्धु–रुन्धात् । रुन्धाम् । रुन्धन्तु ॥ म० रुन्धि[4]–रुन्धात् । रुन्धम् । रुन्ध ॥ उ०

---

१. रुध्+लट् इति स्थिते, **रुधादिभ्यः श्नम्** । कर्त्रर्थे सार्वधातुके परे धातोः श्नम् स्यात् ' इति श्नम् । शमावितौ । तयोर्लोपे 'न' मात्रं शिष्यते । श्नमो मित्त्वात्सोन्त्यादचः परो भवति । नित्यत्वात्स गुणं बाधते । रु न ध् ति इति जाते **झषस्तथोर्धोऽधः** (१८९) इति तकारस्य धत्वे रुनध् धि इति जाते **झलां जश् झशि** । इति प्रथमधकारस्य दकारे, **रषाभ्यां नो णः** । इति नस्य णत्वे च **'रुणद्धि'** इति रूपम् । अत्र 'रुनध' इत्यङ्गम् । २. रुनध्+तस् इति स्थिते **श्नसोरल्लोपः** (३६९) इत्यकारलोपे णत्वस्यासिद्धत्वादनुस्वारे **'रुन्धः'** इति रूपम् । ३. रुणध्मि सवितुर्मार्गम् (भट्टिः । ६ । ३५) । ४. **सेर्ह्यपिच्च** (पृ० ४) इति हेरपित्त्वात् **श्नसो** (३६९)रित्यल्लोपे **हुझल्भ्योहेर्धिः** (३२६) इति हेर्धित्वे **रुन्धि'** इति रूपम् ।

रुणधानि। रुणधाव[1]। रुणधाम ॥ ३. प्र० अरुणत्[2]–द्। अरुन्धाम्। अरुन्धन् ॥ म० अरुणः[3]–त्–द्। अरुन्धम्। अरुन्ध ॥ उ० अरुणधम्। अरुन्ध्व। अरुन्ध्म ॥ ४. प्र० रुन्ध्यात्। रुन्ध्याताम्। रुन्ध्युः ॥ म० रुन्ध्याः। रुन्ध्यातम्। रुन्ध्यात ॥ उ० रुन्ध्याम्। रुन्ध्याव। रुन्ध्याम ॥

५. प्र० रुरोध। रुरुधतुः। रुरुधुः ॥ म० रुरोधिथ[4]। रुरुधथुः। रुरुध ॥ उ० रुरोध। रुरुधिव। रुरुधिम ॥ ६. प्र० रोद्धा। रोद्धारौ। रोद्धारः ॥ म० रोद्धासि। रोद्धास्थः। रोद्धास्थ ॥ उ० रोद्धास्मि। रोद्धास्वः। रोद्धास्मः ॥ ७. प्र० रोत्स्यति। रोत्स्यतः। रोत्स्यन्ति ॥ म० रोत्स्यसि। रोत्स्यथः। रोत्स्यथ ॥ उ० रोत्स्यामि। रोत्स्यावः। रोत्स्यामः ॥ ८. रुध्यात्। रुध्यास्ताम्। रुध्यासुः ॥ म० रुध्याः। रुध्यास्तम्। रुध्यास्त ॥ उ० रुध्यासम्। रुध्यास्व। रुध्यास्म ॥ ९. प्र० अरुधत्[5]। अरुधताम्। अरुधन् ॥ म० अरुधः। अरुधतम्। अरुधत ॥ उ० अरुधम्। अरुधाव। अरुधाम ॥ **पक्षे**— प्र० अरौत्सीत्[6]। अरौद्धाम्। अरौत्सुः ॥ म० अरौत्सीः। अरौत्सम्। अरौत्स ॥ उ० अरौत्सम्। अरौत्स्व। अरौत्स्म ॥ १०. प्र० अरो-

१ **आडुत्तमस्य पिच्च** (पृ० ५) इति वमादीनामपि पित्त्वात् अल्लोपो न। २ अरुणध्+त् इति स्थिते **हल्ङ्याबि**ति तिपो लोपे धस्य चर्त्वविकल्पे रूपे। ३. **हल्ङ्याबि**ति सिपो लोपे चर्त्वविकल्पे **दश्च** (३६८) इति वा रुत्वे च रूपाणि। ४. क्रादिनियमादिट्। ५ **इरितो वा**। इति वा अङ्। अङ्पक्षे द्वितीयो लुङ्। ६. अङभावपक्षे परस्मैपदे षष्ठो लुङ्। **वदव्रजे**ति वृद्धिः। अरौत्सीत्त्रिशिराः शरैः (भट्टिः। १५। ८०)।

त्स्यत् । अरोत्स्यताम् । अरोत्स्यन् ॥ म० अरोत्स्यः । अरोत्स्यतम् । अरोत्स्यत ॥ उ० अरोत्स्यम् । अरोत्स्याव । अरोत्स्याम ॥

## आत्मनेपदे—

१. प्र० रुन्धे । रुन्धाते । रुन्धते[1] ॥ म० रुन्त्से । रुन्धाथे । रुन्ध्वे ॥ उ० रुन्धे । रुन्ध्वहे । रुन्ध्महे ॥ २. प्र० रुन्धाम् । रुन्धाताम् । रुन्धताम् ॥ म० रुन्त्स्व । रुन्धाथाम् । रुन्ध्वम् ॥ उ० रुणधै । रुणधावहै । रुणधामहै ॥ ३. प्र० अरुन्ध । अरुन्धाताम् । अरुन्धत ॥ म० अरुन्धाः । अरुन्धाथाम् । अरुन्ध्वम् ॥ उ० अरुन्धि । अरुन्ध्वहि । अरुन्ध्महि ॥ ४. प्र० रुन्धीत । रुन्धीयाताम् । रुन्धीरन् ॥ म० रुन्धीथाः । रुन्धीयाथाम् । रुन्धीध्वम् ॥ उ० रुन्धीय । रुन्धीवहि । रुन्धीमहि ॥

५. प्र० रुरुधे । रुरुधाते । रुरुधिरे ॥ म० रुरुधिषे । रुरुधाथे । रुरुधिध्वे ॥ उ० रुरुधे । रुरुधिवहे । रुरुधिमहे ॥ ६. प्र० रोद्धा ॥ म० रोद्धासे ॥ उ० रोद्धाहे ॥ ७. रोत्स्यते । रोत्स्येते ॥ म० रोत्स्यसे ॥ उ० रोत्स्ये ॥ ८. रुत्सीष्ट । रुत्सीयास्ताम् । रुत्सीरन् ॥ म० रुत्सीष्ठाः । रुत्सीयास्थाम् । रुत्सीध्वम् ॥ उ० रुत्सीय । रुत्सीवहि । रुत्सीमहि ॥ ९. प्र० अरुद्ध[2] । अरुत्साताम् । अरुत्सत ॥ म० अरुद्धाः । अरुत्साथाम् । अरुद्ध्वम् ॥ उ० अरुत्सि । अरुत्स्वहि । अरुत्स्महि ॥ १०. प्र० अरोत्स्यत ॥ म० अरोत्स्यथाः ॥ उ० अरोत्स्ये । अरोत्स्यावहि ॥

१. **आत्मनेपदेष्वनतः** (२) इति झस्य अत् इत्यादेशो रूपम् । २. अरुध्+स्त इति स्थिते **झलो झलि (२५)** इति सिचो लोपः ।

**कर्मणि**—रुध्यते । **णिचि**—रोधयति । ९. अरूरुधत् । **सनि**—रुरुत्सति[1]--रुरुत्सते । **यङि**—रोरुध्यते । **यङ्लुकि**—रोरु-धीति-रोरोद्धि ॥ **कृत्सु**—रोद्धव्यम् । रोधनीयम् । रोध्यम् । रुद्धः । रुन्धन् । रुन्धती । रुन्धानः । रोत्स्यन् । रोत्स्यती-रोत्स्यन्ती । रोद्धुम् । रोधनम् । रुद्ध्वा । निरुद्ध्य ॥ रोधः । रुधिरम् ॥ नि=निरोधे । निरुणद्धि । निरोध=प्रतिबन्धः । उप=उपरोधे । उपरोधो निरोधः । उपरुणद्धि[2] । विरुणद्धि=द्वेष्टि । अनुरुणद्धि=उपकरोति-अनुगृह्णाति वा ।

[५४०] **भिदिर्**=विदारणे । सकर्म० अनिट् । उभय०

## परस्मैपदे

**१. प्र०** भिनत्ति । भिन्तः । भिन्दन्ति ॥ **म०** भिनत्सि । भिन्त्थः । भिन्त्थ ॥ **उ०** भिनद्मि[3] । भिन्द्वः । भिन्द्मः । **२. प्र०** भिनत्तु-भिन्तात् । भिन्ताम् । भिन्दन्तु ॥ **म०** भिन्धि । भिन्तम् । भिन्त ॥ **उ०** भिनदानि । भिनदाव । भिनदाम ॥ **३.** अभिनत् । अभिन्ताम् । अभिन्दन् ॥ **म०** अभिनः-अभिनत् । अभिन्तम् । अभिन्त ॥ **उ०** अभिनदम् । अभिन्द्व । अभिन्द्म ॥ **४.** भिन्द्यात् । भिन्द्याताम् ॥ भिन्द्युः ॥ **म०** भिन्द्याः । भिन्द्यातम् । भिन्द्यात ॥ **उ०** भिन्द्याम् । भिन्द्याव । भिन्द्याम ॥

**५. प्र०** बिभेद । बिभिदतुः ॥ **म०** बिभेदिथ ॥ **उ०** बिभिदिव ॥ **६.** भेत्ता ॥ भेत्तासि ॥ **७.** भेत्स्यति ॥ **८.** भिद्यात् । भिद्यास्ताम् ॥ **९.** अभिदत् । अभिदताम् ॥ **पक्षे**—अभैत्सीत् । अभैत्ताम् ॥ **१०.** अभेत्स्यत् ॥

१ **हलन्ताच्च** । इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । इति कित्वान्न गुणः । २ अभ्युत्सहे सम्प्रति नोपारोध्दुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य । इति रघुः । ३. भिनद्मि कुलपर्वतान् (भट्टिः । ६ । ३५) ।

## आत्मनेपदे—

१. भिन्ते ॥ २. प्र० भिन्ताम् । भिन्दाताम् ॥ म० भिन्त्स्व ॥ उ० भिनदै ॥ ३. प्र० अभिन्त । अभिन्दाताम् ॥ म० अभिन्त्थाः ॥ उ० अभिन्दि ॥ ४. प्र० भिन्दीत ॥ म० भिन्दीथाः ॥ उ० भिन्दीय ॥ ५. प्र० बिभिदे ॥ म० बिभिदिषे ॥ उ० बिभिदिवहे ॥ ६. भेत्ता ॥ म० भेत्तासे ॥ भेत्ताहे ॥ ७. भेत्स्यते ॥ ८. भित्सीष्ट ॥ म० भित्सीष्ठाः ॥ उ० भित्सीय ॥ ९. अभित्त । अभित्साताम् ॥ १०. अभेत्स्यत ॥

**कर्मणि**—भिद्यते । **णिचि**—भेदयति–ते । **सनि**—बिभित्सति--बिभित्सते । **यङि**—बेभिद्यते । **यङ्लुकि**—बेभिदीति--बेभेत्ति ॥ **कृत्सु**—भेत्तव्यम् । भेदनीयम् । भेद्यम् । भित्तम्[1] । भिन्नम् । भिन्दन् । भिन्दती । भिन्दानः । भेत्तुम् । भित्त्वा । विभिद्य । भिदेलिमानि[2]=काष्ठानि । भिद्यो[3]=नदः । भिदुरम् । भिदा । भिदिरम्=वज्रम् । भेदः । निर्भेदः=प्रकाशः । संभेदः=संश्लेषः ॥

[५४१] **छिदिर्**=द्वैधीकरणे । सकर्म० । अनिट् । उभय० ॥

छिनत्ति--छिन्ते इत्यादि '**भिनत्ति**' (५४०) वत् ॥ छिदिरम् । छिदा । शीर्षच्छेद्यः[4] । वि=वियोगे । विच्छिनत्ति । विच्छेदः । उद्=नाशे । उच्छिनत्ति । उच्छेदः ॥

१. **भित्तं शकलम्** । भिन्नमन्यत् । २. **केलिमर उपसंख्यानम्** । इति केलिमर् । ३. **भिद्योद्ध्यौ नदे** । इति क्यबन्तो निपातः । ४ **शीर्षच्छेदाद्यच्च** । इति यत्प्रत्ययः । शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे । इति रघुः ।

[५८२] **रिचिर्**=विरेचने । सकर्म० । अनिट् । उभय० ॥

१. रिणक्ति । रिङ्क्तः । रिञ्चन्ति ॥ म० रिणक्षि । रिङ्क्थः । रिङ्क्थ ॥ उ० रिणच्मि[1] । रिञ्च्व ॥ २. रिणक्तु रिङ्क्तात् ॥ म० रिङ्ग्धि । रिङ्क्तम् ॥ उ० रिणचानि ॥ ३. प्र० अरिणक्-ग्[2] । अरिङ्क्ताम् । अरिञ्चन् ॥ म० अरिणक्-ग् । अरिङ्क्तम् ॥ उ० अरिणचम् । अरिञ्च्व ॥ ४. रिञ्च्यात् । रिञ्च्याताम् ॥ ५. प्र० रिरेच । रिरिचतुः ॥ म० रिरेचिथ ॥ उ० रिरिचिव ॥ ६. रेक्ता ॥ ७. रेक्ष्यति ॥ ८. रिच्यात् । रिच्यास्ताम् ॥ ९. अरिचत् ॥ **पक्षे**— अरैक्षीत् ॥ १०. अरेक्ष्यत् ॥

## आत्मनेपदे—

१. रिङ्क्ते ॥ २. रिङ्क्ताम् ॥ म० रिङ्क्ष्व ॥ उ० रिणचै ॥ ३. अरिङ्क्त । अरिञ्चाताम ॥ म० अरिङ्क्थाः ॥ उ० अरिञ्चि । अरिञ्च्वहि ॥ ४. रिञ्चीत । रिञ्चीयाताम् ॥ ५. रिरिचे ॥ म० रिरिचिषे ॥ उ० रिरिचिवहे ॥ ६. म० रेक्तासे ॥ ७. रेक्ष्यते ॥ ८. रिक्षीष्ट ॥ ९. अरिक्त[3] । अरिक्षाताम् । अरिक्षत ॥ म० अरिक्थाः ॥ उ० अरिक्षि । अरिक्ष्वहि ॥ १०. अरेक्ष्यत ॥

**कर्मणि**—रिच्यते । **णिचि**—रेचयति । ९. अरीरिचत्-त । **सनि**—रिरिक्षति-ते । **यङि**—रेरिच्यते । **यङ्लुकि**—रेरेक्ति-

१ रिणच्मि जलधेस्तोयम् । (भट्टिः ६ । ३६)। २. '**अरुधत्**' वत्
३ '**अरुद्ध**' वत् ।

रोरिचीति ॥ कृत्सु—रेक्तव्यम् । रेचनीयम् । रेच्यम् । रिक्तः । रिञ्चन् । रिञ्चती । रिञ्चानः । रेक्तुम् । रेचनम् । रिक्त्वा । विरिच्य ॥ रेकः । रिक्थम् ॥ अति=अतिक्रमे । सकर्म० । अतिरिणक्ति । अतिरेकः । वि+अति=व्यतिक्रमे । व्यतिरिणक्ति । व्यतिरेकः । उद्=उद्रेकः ।

[५४३] **विजिर्**=पृथग्भावे । सकर्म० । अनिट् । उभय० ॥

१. विनक्ति–विङ्क्ते ॥ इत्यादि 'रिणक्ति' वत् ॥ विवेकः । विवेकी ॥

[५४४] **क्षुदिर्**=सम्पेषणे । सकर्म० । अनिट् । उभय० ॥

१. क्षुणत्ति । क्षुन्तः । क्षुन्दन्ति ॥ म० क्षुणत्सि । क्षुन्थः । क्षुणद्मि[1] । । क्षुन्द्वः ॥ २. प्र० क्षुणत्तु-क्षुन्तात् । क्षुन्ताम् ॥ म० क्षुन्धि ॥ उ० क्षुणदानि ॥ ३. अक्षुणत्[2] । अक्षुन्ताम् । अक्षुन्दन् । अक्षुणः–अक्षुणत्[3] । अक्षुन्तम् । अक्षुन्त ॥ उ० अक्षुणदम् । अक्षुन्द्व ॥ ४. क्षुन्द्यात् ॥ ५. प्र० चुक्षोद । चुक्षुदतुः । चुक्षुदुः ॥ म० चुक्षोदिथ । चुक्षुदथुः ॥ उ० चुक्षुदिव ॥ ६. क्षोत्ता ॥ ७. क्षोत्स्यति ॥ ८. क्षुद्यात् । क्षुद्यास्ताम ॥ ९. प्र० अक्षुदत्[3] । अक्षुदताम्–पक्षे—अक्षौत्सीत् । अक्षौत्ताम् । अक्षौत्सुः[4] ॥ १०. अक्षोत्स्यत् ॥

## आत्मनेपदे—

१. क्षुन्ते । क्षुन्दाते ॥ म० क्षुन्त्से । क्षुन्दाथे । क्षुन्ध्वे ॥

१. क्षुणद्मि सर्पान् पाताले । (भट्टि: ६ । ३६) । २. अक्षुणद्वाजिकुञ्जरम् । (भट्टि: १६ । ६६) । ३. 'अरुधन्'(५३९)वत् । ४. ते तं व्याशिषताक्षौत्सुः पादैः (भट्टि: १५ । ४३) ।

उ० क्षुन्दे । क्षुन्द्वहे ॥ २. क्षुन्ताम् । क्षुन्दाताम् ॥ म० क्षुन्त्स्व ॥ उ० क्षुणदै ॥ ३. प्र० अक्षुन्त । अक्षुन्दाताम् । अक्षुन्दत ॥ म० अक्षुन्थाः ॥ उ० अक्षुन्दि ॥ ४. क्षुन्दीत । क्षुन्दीयाताम् । क्षुन्दीरन् ॥ ५. प्र० चुक्षुदे । चुक्षुदाते । चुक्षुदिरे ॥ म० चुक्षुदिषे ॥ उ० चुक्षुदिवहे ॥ ६. क्षोत्ता ॥ ७. क्षोत्स्यते ॥ ८. क्षुत्सीष्ट । क्षुत्सीयास्ताम् ॥ ९. अक्षुत्त । अक्षुत्साताम् ॥ १०. अक्षोत्स्यत ॥

**कर्मणि**—क्षुद्यते । **णिचि**—क्षोदयति । **सनि**—चुक्षुत्सति-ते । **यङि**—चोक्षुद्यते । **यङ्लुकि**--चोक्षोत्ति--चोक्षोदीति ॥ **कृत्सु**—क्षोत्तव्यम् । क्षोदनीयम् । क्षोद्यम् । क्षुण्णः[1] । क्षुन्दन् । क्षुन्दती । क्षुन्दानः । क्षोत्तुम् । क्षोदनम् । क्षुन्त्वा । संक्षुद्य । क्षुद्रः । क्षोदीयान् । क्षोदिष्ठः । क्षोदिमा । क्षौद्रम् ॥

[५४५] **युजिर्**=योगे । सकर्म० । अनिट् । उभय० ॥

१. युनक्ति । युङ्क्तः । युञ्जन्ति ॥ म० युनक्षि ॥ उ० युनज्मि[2] ॥ २. युनक्तु ॥ म० युङ्ग्धि ॥ उ० युनजानि ॥ ३. अयुनक् । अयुङ्क्ताम् । अयुञ्जन् ॥ म० अयुनक् ॥ उ० अयुनजम् ॥ ४. युञ्ज्यात् । युञ्ज्याताम् ॥ ५. प्र० युयोज । युयुजतुः । युयुजुः ॥ म० युयोजिथ ॥ उ० युयुजिव ॥ ६. योक्ता ॥ ७. योक्ष्यति ॥ ८. युज्यात् । युज्यास्ताम् ॥ ९. अयुजत्[3] । **पक्षे**—अयौजीत् ॥ १०. अयोक्ष्यत् ॥

---

१ रदाभ्यामिति णत्वम् । वीक्ष्य क्षुण्णो ययाऽरिस्तृणमिव महिषस्साऽवतादम्बिका नः । बाणभट्टः । २. यमं युनज्मि कालेन (भट्टिः ६ । ३७) । ३. 'रुधिर्' (५३९) धातोरिवास्यापि लुङि रूपाणि प्रक्रियाश्च ।

## आत्मनेपदे—

१. प्र० यु    युञ्जाते ॥ म० युङ्क्षे ॥ उ० युञ्जे ॥ २. युङ्क्ताम् । युञ्जाताम्    म० युङ्क्ष्व ॥ उ० युनजै ॥ ३. प्र० अयुङ्क्त[१] । अयुञ्जाताम् ॥ म० अयुङ्क्थाः ॥ उ० अयुञ्जि । अयुञ्ज्वहि ॥ ४. युञ्जीत । युञ्जीयाताम् ॥ ५. प्र० युयुजे ॥ म० युयुजिषे ॥ उ० युयुजिवहे ॥ ६. योक्ता ॥ ७. योक्ष्यते ॥ ८. युक्षीष्ट ॥ ९. अयुक्त । अयुक्षाताम् । अयुक्षत ॥ १०. अयोक्ष्यत ॥

**कर्मणि**—युज्यते । **णिचि**—योजयति-ते । **सनि**—युयुक्षति-ते । **यङि**—योयुज्यते । **यङ्लुकि**—योयुजीति-योयोक्ति ॥ **कृत्सु**—योक्तव्यम् । योजनीयम् । युग्यः[२]=गौः । प्रयोज्यः[३] । नियोज्यः । अवश्ययोज्यः । योग्यः । यौगिकः[४] । युक्तः । युञ्जन् । युञ्जती । युञ्जानः । योक्तुम्[५] । योजनम् । युक्त्वा । प्रयुज्य । योत्त्रम्=युगबन्धनम् । योगी । प्रयोगः । युगम् । प्रयुङ्क्ते[६]=निदर्शयति । उपयुङ्क्ते[७]=उपकरोति । नियुङ्क्ते=आज्ञापयति । उद्युङ्क्ते=प्रारभते । अनुयुङ्क्ते=पृच्छति ।

[५४६] ञि इन्धी=दीप्तौ । अकर्म० । सेट् । आत्मने० ।

१ प्रायुङ्क्त राज्ये बत दुष्करे त्वाम् । (भट्टिः ३ । ५) । २. **युग्यं च पत्रे** । इति कर्मणि करणे वा क्यपि कुत्वं निपात्यते । ३. **प्रयोज्यनियोज्यौ शक्यार्थे** । इति ण्यति कुत्वाभावो निपात्यते । ४ योगाय प्रभवति इत्यर्थे **योगाच्च** । इति यत्रञौ । ५ तमर्थमिव भारत्या सुतया योक्तुमर्हसि । इति कुमारे । ६. **स्वराद्यन्तोपसर्गादिति वक्तव्यम्** । इत्यात्मनेपदम् । ७. व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखाक्रिययोपयोगम् । इति कुमारे ।

१. प्र० इन्धे[1] । इन्धाते । इन्धते ॥ म० इन्त्से । इन्धाथे । इन्ध्वे ॥ इन्धे । इन्ध्वहे । इन्ध्महे ॥ २. इन्धाम् । इन्धाताम् । इन्धताम् ॥ म० इन्त्स्व । इन्धाथाम् । इन्ध्वम् ॥ उ० इनधै[2] ॥ ३. प्र० ऐन्ध । ऐन्धाताम् । ऐन्धत ॥ म० ऐन्धाः । ऐन्धाथाम् । ऐन्ध्वम् ॥ उ० ऐन्धि । ऐन्ध्वहि ॥ ४. इन्धेत । इन्धेयाताम् ॥ ५. इन्धाञ्चक्रे-इन्धाम्बभूव-इन्धामास ॥ ६. इन्धिता ॥ ७. इन्धिष्यते ॥ ८. इन्धिषीष्ट । इन्धिषीयास्ताम् ॥ म० इन्धिषीष्ठाः । इन्धिषीढ्वम्-ध्वम् ॥ ९. ऐन्धिष्ट[3] । ऐन्धिषाताम् ॥ १०. ऐन्धिष्यत ॥

भावे—इध्यते । णिचि—इन्धयति ते । ९. ऐन्दिधत्-त । सनि—इन्दिधिषते ॥ कृत्सु—इन्धितव्यम् । इन्धनीयम् । इन्ध्यम् । इद्धः । इन्धानः । इन्धितुम् । इन्धनम् । इन्धित्वा । सामिध्य ॥ एधः । समित् ॥

[५४७] खिद्=दैन्ये । अकर्म० । अनिट् । आत्मने० ॥

१. खिन्ते ॥ म० खिन्त्से ॥ उ० खिन्दे । खिन्द्वहे ॥ २. खिन्ताम् । खिन्दाताम् ॥ म० खिन्त्स्व ॥ उ० खिनदै ॥ ३. अखिन्त ॥ म० अखिन्थाः ॥ उ० अखिन्दि ॥ ४. खिन्दीत ॥ ५. प्र० चिखिदे ॥ म० चिखिदिषे ॥ उ० चिखिदिवहे ॥ ६. खेत्ता ॥

१. श्नमि कृते इनन् ध ते इति स्थिते, **श्नान्नलोप.** । श्नमः परस्य नस्य लोपः स्यात् । इति धातुनकारस्य लोपे **श्नसोरल्लोपः** । (३६९) इत्यल्लोपे **'इन्धे'** इति रूपम् । २. **आडुत्तमस्य पिच्च** (पृ० ५'ति आटः पित्वादल्लोपो न । ३. एकादशो लुङ् ।

७. खेत्स्यते ॥ ८. खित्सीष्ट । खित्सीयास्ताम् ॥ ९. अखित्त । अखित्[1]साताम् ॥ १०. अखेत्स्यत ॥

**भावे**—खिद्यते । **णिचि**—खेदयति । **सनि**—चिखित्सते । **यङि**—चेखिद्यते । **यङ्लुकि**—चेखिदीति-चेखेत्ति ॥ **कृत्सु**—खेत्तव्यम् । खेदनीयम् । खेद्यम् । खिन्नः । खिन्दानः । खेत्तुम् । खेदनम् । खित्त्वा । संखिद्य । खेदः ॥

[५४८] **विद्**=विचारणे । सकर्म० । अनिट् । आत्मने० ॥

१. विन्ते[2] । विन्दाते । इत्यादि सर्वं '**खिनत्ति**' (५४७) वत् । वित्तः[3]-विन्नः ॥

[५४९] **शिष्लृ**=विशेषणे । सकर्म० । अनिट् । परस्मै० ॥

१. शिनष्टि । शिंष्टः । शिंषन्ति ॥ म० शिनक्षि । शिंष्ठः । शिंष्ठ ॥ उ० शिनष्मि । शिंष्वः । शिंष्मः ॥ २. प्र० शिनष्टु-शिंष्टात् । शिंष्टाम् । शिंषन्तु ॥ म० शिण्ढि[4]-शिंष्टात् । शिंष्टम् । शिंष्ट ॥ उ० शिनषाणि । शिनषाव । शिनषाम ॥ ३. प्र० अशिनट्[5] । अशिंष्टाम् । अशिंषन् ॥ म० अशिनट् । अशिंष्टम् । अशिंष्ट ॥ उ० अशिनषम् । अशिंष्व ॥ ४. शिंष्यात् । शिष्याताम् ॥ ५. प्र० शिशेष । शिशिषतुः ॥ म० शिशेषिथ ॥ उ० शिशिषिव ॥ ६. शेष्टा ॥ ७.

१. दशमो लुङ् । २. मां विन्ते निष्पराक्रमम् (भट्टि: ६ । ३९) । ३. **नुदविदोन्दत्रे** (२७३) इति निष्ठातस्य नत्वं वा । ४. **हुझल्भ्यो हेर्धिः** (३२६) इति धित्वे ष्टुत्वम् । ५. अशिनष्+त् इति स्थिते, **हल्ङ्याब्**इति तलोपे षस्य जश्त्वे च रूपम् ।

शेक्ष्यति ॥ ८. शिष्यात् । शिष्यास्ताम् ॥ ९. प्र० अशिषत् । अशिषताम् । अशिषन् ॥ १०. अशेक्ष्यत् ॥

**कर्मणि**—शिष्यते ॥ **णिचि**—शेषयति ॥ ९. अशीशिषत् ॥ **सनि**—शिशिक्षति । **यङि**—शेशिष्यते । **यङ्लुकि**—शेशिषीति-शेशेष्टि ॥ **कृत्सु**—शेष्टव्यम् । शेषणीयम् । शेष्यम् । शिष्टः । शिंषन् । शिंषती । शेष्टुम् । शेषणम् । शिष्ट्वा । विशिष्य ॥ वि=विशेषकरणे । विशिनष्टि ॥

[५५०] **पिष्लृ**=संचूर्णने । सकर्म० । अनिट् । परस्मै० ॥

पिनष्टि इत्यादि **'शिनष्टि'** (५४९) वत् ॥

[५५१] **भञ्जो**=आमर्दने । सकर्म० । अनिट् । परस्मै० ॥

१. भनक्ति । भङ्क्तः । भञ्जन्ति ॥ म० भनक्षि ॥ उ० भनज्मि[2] । भञ्ज्वः ॥ २. प्र० भनक्तु-भङ्क्तात् । भङ्क्ताम् । भञ्जन्तु ॥ म० भङ्ग्धि । भङ्क्तम् ॥ उ० भनजानि ॥ ३. अभनक् । अभङ्क्ताम् । अभञ्जन् ॥ म० अभनक् । अभङ्क्तम् ॥ उ० अभनजम् । अभञ्ज्व ॥ ४. भञ्ज्यात् । भञ्ज्याताम् ॥ ५. प्र० बभञ्ज ॥ म० बभञ्जिथ[3]-बभङ्क्थ ॥ उ० बभञ्जिव[4] ॥ ६. भङ्क्ता ॥ ७. भङ्क्ष्यति । ८. भज्यात् । भज्यास्ताम् ॥ ९. अभाङ्क्षीत्[5] । अभाङ्क्ताम्[6] । अभाङ्क्षुः ॥ म० अभाङ्क्षीः । अभाङ्क्तम् ॥ उ० अभाङ्क्षम् । अभाङ्क्ष्व ॥ १०. अभङ्क्ष्यत् ॥

१. लृदित्वादङ् । द्वितीयो लुङ् । २ भनज्मि सर्वमर्यादाः (भट्टिः ६ । ३८) । ३. भारद्वाजनियमादिट् । ४. क्रादिनियमादिट् । ५ अभाङ्क्षीद्रघुनन्दनस्तत् (भट्टिः २ । ४२) षष्ठो लुङ् । ६ झलि सिचो लोपः ।

**कर्मणि**—भज्यते। ९. अभाजि-अभञ्जि। **णिचि**—भञ्जयति। ९. अबभञ्जत्। **सनि**—बिभङ्क्षति। **यङि**—बम्भज्यते। **यङ्लुकि**—बम्भञ्जीति-बम्भङ्क्ति। **कृत्सु**—भङ्क्तव्यम्। भञ्जनीयम्। भङ्ग्यम्। भग्नः[२]। भञ्जन्। भञ्जती। भङ्क्तुम्। भञ्जनम्। प्रभञ्जनः[३]। भक्त्वा[४]—भङ्क्त्वा। विभज्य=विभञ्ज्य ॥ भङ्गुरम्। भङ्गः।

[५५२] **भुज**=पालनाभ्यवहारयोः सकर्म०। अनिट्। पालने परस्मै० ॥

१. भुनक्ति। भुङ्क्तः। भुञ्जन्ति ॥ २. भुनक्तु ॥ ३. अभुनक् ॥ ४. भुञ्ज्यात् ॥ ५. बुभोज। बुभुजतुः ॥ म० बुभोजिथ[५] ॥ उ० बुभुजिव ॥ ६. भोक्ता ॥ ७. भोक्ष्यति ॥ ८. भुज्यात्। भुज्यास्ताम् ॥ ९. अभौक्षीत्[६]। अभौक्ताम्। अभौक्षुः ॥ १०. अभोक्ष्यत् ॥

**पालनभिन्नेऽर्थे[७] आत्मनेपदम्**। १. प्र० भुङ्क्ते[८]। भुञ्जाते। भुञ्जते ॥ म० भुङ्क्षे ॥ उ० भुञ्जे। भुञ्ज्वहे ॥ २. प्र० भुङ्क्ताम्। भुञ्जाताम् ॥ म० भुङ्क्ष्व। भुञ्जाथाम्। भुङ्ग्ध्वम् ॥ उ० भुनजै ॥ ३. अभुङ्क्त ॥ म० अभुङ्क्थाः। उ० अभुञ्जि ॥ ४. भुञ्जीत।

१. **भञ्जेश्च चिणि**। इति वा नलोपः। **अत उपधायाः**। पृ० ७) इत्युपधावृद्धिः। ऐश्वरं धनुरभाजि यत्त्वया। इति रघुः। नलोपाभावपक्षे अकारस्योपधात्वाभावान्न वृद्धिः। २ **ओदितश्च**। इति निष्ठानत्वम्। ३. प्रभञ्जनाध्येयजवेन वाजिना—श्रीहर्षः। ४. **जान्तनशां विभाषा**। इति क्त्वायामनुनासिकलोपो वा। ५ क्रादिनियमान्नित्यमिट्। ६ षष्ठो लुङ्। ७. **भुजोऽनवने**। ८. अभ्यवहरति इत्यर्थः।

भुञ्जीयाताम् ॥ ५. बुभुजे[1] ॥ ६. भोक्तासे ॥ ७. भोक्ष्यते ॥ ८. भुक्षीष्ट ॥ ९. अभुक्त[2] । अभुक्षाताम् । अभुक्षत ॥ १०. अभोक्ष्यत ।

**कर्मणि**—भुज्यते । **णिचि**—भोजयति[3] । **सनि**—बुभुक्षति-बुभुक्षते । **यङि**—बोभुज्यते । **यङ्लुकि**—बोभोक्ति-बोभोजीति ॥ **कृत्सु**—भोक्तव्यम् । भोजनीयम् । भोज्यम्[4]-भोग्यम् । भुक्तः । भुञ्जन् । भुञ्जानः । भोक्तुम् । भोजनम् । भुक्त्वा । संभुज्य ॥ भोगः । भुजः ॥

[५५३] **तृह**=हिंसायाम् । सकर्म० । सेट् । परस्मै० ॥

१. तृणेढि[5] । तृण्ढः[6] । तृंहन्ति ॥ म० तृणेक्षि[7] । तृण्ढः । तृण्ढ ॥ उ० तृणेह्मि[8] । तृंह्वः । तृंह्मः ॥ २. प्र० तृणेढु[9]-तृण्ढात् । तृण्ढाम् । तृंहन्तु ॥ म० तृण्ढि-तृण्ढात् । तृण्ढम् । तृण्ढ ॥ उ० तृणहानि । तृणहाव । तृणहाम ॥ ३. प्र० अतृणेट्[10] । अतृण्ढाम् ।

---

१. बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् । इति रघुः । २. दशमो लुङ् । ३. निगरणार्थत्वात्परस्मैपदमेव । ४. **भोज्यं भक्ष्ये** । भोग्यमन्यत् । ५. तृणह्+ति इत्यत्र **तृणह इम्** । तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति सार्वधातुके । इति इमागमे, तृण इह् ति इति जाते, गुणे, तृणेह्+ति इति जाते, **हो ढः** । इति ढत्वे, **झषस्तथोर्धोऽधः** । इति धत्वे, ष्टुत्वे, **ढो ढे लोपः** । इति ढलोपे च रूपम् । ६. तृणह्+तस् इत्यत्र तसोऽपित्वादिमभावे **श्नसो** (३६९)रिल्लोपे ढत्वधत्वष्टुत्वढलोपाः । ७ तृणेढ्+सि इत्यत्र, **षढोः क सि** (१८९) इति तृणेक् सि इति जाते, **इण्कोरि**ति सस्य षत्वे, कषयोगे क्षे रूपम् । ८. न तृणेह्मीति लोकोऽयम् । (भट्टिः ६ । ३९) । ९. तानि द्विषद्वीर्यनिराकरिष्णुस्तृणेढु रामः सह लक्ष्मणेन । तानि=रक्षांसि (भट्टिः १ । १९) । १०. अतृणेट् शत्रुजिच्छत्रून् (भट्टिः १७ । २५) ।

अतृंहन् ॥ अतृणेट् । अतृण्ढम् । अतृण्ढ ॥ उ० अतृणहम् । अतृंह्व । अतृंह्म ॥ ४. तृंह्यात् । तृंह्यातम् । ५. प्र० ततर्ह । ततृहतुः ॥ म० ततर्हिथ ॥ उ० ततृहिव ॥ ६. तर्हिता ॥ ७. तर्हिष्यति ॥ ८. तृह्यात् । तृह्यास्ताम् ॥ ९. [1]अतर्हीत् । अतर्हिष्टाम् । १०. अतर्हिष्यत् ॥

**कर्मणि**—तृह्यते । **णिचि**—तर्हयति । ९. अतीतृहत् । **सनि**—तितर्हिषति । **यङि**—तरीतृह्यते । **यङ्लुकि**—तरीतर्ढि-तरीतृहीति ॥ **कृत्सु**—तर्हितव्यम् ॥ तर्हणीयम् । तर्ह्यम् । तृहितः । तृंहन् । तृंहती । तर्हितुम् । तर्हणम् । [2]तर्हित्वा । संतृह्य ॥

[५५४] **हिसि**=हिंसायाम् । सकर्म० । सेट् । परस्मै० ।

१. हि[3]नस्ति । हिं[4]स्तः । हिंसन्ति ॥ म० हिनस्सि । हिंस्थः ॥ उ० हि[5]नस्मि । हिंस्वः ॥ २. प्र० हिनस्तु-हिंस्तात् ॥ म० हिन्धि-हिंस्तात् । हिंस्तम् ॥ उ० हिनसानि ॥ ३. प्र० अहि[6]नद्-त् । अहिंस्ताम् । अहिंसन् ॥ म० अहि[7]नद्-त्-नः । अहिंस्तम् ॥ उ० अहिनसम् । अहिंस्व ॥ ४. हिंस्यात् । हिंस्याताम् ॥ ५. प्र०

---

१ सप्तमो लुङ् । २. **न क्त्वा सेट्** । इत्यकित्वान्न गुणनिषेधः । ३. इदित्वान्नुमि, हि न न् स् ति इति स्थिते **श्नान्नलोपः** । (५४६) इति नलोपे रूपम् । कीर्तिं सूते दुष्कृतं या हिनस्ति । ४. ङित्वात् **श्नसो**—(२६९)रित्यल्लोपे, **नश्चापदान्तस्ये**—त्यनुस्वारे रूपम् । ५. हिनस्मीन्द्रस्य विक्रमम् (भट्टिः ६ । ३८) । ६. अहिनस् त् इत्यत्र **हल्ङ्याब्भि**—ति तलोपे **तिप्यनस्तेः** । (२७८) इति सकारस्य दकारः । **वाऽवसाने** । ७. अत्र पूर्वोक्तप्रक्रिया विना **सिपि धातोरुर्वा** (२७८) इति रुरधिकः ।

जिहिंस । जिहिंसतुः ॥ म० जिहिंसिथ ॥ उ० जिहिंसिव ॥ ६. हिंसिता ॥ ७. हिंसिष्यति ॥ ८. हिंस्यात् । हिंस्यास्ताम् ॥ ९. अहिंसीत्[1] । अहिंसिष्टाम् ॥ १०. अहिंसिष्यत् ॥

**कर्मणि**—हिंस्यते । **णिचि**—हिंसयति-ते । ९. अजिहिंसत्-त । **सनि**—जिहिंसिषति । **यङि**—जेहिंस्यते । **यङ्लुकि**—जेहिंसीति-जेहिंस्ति । **कृत्सु**—हिंसितव्यम् । हिंसनीयम् । हिंस्यम् । हिंसितः । हिंसन् । हिंसती । हिंसितुम् । हिंसनम् । हिंसित्वा । प्रहिंस्य । हिंसकः । हिंस्रः । हिंसा । सिंहः[2] ।

[५५५] **उन्दी=क्लेदने** । सकर्म० । सेट् । परस्मै० ॥

१. उनत्ति । उन्तः । उन्दन्ति ॥ म० उनत्सि ॥ उ० उनद्मि ॥ २. प्र० उनत्तु ॥ म० उन्धि ॥ उ० उनदानि । उनदाव ॥ ३. प्र० औनद्-त् । औन्ताम् । म० औनः-औनद्-त् । औन्तम् । औन्त ॥ उ० औनदम् । औन्द्व ॥ ४. उन्द्यात् । उन्द्याताम् ॥ ५. उन्दाञ्चकार ॥ ६. उन्दिता ॥ ७. उन्दिष्यति ॥ ८. उद्यात् । उद्यास्ताम् ॥ ९. औन्दीत् । औन्दिष्टाम् ॥ १०. औन्दिष्यत् ॥

**कर्मणि**—उद्यते । **णिचि**—उन्दयति-ते । **सनि**—उन्दिदिषति । ९. औन्दिदिषत् ॥ **कृत्सु**—उन्दितव्यम् । उन्दनीयम् । उन्द्यम् । उत्तम्[3]-उन्नम् । उन्दन् । उन्दती । उन्दितुम् । उन्दनम् । उन्दित्वा । समुद्य ॥ इन्दुः[4] । ओदनः । उदकम् ॥

१. अश्वान्वालिसुतोऽहिंसीत् (भट्टिः १५ । ७८) । सप्तमो लुङ् । २. हिनस्तीति सिंहः । पृषोदरादित्वाद्वर्णविपर्ययः । ३ **श्वीदितो निष्ठायाम्** । इत्यनिट् । **नुदविदोन्दत्रा**—(२७३)ति नत्वविकल्पः । ४ **उन्देरिच्चादेः** । इति उप्रत्ययः उकारस्येकारश्च ।

[५५६] अञ्जू=व्यक्तिम्रक्षणकान्तिगतिषु । सकर्म० । वेट् । परस्मै० ।

१. प्र० अनक्ति । अङ्क्तः । अञ्जन्ति ॥ म० अनक्षि ॥ उ० अनज्मि । अञ्ज्व ॥ २. प्र० अनक्तु—अङ्क्तात् । अङ्क्ताम् । अञ्जन्तु ॥ म० अङ्ग्धि ॥ उ० अनजानि । अनजाव । ३. प्र० आनक् । आङ्क्ताम् । आञ्जन् ॥ म० आनक् । आङ्क्तम् ॥ उ० आनजम् । आञ्ज्व ॥ ४. अञ्ज्यात् । अञ्ज्याताम् । ५. आनञ्ज । आनञ्जतुः ॥ म० आनञ्जिथ-आनङ्क्थ ॥ उ० आनञ्ज । आनञ्जिव-आनञ्ज्व । ६. अञ्जिता-अङ्क्ता ॥ ७. अञ्जिष्यति-अङ्क्ष्यति ॥ ८. अज्यात् । अज्यास्ताम् । ९. आञ्जीत्[२] । आञ्जिष्टाम् ॥ १०. आञ्जिष्यत् ।

**कर्मणि**—अज्यते । **णिचि**—अञ्जयति । ९. आञ्जिजत् । **सनि**—अञ्जिजिषति । **कृत्सु**—अञ्जितव्यम्-अङ्क्तव्यम् । अञ्जनीयम् । अञ्ज्यम् । आज्यम्[३] । अक्तः । अञ्जन् । अञ्जती । अङ्क्तुम्-अञ्जितुम् । अञ्जनम् । अक्त्वा । अङ्क्त्वा । समज्य ॥ व्यङ्ग्यम् । अङ्गम् । अञ्जलिः ॥ द्व्यञ्जलिः । द्व्यञ्जलम्[४] । त्र्यञ्जलम् ॥

[४५७] ओ विजी=भयचलनयोः । अकर्म० । सेट् । परस्मै० ।

१. विनक्ति । विङ्क्तः । विञ्जन्ति ॥ म० विनक्षि । विङ्क्थः । उ० विनज्मि । विञ्ज्वः ॥ २. प्र० विनक्तु । विङ्क्ताम् । विञ्जन्तु ॥

१. **तस्मान्नुड्द्विहलः**। (पृ० ८)। २. **अञ्जेः सिचि**। इति नित्यमिट्। सप्तमो लुङ्। ३. **आङ्पूर्वादञ्जेः संज्ञायाम्**। इति क्यप्यनुनासिकलोपः। ४. द्वे अञ्जली परिमाणमस्येत्यत्र **द्वित्रिभ्यामञ्जलेः**। इति टज्वा।

म० विङ्ग्धि । विङ्क्तम् ॥ उ० विनजानि ॥ ३. प्र० अविनग्[1]-क् । अविङ्क्ताम् ॥ अविञ्जन् ॥ म० अविनग्-क् । अविङ्क्तम् ॥ उ० अविनजम् ॥ अविञ्ज्व ॥ ४. विञ्ज्यात् । विञ्ज्याताम् ॥ ५. प्र० विवेज । विविजतुः ॥ म० विविजिथ[2] । विविजथुः ॥ उ० विवेज । विविजिव ॥ ६. विजिता ॥ ७. विजिष्यति ॥ ८. विज्यात् । विज्यास्ताम् ॥ ९. प्र० अविजीत्[3] । अविजिष्टाम् ॥ १०. अविजिष्यत् ॥

भावे—विज्यते । णिचि—वेजयति । सनि—विविजिषति । यङि—वेविज्यते । यङ्लुकि—वेविजीति-वेवेक्ति । कृत्सु—विजितव्यम् । वेजनीयम् । वेज्यम्[4] । वेग्यम् । विक्तः । विक्तवान् । विजितुम् । वेजनम् । विजित्वा । उद्विज्य ॥

[५५८] वृजी=वर्जने । सकर्म० । सेट् । परस्मै० ॥

१. वृणक्ति । वृङ्क्तः ॥ म० वृणक्षि ॥ उ० वृणज्मि । वृञ्ज्वः ॥ २. वृणक्तु-वृङ्क्तात् । वृङ्क्ताम् । वृञ्जन्तु । म० वृङ्ग्धि ॥ उ० वृणजानि ॥ ३. प्र० अवृणग्-क् । अवृङ्क्ताम् । अवृञ्जन् ॥ म० अवृणग्-क् । अवृङ्क्तम् । उ० अवृणजम् । अवृञ्ज्व । ४. वृञ्ज्यात् । वृञ्ज्याताम् ॥ ५. प्र० ववर्ज । ववृजतुः ॥ म० ववर्जिथ । ववृ-

१. अविनज्+त् इत्यत्र हल्ङ्याब्भ्य इति तलोपे, चोः कुः । इति कुत्वे झलां जशोऽन्ते । इति जश्त्वे च रूपं । २. विज इट् । विजेः परः इडादिप्रत्ययो ङिद्वत् । इति इडादिप्रत्ययस्य पित्वेपि न गुणः । ३. सप्तमो लङ् । ४. आवश्यके न कुत्वम् । अनावश्यके तु कुत्वम् ।

जथुः ॥ उ० ववर्ज । ववृजिव ॥ ६. वर्जिता ॥ ७. वर्जिष्यति ॥ ८. वृज्यात् । वृज्यास्ताम् ॥ ९. अवर्जीत्[1] । अवर्जिष्टाम् ॥ १०. अवर्जिष्यत्

**कर्मणि**—वृज्यते । **णिचि**—वर्जयति-ते । **सनि**—विवर्जिषति । **यङि**—वरीवृज्यते । **यङ्लुकि**—वरिवृजीति-वरीवृजीति-वर्वक्ति-वरिवर्क्ति-वर्वृजीति ॥ **कृत्सु**—वर्जितव्यम् । वर्जनीयम् । प्रवर्ग्यम् । वृज्यम् । वृक्तः । वृञ्जन् । वृञ्जती । वर्जितुम् । वर्जनम् । वर्जित्वा । विवृज्य ॥

[५५९] **पृची**=सम्पर्के । सकर्म० । सेट् । परस्मै० ॥

पृणक्ति । इत्यादि **'वृणक्ति'** (५५८) वत् । पृक्तः[2] ॥ सम्पृक्तः[3] । सम्पर्कः[4] । सम्पर्की ॥

इति रुधादयः ॥ ७ ॥

१. सप्तमो लुङ् । २. पृक्तस्तुषारैर्गिरिनिर्झराणाम् । इति रघुः । ३. वागर्थाविव सम्पृक्तौ । ४. न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि ।

॥ श्रीः ॥

# बृहद्धातुरूपावल्याम् ।

## अथ तनादयः ॥ ८ ॥

[५६०] **तनु**=विस्तारे । सकर्म० । सेट् । उभय० ॥ तनोत्यादिः

### परस्मपद—

१. **प्र०** तनोति[1] । तनुतः[2] । तन्वन्ति[3] ॥ **म०** तनोषि । तनुथः । तनुथ ॥ **उ०** तनोमि । तनुवः[4]-तन्वः । तनुमः—तन्मः ॥ **२. प्र०** तनोतु—तनुतात् । तनुताम् । तन्वन्तु ॥ **म०** तनु[5] । तनुतम् । तनुत ॥ **उ०** तनवानि । तनवाव । तनवाम ॥ **३. प्र०** अतनोत् । अतनुताम् । अतन्वन् ॥ **म०** अतनोः । अतनुतम् । अतनुत ॥ **उ०** अतनवम् । अतन्व—अतनुव ॥ अतन्म—अतनुम ॥ **४. प्र०** तनुयात् । तनुयाताम् । **म०** तनुयाः ॥ **उ०** तनुयाम् ॥

१. तन्+ति इति स्थिते, **तनादिकृञ्भ्यः उः** । कर्त्रर्थे सार्वधातुके तनादिभ्यः कृञश्च 'उ' प्रत्ययः स्यात् । इति तन् उ ति इति जाते, **सार्वधातुके—** (पृ० ३)ति गुणे रूपम् । पुरे तावन्तमेवास्य तनोति रविरातपम् । इति कुमारः । २. तसादौ ङित्त्वान्न गुणः । ३. **इुश्नुवो—**(२८५)रिति यण् । ४. **लोपश्चास्यान्यतरस्यां म्वोः** (१७०) इत्युकारलोपविकल्पः । ५, **उतश्च प्रत्यया—**(१७०)दिति हेर्लुक् ।

५. **प्र०** ततान । तेनतुः[1] । तेनुः[2] ॥ **म०** तेनिथ[3] । तेनथुः । तेन ॥ **उ०** ततान–ततन । तेनिव । तेनिम ॥ ६. तनिता ॥ **म०** तनितासि ॥ **उ०** तनितास्मि ॥ ७. तनिष्यति ॥ ८. तन्यात् । तन्याताम् । तन्युः ॥ ९. **प्र०** अतानीत्[4]–अतनीत् । अतानिष्टाम्–अतनिष्टाम् । अतानिषुः–अतनिषुः ॥ **म०** अतानीः–अतनीः । अतानिष्टम्–अतनिष्टम् । अतानिष्ट–अतनिष्ट ॥ **उ०** अतानिषम्–अतनिषम् । अतानिष्व–अतनिष्व । अतानिष्म–अतनिष्म ॥ १०. अतनिष्यत् ॥

## आत्मनेपदे—

१. **प्र०** तनुते । तन्वाते । तन्वते । **म०** तनुषे । तन्वाथे । तनुध्वे । **उ०** तन्वे । तनुवहे–तन्वहे । तनुवहे–तन्महे ॥ २. **प्र०** तनुताम् । तन्वाताम् । तन्वताम् ॥ **म०** तनुष्व । तन्वाथाम् । तनुध्वम् । **उ०** तनवै । तनवावहै । तनवामहै ॥ ३. **प्र०** अतनुत । अतन्वाताम् । अतन्वत ॥ **म०** अतनुथाः । अतन्वाथाम् । अतनुध्वम् । **उ०** अतन्वि । अतनुवहि–अतन्वहि । अतनुमहि–अतन्महि । ४. **प्र०** तन्वीत । तन्वीयाताम् । तन्वीरन् ॥ **म०** तन्वीथाः । तन्वीयाथाम् । तन्वीध्वम् ॥ **उ०** तन्वीय । तन्वीवहि । तन्वीमहि ॥ ५. **प्र०** तेने । तेनाते । **म०** तेनिषे ॥ **उ०** तेनिवहे ॥ ६. **प्र०** तनिता ॥ **म०** तनितासे ॥ ७. तनिष्यते ॥ ८. तनिषीष्ट ॥ ९.

१. **अत एकहल्मध्ये**—(पृ० ८) इति एत्वाभ्यासलोपौ । २. कूलानि सामर्षतयेव तेनुः (भट्टिः २ । ३)। ३. **थलि च सेटि** (पृ० ८)। ४ **अतो हलादेर्लघोः** (११२) इति परस्मैपदपरे सिचि वा वृद्धिः । ज्ञाताशयस्तस्य ततो व्यतानीत्स कर्मठः कर्म सुतानुबन्धम् ।

अतत[1]-अतनिष्ट ॥ अतनिषाताम् । अतनिषत ॥ म० अतथाः-अतनिष्ठाः । अतनिषाथाम् । अतनिढ्वम् ॥ उ० अतनिषि । अतनिष्वहि । अतनिष्महि ॥ १०. अतनिष्यत ॥

**कर्मणि**—तायते[2]-तन्यते । २. तायताम्-तन्यताम् । **आर्धधातुकेषु कर्तरिवत्** । ९. अतानि । इति विशेषः । **णिचि**—तानयति-ते । ९. अतीतनत् । **सनि**—तितनिषति[3]-ते-तितंसति-ते-तितांसति[4]-ते । **यङि**—तन्तन्यते । **यङ्लुकि**—तन्तनीति-तन्तन्ति ॥ **कृत्सु**—तनितव्यम् । तननीयम् । तान्यम् । ततः । तन्वन् । तन्वती । तन्वान । तनितुम् । तननम् । तनित्वा[5]-तत्त्वा । वितत्य ॥ सततम्[6] । सन्ततम् । ततिः[7] । तन्ति । तन्तुः । तनूः । तनुः । तातः । तन्त्रम् । तितउः=सूत्रम् ।

[५६१] **षणु**=दाने । सकर्म० । सेट् । उभय० ॥

सनोति[8]-सनुते । इत्यादि **'तनोति'** (५६०) वत् । विशेषस्तु । ८. सायात्[9]-सन्यात् । सायास्ताम्--सन्यास्ताम् । **कर्मणि**—सायते-

---

१ **तनादिभ्यस्तथासोः** । तनादेः सिचो वा लुक् स्यात्तथासोः । इति वा सिज्लोप । **अनुदात्तोपदेशे**—(३२७ ति अनुनासिकलोपः । २. **तनोतेर्यकि** । इति वा आत्वम् । ३ **तनिपतिदरिद्रातिभ्यः सन इड्वा वक्तव्यः** । ४. इडभावे **तनोतेर्विभाषा** । इति झलादौ सनि वा दीर्घः । ५. उदित्वात् क्त्वायामिड्विकल्पः । इडभावे अनुनासिकलोपः । ६. **समो वा हिततयोः** । इति वा समो मकारलोपः । ७ **अनुदात्तोपदेशे**ति अनुनासिकलोपः । विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले । शाकुन्तलम् । ८. **धात्वादेः षः सः** । निमित्तापायाण्णत्वमपैति । ९ **ये विभाषा** । इत्यात्वं वा ।

सन्यते। **सनि**—सिषासति-सिसनिषति। **यङि**—सासायते-संसन्यते। सातः। सातिः ॥

[५६२] **क्षिणु**=हिंसायाम्। सकर्म०। सेट्। उभय० ॥

## परस्मैपदे—

१. प्र० क्षिणोति-क्षेणोति ॥ म० क्षिणोषि-क्षेणोषि ॥ उ० क्षिणोमि-क्षेणोमि ॥ २. क्षिणोतु-क्षेणोतु ॥ म० क्षिणु-क्षेणु ॥ उ० क्षेणवानि। क्षेणवाव ॥ ३. प्र० अक्षिणोत्-अक्षेणोत् ॥ म० अक्षिणोः-अक्षेणोः ॥ उ० अक्षिणवम्-अक्षेणवम्। अक्षिणुव-अक्षिण्व-अक्षेणुव-अक्षेण्व ॥ ४. क्षिणुयात्-क्षेणुयात् ॥ ५. प्र० चिक्षेण। चिक्षिणतुः। चिक्षिणुः ॥ म० चिक्षेणिथ ॥ उ० चिक्षिणिव ॥ ६. क्षेणितासि ॥ ७. क्षेणिष्यति ॥ ८. क्षिण्यात् ॥ ९. अक्षेणीत्। अक्षेणिष्टाम् ॥ १०. अक्षेणिष्यत् ॥

## आत्मनेपदे—

१. क्षिणुते-क्षेणुते। क्षिण्वाते-क्षेण्वाते ॥ म० क्षिणुषे-क्षेणुषे ॥ उ० क्षिणुवहे-क्षेणुवहे-क्षिण्वहे-क्षेण्वहे ॥ २. क्षिणुताम्-क्षेणुताम् ॥ म० क्षिणुष्व-क्षेणुष्व ॥ उ० क्षिणवै-क्षेणवै ॥ ३. अक्षिणुत-अक्षेणुत ॥ ४. क्षिण्वीत-क्षेण्वीत ॥ ५. प्र० चिक्षिणे ॥ म० चिक्षि-

---

१. **यस्य विभाषा**। इत्यनिट्त्वम्। त्त्वादात्वनुनासिकलोपं बाधित्वा **जनसने**—त्यात्वम्। २. उप्रत्ययनिमित्तो लघूपधगुणः **संज्ञापूर्वको विधिरनित्यः** इति न भवतीत्येके, भवतीत्यन्ये। अत उभयथापि रूपाणि। ३ सप्तमो

णिषे ॥ उ० चिक्षिणिवहे ॥ ६. क्षेणितासे ॥ ७. क्षेणिष्यते ॥ ८. क्षेणिषीष्ट ॥ ९. अक्षित–अक्षेणिष्ट । अक्षेणिषाताम् ॥ १०. अक्षेणिष्यत ॥

**कर्मणि**—क्षिण्यते । **णिचि**—क्षेणयति । **सनि**—चिक्षिणिषति–चिक्षेणिषति । **यङि**—चेक्षिण्यते । **यङ्लुकि**—चेक्षेणीति–चेक्षेण्ति ॥ **कृत्सु**—क्षेणितव्यम् । क्षेणनीयम् । क्षेण्यम् । क्षितः । क्षिण्वन्–क्षेण्वन् । क्षिण्वती–क्षेण्वती । क्षिण्वानः–क्षेण्वानः । क्षेणितुम् । क्षेणनम् । क्षिणित्वा–क्षेणित्वा–क्षित्वा । प्रक्षित्य–प्रक्षिण्य । क्षितिः ॥

[५६३] **वनु**=याचने । सकर्म० । सेट् । आत्मने०[1] ॥

१. वनुते वन्वाते । वन्वते । **म०** वनुषे ॥ **उ०** वन्वे । वनुवहे–वन्वहे ॥ २. वनुताम् । वन्वाताम् । वन्वताम् ॥ **म०** वनुष्व ॥ **उ०** वनवै ॥ ३. अवनुत । अवन्वाताम् ॥ **म०** अवनुथाः ॥ **उ०** अवन्वि ॥ ४. वन्वीत ॥ ५. ववने । ववनाते[2] ॥ ६. वनिता ॥ **म०** वनितासे । ७. वनिष्यते ॥ ८. वनिषीष्ट ॥ ९. अवत[3]–अवनिष्ट । अवनिषाताम् ॥ **म०** अवथाः–अवनिष्ठाः । अवनिष्यत ॥

**कर्मणि**—वन्यते । **णिचि**—वानयति । **सनि**—विवनिषते । **यङि**—वंवन्यते । **यङ्लुकि**—वंवनीति–वंवन्ति ॥ **कृत्सु**—वनितव्यम् । वननीयम् । वान्यम् । वतः[4] । वन्वन् । वन्वती । वानितुम् । वननम् । वनित्वा–वत्त्वा । प्रवत्य । वनीयकः[5]–वनीपकः ।

१. चान्द्रास्त्वमुं परस्मैपदिनमाहुः । तन्मते वनोति । ववान । इत्यादि परस्मैपद 'तनोति' (५६०) वत् । २. **न शसददवादी**—(१५ त्येत्वाभ्यासलोपौ न स्तः । ३. **तनादिभ्य**—(५६०) इति वा सिचो लुक् । एकादशो लुङ् । ४. **यस्य विभाषा**—(३५) । ५ वनीयकानां स हि कल्पभूरुहः ।

[५६४] **मनु**=अवबोधने । सकर्म० । सेट् । आत्मने० ॥

मनुते[1] ॥ मनुताम् ॥ इत्यादि **'वनोति'** (५६३) वत् ॥ **५.** मेने[2] । मेनाते । मेनिरे ॥ **कर्मणि**—मन्यते । **णिचि**—मानयति-ते । **सनि**—मिमनिषते । **यङि**—मंमन्यते । **यङ्लुकि**—मंमनीति-मंमन्ति ॥ **कृत्सु**—मनितव्यम् । मननीयम् । मान्यम् । मनितुम्[3] । मन्वानः । मननम् । मात्वा-मत्वा । संमत्य ॥

[५६५] **डु कृञ्**=करणे । सकर्म० । अनिट् । उभय० ॥

## परस्मैपदे—

**१. प्र०** करोति[4] । कुरुतः[5] । कुर्वन्ति[6] । **म०** करोषि । कुरुथः । कुरुथ ॥ **उ०** करोमि । कुर्वः[7] । कुर्मः । **२. प्र०** करोतु-कुरुतात् । कुरुताम् । कुर्वन्तु ॥ **म०** कुरु[8]-कुरुतात् । कुरुतम् । कुरुत ॥ **उ०** करवाणि । करवाव । करवाम ॥ **३. प्र०** अकरोत् । अकुरुताम् । अकुर्वन् ॥ **म०** अकरोः । अकुरुतम् । अकुरुत ॥ **उ०** अकरवम् । अकुर्व । अकुर्म । **४.** कुर्यात्[9] । कुर्याताम् । कुर्युः ॥

---

१. मन्महे किमपि तुन्दिलं महः । २. **अत एकहल्मध्य**—(पृ० ८) इति एत्वाभ्यासलोपौ । ३. **यस्य विभाषेति** निषेधस्यानित्यत्वादिट् । ४. कृ+उ+ति इति स्थिते ऋकारस्य उप्रत्ययमाश्रित्य गुणे रपरत्वे च कर् उ ति जाते उकारस्य तिपमाश्रित्य गुणे 'करोति' इति रूपम् । ५ कर् उ तस् इति स्थिते **अत उत्सार्वधातुके** (३६८) इति ककारोत्तराकारस्य उकारे 'कुरुतः' इति रूपम् । ६. कुरु अन्ति इत्यत्र **हुश्नुवो**-(२८५)रिति यणि 'कुर्वन्ति' इति रूपम् । ७. **नित्यं करोतेः** । करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्‌म्वोः परयोः । इति नित्यमुलोपः । ८. **उतश्च प्रत्यया**—(१७०)दिति हिलोपः । ९ **ये च** । कृञ उलोपः स्याद्यादौ प्रत्यये परे ।

५. प्र० चकार । चक्रतुः । चक्रुः ॥ म० चकर्थ । चक्रथुः । चक्र । उ० चकार—चकर । चकृव । चकृम ॥ ६. प्र० कर्ता ॥ म० कर्तासि ॥ उ० कर्तास्मि ॥ ७. करिष्यति ॥ ८. क्रियात् । क्रियास्ताम् ॥ ९. अकार्षीत् । अकार्ष्टाम् । अकार्षुः । म० अकार्षीः । अकार्ष्टम् । अकार्ष्ट । उ० अकार्षम् । अकार्ष्व । अकार्ष्म ॥ १०. अकरिष्यत् ॥

## आत्मनेपदे—

१. प्र० कुरुते । कुर्वाते । कुर्वते ॥ म० कुरुषे । कुरुध्वे । उ० कुर्वे । कुर्वहे । कुर्महे ॥ २. प्र० कुरुताम् । कुर्वाताम् । कुर्वताम् म० कुरुष्व । कुर्वाथाम् । कुरुध्वम् ॥ करवै । करवावहै । करवामहै ॥ ३. प्र० अकुरुत । अकुर्वाताम् । अकुर्वत ॥ म० अकुरुथाः । अकुर्वाथाम् । अकुरुध्वम् ॥ उ० अकुर्वि । अकुर्वहि । अकुर्महि ४. कुर्वीत । कुर्वीयाताम् । कुर्वीरन् ॥

५. प्र० चक्रे । चक्राते । चक्रिरे ॥ म० चकृषे । चक्राथे । चकृढ्वे ॥ उ० चक्रे । चकृवहे । चकृमहे ॥ ६. प्र० कर्ता ॥ म० कर्तासे ॥ उ० कर्ताहे ॥ ७. करिष्यते ॥ ८. प्र० कृषीष्ट । कृषीयास्ताम् । कृषीरन् ॥ म० कृषीष्ठाः । कृषीयास्ताम् । कृषीध्वम् ॥ उ० कृषीय । कृषीवहि । कृषीमहि ॥ ९. अकृत । अकृषाताम् । अकृषत ॥ १०. अकरिष्यत ॥

१. **कृसृभृवृ** (पृ० ७) इति नित्यमनिट । २. **ऋद्धनोः स्ये** । इति इट् । ३. षष्ठो लुङ् । ४. दशमो लुङ् । **ह्रस्वादंगात्** (२६०) इति सिचो

संस्करोति[1]=अलङ्करोति । सञ्चस्कार । समस्करोत् ॥ परिष्करोति=अलङ्करोति । परिचस्कार । पर्यस्करोत् ॥ प्रतिकरोति=परिहरति । अनुकरोति=सदृशं करोति । निराकरोति, पराकरोति=प्रत्याख्याति । ऊरीकरोति=अङ्गीकरोति । अप अपकारे । आत्मने०—अपकुरुते । तिरस्—पराभवे । तिरस्करोति । आविस्—प्रादुस् साक्षात्—नभस्—प्रभृतौ तत्तत्करणे । आविष्करोति । इत्यादि ॥

**कर्मणि**—क्रियते । ५. चक्रे । ९. अकारि । **णिचि**—कारयति-ते । ५. कारयाञ्चकार-ञ्चक्रे । ९. अचीकरत्-त । **सनि**—चिकीर्षति-ते । **यङि**—चेक्रीयते । **यङ्लुकि**—चर्करीति-चरीकरीति इत्यादि ॥ **कृत्सु**—कर्तव्यम् । करणीयम् । कार्यम्—कृत्यम् । कृतः । कृतवान् । कुर्वन् । कुर्वती । कुर्वाणः । करिष्यन् । करिष्यती—करिष्यन्ती । कर्तुम् । करणम् । कृत्वा । अलंकृत्वा । अलंकृत्य । ऊरीकृत्य । सत्कृत्य । साक्षात्कृत्य । विभाकरः । दिवाकरः । भास्करः । प्रभाकरः । किङ्करः । किङ्करी । कर्मकरः=भृत्यः । कर्मकारोऽन्यः । क्षेमङ्करः । शिवङ्करः । आढ्यङ्करणम् । अलंकरिष्णुः । कृतिः । क्रिया । कृती । कृत्रिमम् । कर्म । कार्मुकम् । कारुः । कर्मठः । कर्मी । क्रतुः ॥

इति तनादयः सम्पूर्णाः ॥ ८ ॥

१. **सम्परिभ्यां करोतौ भूषणे** । सम्परिपूर्वस्य करोतेः सुट् स्यात् भूषणेऽर्थे । २. **विभाषा कृवृषोः** । इति क्यब्ण्यतौ । ३. **भूषणेऽलम्** । ४. **साक्षात्प्रभृतीनि च** ।

॥ श्रीः ॥

# बृहद्धातुरूपावल्याम् ।

## अथ क्र्यादयः ॥ ९ ॥

---

[५६६] डु क्रीञ्=द्रव्यविनिमये । सकर्म० । अनिट् । उभय० ॥

### परस्मैपदे—

१. प्र० क्रीणाति[1] । क्रीणीतः[2] । क्रीणन्ति[3] ॥ म० क्रीणासि । क्रीणीथः । क्रीणीथ ॥ उ० क्रीणामि । क्रीणीवः । क्रीणीमः ॥ २. प्र० क्रीणातु-क्रीणीतात्[4] । क्रीणीताम् । क्रीणन्तु ॥ म० क्रीणीहि[5]-क्रीणीतात् । क्रीणीतम् । क्रीणीत ॥ उ० क्रीणानि । क्रीणाव । क्रीणाम ॥ ३. प्र० अक्रीणात् । अक्रीणीताम् । अक्रीणन् ॥ म० अक्रीणाः । अक्रीणीतम् । अक्रीणीत ॥ उ० अक्रीणाम् । अक्रीणीव । अक्रीणीम ॥ ४. प्र० क्रीणीयात्[6] । क्रीणीयाताम् । क्रीणीयुः ॥

---

क्री + ति इति स्थिते, **क्र्यादिभ्यः श्ना** । कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्ना स्यात् । शपोऽपवादः श्ना । शकार इत् । 'ना' मात्रं शिष्यते । क्री ना ति इति जाते, णत्वे च 'क्रीणाति' इति । २. क्रीणा + तस् इति स्थिते **ई हल्यघोः** (२७४) इति श्न. आकारस्य ईकारे रूपम् । ३. क्रीणा + अन्ति इति स्थिते, **श्नाभ्यस्तयोरातः** (३७७) इत्यालोपे रूपम् । क्रीणन्ति स्म प्राणमूल्यैर्यशांसि । इति माघः । ४. तातङो ङित्त्वादीत्वम् । ५ हेरपित्त्वेन ङित्त्वात् आत ईत्वम् । ६. लिङो ङित्वात्पिद्वचनेष्वपि ईत्वम् ।

५. प्र० चिक्राय । चिक्रियतुः । चिक्रियुः ॥ म० चिक्रे[1]-यिथ--चिक्रेथ । चिक्रियथुः । चिक्रिय ॥ उ० चिक्राय[2]--चिक्रय । चिक्रियिव[3] । चिक्रियिम ॥ ६. प्र० क्रेता ॥ म० क्रेतासि ॥ उ० क्रेतास्मि ॥ ७. क्रेष्यति ॥ ८. क्रीयात् । क्रीयास्ताम् ॥ ९. प्र० अक्रैषीत्[4] । अक्रैष्टाम् । अक्रैषुः ॥ म० अक्रैषीः । अक्रैष्टम् । अक्रैष्ट ॥ उ० अक्रैषम् । अक्रैष्व । अक्रैष्म ॥ १०. अक्रेष्यत् ॥

## आत्मनेपदे—

१. प्र० क्रीणीते । क्रीणाते । क्रीणते ॥ म० क्रीणीषे । क्रीणाथे । क्रीणीध्वे ॥ उ० क्रीणे । क्रीणीवहे । क्रीणीमहे ॥ २. प्र० क्रीणीताम् । क्रीणाताम् । क्रीणताम् ॥ म० क्रीणीष्व[5] । क्रीणाथाम् । क्रीणीध्वम् ॥ उ० क्रीणै । क्रीणावहै । क्रीणामहै ॥ ३. प्र० अक्रीणीत । अक्रीणाताम् । अक्रीणत ॥ म० अक्रीणीथाः । अक्रीणाथाम् । अक्रीणीध्वम् ॥ उ० अक्रीणि । अक्रीणीवहि । अक्रीणीमहि ॥ ४. क्रीणीत । क्रीणीयाताम् । क्रीणीरन् ॥ म० क्रीणीथाः । क्रीणीयाथाम् । क्रीणीध्वम् ॥ उ० क्रीणीय । क्रीणीवहि । क्रीणीमहि ॥

५. प्र० चिक्रिये । चिक्रियाते । चिक्रियिरे ॥ म० चिक्रियिषे । चिक्रियाथे । चिक्रियिढ्वे--ध्वे ॥ उ० चिक्रिये । चिक्रियिवहे ।

१. थलि भारद्वाजनियमादिड्विकल्पः । गुणवृद्ध्यविषये **हुश्नुवोरि—** (२८५) ति इयङ् । २ **णलुत्तमो वा** । ३ क्रादिनियमादिट् । ४. षष्ठो लुङ् । **सिचि वृद्धिः परस्मैपदेषु** । ५. क्रीणीष्व मज्जीवितमेव पणम् । इति नैषधम् ।

चिक्रियिमहे ॥ ६. प्र० क्रेता ॥ म० क्रेतासे ॥ उ० क्रेताहे ॥ ७. क्रेष्यते । ८. प्र० क्रेषीष्ट । क्रेषीयास्ताम् । क्रेषीरन् ॥ म० क्रेषीष्ठाः । क्रेषीयास्थाम् । क्रेषीढ्वम् ॥ उ० क्रेषीय । क्रेषीवहि । क्रेषीमहि ॥ ९. प्र० अक्रेष्ट[1] । अक्रेषाताम् । अक्रेषत ॥ १०. अक्रेष्यत ॥

**कर्मणि**—क्रीयते । **णिचि**—क्रापयति-ते[2] । ९. अचिक्रपत् । **सनि**—चिक्रीषति-ते । **यङि**—चेक्रीयते । **यङ्लुकि**—चेक्रेति-चेक्रयीति । **कृत्सु**—क्रेतव्यम् । क्रयणीयम् । क्रेतुं शक्यं=क्रय्यम्[3] । क्रेतुं योग्यं=क्रेयम् । क्रीतिः । क्रीतवान् । क्रीणती । क्रीणानः । क्रेतुम् । क्रयणम् । क्रीत्वा । विक्रीय । क्रयः । विक्रयः । विक्रीणाति । विक्रीणीते[4] । परिक्रीणीते[5] । अवक्रीणीते ॥

[५६७] **प्रीञ्**=तर्पणे कान्तौ च । सकर्म० । अनिट् । उभय० ॥

१. प्रीणाति[6]–प्रीणीते । इत्यादि **'क्रीणाति'** (५६६) वत् । **णिचि**—प्रीणयति[7]–ते । ९. अपिप्रीणत्–त । प्रियः । प्रेयान् । प्रेष्ठः ।

[५६८] **श्रीञ्**=पाके । सकर्म० । अनिट् । उभय० ॥ श्रीणाति–श्रीणीते । इत्यादि **'क्रीणाति'** (५६६) वत् । **णिचि**—श्राययति–ते । ९. अशिश्रयत्–त ।

[५६९] **मीञ्**=हिंसायाम् । सकर्म० । अनिट् । उभय० ॥

१. दशमो लुङ् । २. **क्रीङ्जीनां णौ** । इत्यात्वे **अर्तिह्रीब्लीरी—**(१६४) इति पुक् । ३. **क्रय्यस्तदर्थे** । ४. महता पुण्यपण्येन क्रीतेऽयं कायनौस्त्वया । ५ **परिव्यवेभ्यः क्रियः** । इति अकर्त्रभिप्रायेपि आत्मनेपदम् । ६. प्रीणाति यः सुचरितैः पितरं स पुत्रः । इति भर्तृहरिः । ७. **धूञ्प्रीञोर्नुग्वक्तव्यः** ।

## परस्मैपदे ।

१. प्र० मीनाति । मीनीतः । मीनन्ति ॥ म० मीनासि । मीनीथः । मीनीथ ॥ उ० मीनामि । मीनीवः । मीनीमः ॥ २. प्र० मीनातु–मीनीतात् । मीनीताम् । मीनन्तु ॥ म० मीनीहि–मीनीतात् । मीनीतम् । मीनीत ॥ उ० मीनानि । मीनाव । ३. प्र० अमीनात् । अमीनीताम् । अमीनन् ॥ म० अमीनाः । अमीनीतम् । अमीनीत ॥ ४. प्र० मीनीयात् । मीनीयाताम् । मीनीयुः ॥ म० मीनीयाः । मीनीयातम् । मीनीयात ॥ उ० मीनीयाम् । मीनीयाव । मीनीयाम ॥

५. प्र० ममौ[1] । मिम्यतुः । मिम्युः ॥ म० ममिथ–ममाथ । मिम्यथुः । मिम्य ॥ उ० ममौ । मिम्यिव । मिम्यिम ॥ ६. प्र० माता ॥ म० मातासि ॥ उ० मातास्मि ॥ ७. मास्यति ॥ ८. मीयात् । मीयास्ताम् ॥ ९. प्र० अमासीत्[2] । अमासिष्टाम् । अमासिषुः ॥ म० अमासीः ॥ उ० अमासिषम् ॥ १०. अमास्यत् ॥

## आत्मनेपदे—

१. प्र० मीनीते । मीनाते । मीनते ॥ म० मीनीषे । मीनाथे । मीनीध्वे ॥ उ० मीने । मीनीवहे । मीनीमहे । २. प्र० मीनीताम् । मीनाताम् । मीनताम् ॥ म० मीनीष्व । मीनाथाम् । मीनीध्वम् ॥ उ० मीनै । मीनावहै । मीनामहै ॥ ३. प्र० अमीनीत । अमीनाताम् ।

---

१. **मीनाति मिनोति** (४७३) इति एज्विषये आत्वम् । **आत औ णलः** (२६५) इति णल औकारः । २. चतुर्थो लुङ् । आत्वे कृते **यमरमनमाता-**(पृ० ११) मिति सगिटौ ।

अमीनत ॥ म० अमीनीथाः । अमीनाथाम् । अमीनीध्वम् ॥ उ० अमीनि । अमीनीवहि । अमीनीमहि ॥ ४. मीनीत । मीनीयाताम् । मीनीरन् ॥

५. प्र० मिम्ये । मिम्याते । मिम्यिरे ॥ मिम्यिषे । मिम्याथे । मिम्यिध्वे–ढ्वे ॥ उ० मिम्ये । मिम्यिवहे । मिम्यिमहे ॥ ६. माता ॥ म० मातासे । उ० माताहे ॥ ७. मास्यते ॥ ८. मासीष्ट । मासीयास्ताम् । मासीरन् ॥ ९. अमास्त[1] । अमासाताम् । अमासत ॥

**कर्मणि**—मीयते । **णिचि**—मापयति–ते । **सनि**—मित्सति–ते । **यङि**—मेमीयते । **यङ्लुकि**—मेमयीति–मेमेति ॥ **कृत्सु**—मातव्यः । मानीयः । मेयः । मीतः । मीनन् । मीनती । मीनानः । मातुम् । मानम् । मीत्वा । प्रमीय । मेयः ॥ प्रमीणाति[2] ॥

[५७०] **षिञ्=बन्धने** । सकर्म० । अनिट् । उभय० ॥

१. सिनाति–सिनीते ॥ २. सिनातु–सिनीताम् ॥ ३. असिनात्–असिनीत ॥ ४. सिनीयात्-सिनीत ॥ ५. सिषाय । सिष्यतुः । सिष्युः ॥ म० सिषयिथ–सिषेथ । सिष्यथुः । सिष्य ॥ उ० सिषाय–सिषय । सिष्यिव । सिष्यिम ॥ **आत्मने०**—**प्र०** सिष्ये । सिष्याते । सिष्यिरे ॥ म० सिष्यषे । सिष्याथे । सिष्यिढ्वे–ध्वे ॥ उ० सिष्ये । सिष्यिवहे । सिष्यिमहे ॥ ६. सेता ॥ म० सेतासि–सेतासे ॥ ७.

---

१. लुङि दशमी विधा । २. **हिनुमीना** (४८०) इति णत्वम् ।

सेष्यति-सेष्यते ॥ ८. सेषीष्ट ॥ म० द्वम् ॥ ९. असैषीत् । असैष्टाम् —असेष्ट । असेषाताम् ॥ १०. असेष्यत्-त ॥

**कर्मणि**—सीयते । **णिचि**—साययति । **सनि**—सिसीषति-ते । **यङि**—सेषीयते । **यङ्लुकि**—सेषयीति-सेषेति ॥ **कृत्सु**—सेतव्यम् । सयनीयम् । सेयः । सितः । सिनन् । सिनती । सिनानः । सेतुम् । सयनम् । सित्वा । प्रसित्य ॥

[५७१] **युञ्**=बन्धने । सकर्म० । अनिट् । उभय० ॥

१. प्र० युनाति-युनीते ॥ २. युनातु-युनीताम् । ३. अयुनात्-अयुनीत ॥ ४. युनीयात्-युनीत ॥ ५. प्र० युयाव । युयुवतुः । युयुवुः ॥ **म०** युयविथ-युयोथ । युयुवथुः । युयुव ॥ **उ०** युयाव-युयव । युयुविव । युयुविम ॥ **आत्म०** प्र० युयुवे । युयुवाते ॥ **म०** युयुविषे ॥ **उ०** युयुविवहे ॥ ६. योता ॥ योतासि-योतासे ॥ ७. योष्यति-ते ॥ ८. यूयात् । यूयास्ताम् ॥ **आत्म०** योषीष्ट । योषीयास्ताम् ॥ ९. अयौषीत्-अयौष्ट ॥ १०. अयोष्यत्-त ॥

**कर्मणि**—यूयते । **णिचि**—यावयति-ते । **सनि**—युयूषति-ते । **यङि**—योयूयते । **यङ्लुकि**—योयोति-योयवीति ॥ **कृत्सु**—योतव्यः । यवनीयः । याव्यः-यव्यः । युतः । युतवान् । युनन् । युनती । युनानः । योतुम् । यवनम् । युत्वा । संयुत्य ॥

[५७२] **पूञ्**=पवने । सकर्म० । सेट् । उभय० । प्वादिः ॥

१. पुनाति-पुनीते ॥ २. पुनातु-पुनीतात् ॥ **म०** पुनीहि ॥ **उ०** पुनानि ॥ **आत्म०** **प्र०** पुनीताम् ॥ **म०** पुनीष्व ॥ **उ०**

---

1. **प्वादीनां ह्रस्वः** । इति शिति ह्रस्वः ।

पुनै। पुनावहै ॥ ३. अपुनात्–अपुनीत। अपुनीताम्–अपुनाताम्। म० अपुनाः–अपुनीथाः। अपुनीताम्। अपुनाथाम् उ० अपुनाम्–अपुनि। अपुनीव अपुनीवहि॥ ४. पुनीयात्। पुनीयाताम्। पुनीयुः॥ आत्मने० पुनीत। पुनीयाताम्। पुनीरन्॥ ५. पुपाव। पुपुवतुः। पुपुवुः॥ आत्म० पुपुवे। पुपुवाते। पुपुविरे॥ म० पुपविथ–पुपुविषे॥ उ० पुपाव। पुपुविव॥ आत्म० पुपुवे। पुपुविमहे॥ ६. प्र० पविता॥ म० पवितासि–से॥ उ० पवितास्मि–पविताहे॥ ७. पविष्यति–ते। ८. पूयात्। पूयास्ताम्॥ आत्म० पविषीष्ट। पविषीयास्ताम्॥ ९. अपावीत्–अपविष्ट॥ १०. अपविष्यत्–त।

**कर्मणि**—पूयते। ९. अपावि। **णिचि**—पावयति–ते। ९. अपीपवत्–त। **सनि**—पुपूषति–ते। **यङि**—पोपूयते। **यङ्-लुकि**—पोपोति–पोपवीति॥ **कृत्सु**—पवितव्यम्। पवनीयम्। पाव्यः–पव्यः। पूनः–पूतः। पुनन्। पुनती। पुनानः। पवितुम्। पवनम्। पवित्वा। उत्पूय॥ पुत्रः। पुण्यम्।

[५७३] **लूञ्=छेदने**। सकर्म०। सेट्। उभय०॥ प्वादिः। ल्वादिश्च॥

लुनाति–लुनीते। इत्यादि **'पुनाति'** (५७२) वत्। विशेषः–लवित्रम्। लूत्वा। लूनः। लावकः॥

१, अपुनात्सवितेवोभौ मार्गावुत्तरदक्षिणौ। २. सप्तमो लुङ्। ३. एकादशो लुङ्। ४. **पूञो विनाशने**। इति निष्ठानत्वम्। पूना यवाः विनष्टा इत्यर्थः। ५ सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत्। ६. **पुवो ह्रस्वश्च**। ह्रून्। ७. **पूञो यण्णुग्घ्रस्वश्च**। ८. लोकानलावीद्विजितांश्च तस्य। ९. **ल्वादिभ्यः**। इति निष्ठानत्वम्।

[९७४] **स्तॄञ्**=आच्छादने। सकर्म०। सेट्। उभय०॥ **प्वादिः ल्वादिश्च**।

१. प्र० स्तृणाति–णीते॥ २. स्तृणातु–स्तृणीताम्॥ म० स्तृणीहि-स्तृणीष्व॥ उ० स्तृणानि–स्तृणै॥ ३. अस्तृणात्–अस्तृणीत॥ ४. स्तृणीयात्–स्तृणीत॥ ५. प्र० तस्तार[1]। तस्तरतुः[2]। तस्तरुः[3]॥ म० तस्तरिथ। तस्तरथुः। तस्तर॥ उ० तस्तार–तस्तर। तस्तरिव तस्तरिम॥ **आत्मने०**—प्र० तस्तरे। तस्तराते। तस्तरिरे॥ म० तस्तरिषे। तस्तराथे। तस्तरिध्वे॥ उ० तस्तरे। तस्तरिवहे। तस्तरिमहे॥ ६. स्तरिता[4]–स्तरीता॥ ७. स्तरिष्यति–ते–स्तरीष्यति-ते॥ ८. स्तीर्यात्[5]-स्तरिषीष्ट–स्तीर्षीष्ट॥ ९. अस्तारीत्। अस्तारिष्टाम्[6]। अस्तारिषुः॥ **आत्मने०** अस्तीर्ष्ट[7]–अस्तरीष्ट–अस्तारिष्ट॥ १०. अस्तारिष्यत्–त–अस्तरीष्यत्–त॥

**कर्मणि**—स्तीर्यते। **णिचि**—स्तारयति-ते। ९. अतस्तरत्। **सनि**—तिस्तीर्षति-ते-तिस्तरीषति–ते–तिस्तारिषति-ते। **यङि**—तास्तीर्यते। **यङ्लुकि**—तास्तरीति-तास्तर्ति। **कृत्सु**—स्तरितव्यः-स्तरीतव्यः। स्तरणीयः। स्तार्यः। स्तीर्णः[8]। स्तृणन् स्तृणती। स्तृणानः। स्तरितुम्–

---

१. **अचो ञ्णिति**। इति वृद्धिः। २. **ऋच्छत्यॄताम्** (२८१) इति गुणः। ३. कम्बलान्परितस्तरुः (भट्टि: १४। ११)। ४. **वॄतो वा** (२९२) इति दीर्घविकल्पः। ५. **ॠत इद्धातोः** (२९२) इति इत्वे **हलि च**—ति दीर्घे च रूपम्। आत्मनेपदे तु—**लिङ्सिचोरात्मनेपदेषु** (४७८) इति इड्विकल्पः। इडभावपक्षे—**उश्च** (२६०) इति कित्वाद्गुणनिषेधः। ६. **वॄतो वा** (२९२) इति प्राप्तो दीर्घविकल्पः **सिचि च परस्मैपदेषु** (२९२) इत्यनेन निषिद्ध्यते। ७. **लिङ्सिचो** (४७८)रिति इडभावपक्षे, **ॠत इद्धातोः** (२९२) इति इत्वे, **हलि च**—ति दीर्घः। ८. **वॄतो वा**। ९. **ल्वादिभ्यः**। **ॠत इद्धातोः**। **हलि च**।

स्तरीतुम् । स्तरणम् । स्तरित्वा–स्तरीत्वा । विस्तीर्य ॥ विस्तार[1]–विस्तर[2] । स्तृः=धूमः ।

[५७५] कॄञ्=हिंसायाम् । सकर्म० । सेट् । उभय० ॥ प्वादि. । ल्वादिश्च ।

कृणाति–ते ॥ ५. चकार–चकरे । चकरतुः–चकराते ॥ इत्यादि **'स्तृणाति'** (५७४) वत् ॥

[५७६] वॄञ्=वरणे । सकर्म० । सेट् । उभय० ॥ प्वादिः । ल्वादिश्च ॥

१. वृणाति–वृणीते[3] ॥ २. वृणातु–वृणीताम् ॥ ३. अवृणात्–अवृणीत ॥ ४. वृणीयात्–वृणीत । ५. ववार–ववरे ॥ ६. वरिता–वरीता ॥ म० वरितासि–वरीतासि–से ॥ ७. वरिष्यति–वरीष्यति–ते । ८. वूर्यात्[4]–वरिषीष्ट[5]–वूर्षीष्ट ॥ ९. अवारीत्[6]–अवरिष्ट[7]–अवरीष्ट–अवूर्ष्ट[8] ॥ १०. अवरिष्यत्–त–अवरीष्यत्–त ॥

**कर्मणि**—वूर्यते । **णिचि**—वारयति–ते । ९. अवीवरत्–त । **सनि**—वुवूर्षति–ते । विवरिषति–ते । विवरीषति–ते ॥

---

१. **प्रथने वावशब्दे** । इति भावे घञ् । **अचो ञ्णिति** । इति वृद्धिः । २. **ऋदोरप्** । ३. वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः । इति भारविः । ४. **उदोष्ठ्यपूर्वस्य (३८४)** इति उत्वे रपरत्वे च **हलि चे**-ति दीर्घ. । ५ **लिङ्सिचो**-(४७७) रिति इडभावपक्षे, **उश्चे**- (२६०) ति कित्वादुत्वादि पूर्ववत् । इट्पक्षे उत्वात्पूर्वं **ऋच्छत्यॄता** -(२८१) मिति गुणे, **न लिङि** । (४७७) इति वृत इटो दीर्घाभावे एकमेव रूपम् । ६. सप्तमो लुङ् । ७ **लिङ्सिचो**-(४७७) रिति विकल्पेन इट्पक्षे **वॄतो वा** (२९२) इति वा दीर्घः । ८. अनिट्पक्षे **उश्चे**- (२६०) ति कित्वादुत्वादि ।

**यङि**—वोवूर्यते । **यङ्लुकि**—वावरीति-वावर्ति ॥ **कृत्सु**—वरि(री) तव्यः । वरणीयः । वार्यः । वूर्णः । वृणन् । वृणती । वृणानः । वरितुम्-वरणम् । वरित्वा-वरीत्वा । आवूर्य ॥

[५७७] **धूञ्**=कम्पने । सकर्म० । वेट् । उभय० ॥

१. धुनाति-धुनीते ॥ २. धुनातु-धुनीताम् ॥ **म०** धुनीहि-धुनीष्व ॥ **उ०** धुनानि-धुनवै ॥ ३. अधुनात्-अधुनीत ॥ ४. धुनीयात्-धुनीत ॥ ५. **प्र०** दुधाव । दुधुवतुः । दुधुवुः ॥ **म०** दुधविथ-दुधोथ । दुधुवथुः । दुधुव ॥ **उ०** दुधाव-दुधव । दुधुविव । दुधुविम ॥ **आत्म० प्र०** दुधुवे ॥ **म०** दुधुविषे । दुधुवाथे । दुधुविढ्वे-ध्वे ॥ **उ०** दुधुविवहे ॥ ६. धोता-धविता ॥ ७. धोष्यति-धविष्यति-धोष्यते-धविष्यते ॥ ८. धूयात्-धविषीष्ट-धोषीष्ट ॥ ९. अधावीत्[१]-अधोष्ट-अधविष्ट[३] ॥ १०. अधविष्यत्-त-अधोष्यत्-त ॥

**कर्मणि**—धूयते । **णिचि**—धूनयति-ते । ९. अदूधुनत्-त ॥ **सनि**—दुधूषति-ते । **यङि**—दोधूयते । **यङ्लुकि**—दोधोति-दोधवीति ॥ **कृत्सु**—धवितव्यम्-धोतव्यम् । धवनीयम् । धव्यम्-धाव्यम् । धूतः[४] । धुनन् । धुनती । धुनानः । धवितुम्-धोतुम् । धवनम् । धवित्वा-धूत्वा । विधूय ॥

[५७८] **शॄ**=हिंसायाम् । सकर्म० । सेट् । परस्मै० ॥ प्वादिः । ल्वादिश्च ।

---

१. **ल्वादिभ्यः । उदोष्ठ्यपूर्वस्य । हलि च ।** २. सप्तमो लुङ् । ३. एकादशो लुङ् । ४. **यस्य विभाषा** (३५) इत्यनिट् ।

**१. प्र०** शृणाति । शृणीतः ॥ **म०** शृणासि ॥ **उ०** शृणामि ॥ **२.** शृणातु ॥ **म०** शृणीहि ॥ **उ०** शृणानि ॥ **३. प्र०** अशृणात् । अशृणीताम् ॥ **म०** अशृणाः ॥ **उ०** अशृणाम् ॥ **४.** शृणीयात् । शृणीयाताम् ॥ **५. प्र०** शशार । शश्रतुः–शशरतुः । शश्रुः–शशरुः ॥ **म०** शशरिथ । शशरथुः–शश्रथुः । शशर–शश्र ॥ **उ०** शशार–शशर । शशरिव–शश्रिव । शशरिम–शश्रिम ॥ **६.** शरिता–शरीता ॥ **७.** शरिष्यति–शरीष्यति ॥ **८.** शीर्यात् । शीर्यास्ताम् ॥ **९.** अशारीत् । अशारिष्टाम् ॥ **१०.** अशरिष्यत्–अशरीष्यत् ॥

**कर्मणि**—शीर्यते । **णिचि**—शारयति–ते । **९.** अशीशरत । **सनि**—शिशरिषति । शिशरीषति–शिशीर्षति । **यङि**—शेशीर्यते । **यङ्लुकि**—शाशरीति–शाशर्ति ॥ **कृत्सु**—शरितव्यः–शरीतव्यः । शरणीयः । शार्यः । शीर्णः । शृणन् । शृणती । शरितुम्–शरीतुम् । शरणम् । शीर्त्वा । विशीर्य ॥ शारो=वायुः वर्णश्च । शरारुः । शरीरम् । शरत् ॥

[५७९] पॄ=पालनपूरणयोः । सकर्म० । सेट् । परस्मै० ॥ प्वादिः । ल्वादिश्च ॥

**१. प्र०** पृणाति । पृणीतः । पृणन्ति ॥ **म०** पृणासि ॥

१. **असंयोगा**—(पृ० ८)दिति अपितो लिटः कित्वे **शृदृप्रां ह्रस्वो वा** (३८४) इति ह्रस्वपक्षे यणादेशः । अन्यदा **ऋच्छत्यृताम्** (२८१)मिति गुणः । २. **असंयोगा**—(पृ० ८)दिति कित्त्वेन **श्र्युकः किती**–(२७८)ति प्राप्तस्य इण्निषेधस्य क्रादिनियमेन बाधे नित्यमिट् । ३. सप्तमो लुङ् । ४. **वृतो वा** (२९२) इति प्राप्तस्य दीर्घस्य **सिचि च परस्मैपदेषु** (२९२) इति निषेधः । ५ **शॄवन्द्योरारुः** ।

उ० पृणामि ॥ २. पृणातु ॥ म० पृणीहि ॥ उ० पृणानि ॥ ३. अपृणात् ॥ ४. पृणीयात् । पृणीयाताम् ॥ ५. प्र० पपार । पप्रतुः ॥ म० पपरिथ ॥ उ० पप्रिव ॥ ६. परिता–परीता ॥ ७. परिष्यति–परीष्यति ॥ ८. पूर्यात्[1] । पूर्यास्ताम् ॥ ९. अपारीत् । अपारिष्टाम् ॥ १०. अपरिष्यत् ॥

**कर्मणि**—पूर्यते । **णिचि**—पारयति-ते । ९. अपीपरत्–त । **सनि**—पिपरिषति–पिपरीषति–पुपूर्षति[2] । **यङि**—पोपूर्यते । **यङ्लुकि**—पापरीति–पापर्ति ॥ **कृत्सु**—परितव्यम्–परीतव्यम् । परणीयम् । पार्यम् । पूर्णः । पृणन् । पृणती । परितुम्–परीतुम् । परणम् । परित्वा–परीत्वा । परिपूर्य ॥

[५८०] वॄ=वरणे । सकर्म० । सेट् । परस्मै० ॥

वृणाति । ववारेत्यादि 'वॄञ्' (५७६) वत् ॥

[५८१] दॄ=विदारणे । सकर्म० । सेट् । परस्मै० ॥ प्वादिः । ल्वादिश्च ॥

१. दृणाति ॥ २. दृणातु ॥ ३. अदृणात् ॥ ४. दृणीयात् ॥ ५. प्र० ददार । दद्रतुः–ददरतुः । दद्रुः–ददरुः ॥ म० ददरिथ । दद्रथुः–ददरथुः । दद्र–ददर ॥ उ० ददार–ददर । दद्रिव–ददरिव । दद्रिम–ददरिम ॥ ६. दरिता ॥ ७. दरिष्यति ॥ ८. दीर्यात् । दीर्यास्ताम् ॥ ९. अदारीत् ॥ १०. अदरिष्यत् ॥ इत्यादि '**शृणाति**'

१. **उदोष्ठ्यपूर्वस्य** । **हलि च** । २. **इट् सनि वा** (२९२) इति इडभावपक्षे **इको झल्** (पृ० २६) कित्वादुत्वादि ।

(५७८) वत्। **णिचि**—भयेर्थे दरयति। अन्यत्र दारयति। दरः। पुरन्दरः[1]। भगन्दरो[2]=रोगः। दाराः। दृषद्॥

[५८२] **जॄ**=वयोहानौ। सकर्म०। सेट्। परस्मै०॥

जृणाति इत्यादि **'दृणाति'** (५८१) वत्। ५. जजार। जजरतुः-जेरतुः। जजरुः-जेरुः॥

[५८३] **कॄ**=हिंसायाम्। सकर्म०। सेट्। परस्मै०॥

परस्मैपद **'कृणाति'** (१७१) वत्॥ कर्त्रभिप्राये क्रियाफलेपि परस्मैपदार्थमिह पुनः पाठः॥

[५८४] **गॄ**=शब्दे। अकर्म०। सेट्। परस्मै०॥ प्वादिः। ल्वादिश्च।

गृणाति॥ ५. जगार॥ इत्यादि **'कृणाति'** (५८३) वत्। गृणातीति गुरुः।

[५८५] **ज्या**=वयोहानौ। अकर्म०। अनिट्। परस्मै०॥

१. **प्र०** जिनाति[3]। जिनीतः। जिनन्ति॥ **म०** जिनासि॥ **उ०** जिनामि॥ २. **प्र०** जिनातु॥ **म०** जिनीहि॥ **उ०** जिनानि॥ ३. **प्र०** अजिनात्। अजिनीताम्। **म०** अजिनाः। अजिनीतम्॥ **उ०** अजि-

१. **पूः सर्वयोर्दारिसहोः**। इति खच्। २. **भगे च दारेः**। ३. ज्या + श्ना + ति इति स्थिते, श्नाप्रत्ययस्यापित्त्वात्सार्वधातुकत्वान्ङित्वात् **ग्रहिज्या**-(३२१) इति सम्प्रसारणे ज् इ आ नाति इति जाते **सम्प्रसारणाच्च**। इति आकारस्य पूर्वरूपे 'जिनाति' इति।

नाम् । अजिनीव । ४. जिनीयात् । जिनीयाताम् ॥ ५. प्र० जिज्यौ[1] । जिज्यतुः[2] । जिज्युः ॥ म० जिज्यिथ[3]-जिज्याथ । जिज्यथुः । जिज्य ॥ उ० जिज्यौ । जिज्यिव । जिज्यिम ॥ ६. ज्याता ॥ ७. ज्यास्यति ॥ ८. जीयात् । जीयास्ताम् ॥ ९. अज्यासीत् । अज्यासिष्टाम् ॥ १०. अज्यास्यत् ॥

**भावे**—जीयते । **णिचि**—ज्याययति-ते । **सनि**—जिज्यासति । **यङि**—जेजीयते। **यङ्लुकि**—जाज्याति-जाज्येति ॥ **कृत्सु**—ज्यातव्यम् । ज्यानीयम् । ज्येयम् । जीर्नः । जिनन् । जिनती । ज्यातुम् । ज्यानम् । ज्यात्वा । प्रज्याय ॥ ज्यानिः ।

[५८६] **व्री**=वरणे । सकर्म० । अनिट् । परस्मै० ॥

१. व्रीणाति ॥ २. व्रीणातु ॥ ३. अव्रीणात् ॥ ४. व्रीणीयात् ॥ ५. प्र० विव्राय । विव्रियतुः ॥ म० विव्रयिथ-विव्रेथ ॥ उ० विव्रयिव ॥ ६. व्रेता ॥ ७. व्रेष्यति ॥ ८. व्रीयात् ॥ ९. अव्रैषीत् । अव्रैष्टाम् ॥ १०. अव्रेष्यत् ॥

**कर्मणि**—व्रीयते । **णिचि**—व्राययति-ते । **सनि**—विव्रीषति ।

---

१. लिटि द्वित्वे ज्या ज्या इति जाते, **लिट्यभ्यासस्योभयेषाम्** । (३१७) इति सम्प्रसारणे जिज्या+णल् इति जाते **आत औ णलः** । जिज्यौ २. जिज्या+अतुः इत्यत्र **आतो लोप इटि च** (२६४) इत्याकारलोपे जिज्यतुः । ३. थलि भारद्वाजनियमादिड्विकल्पः । ४. क्रादिनियमादिट् । ५. चतुर्थो लुङ् । **यमरमे**—(पृ० ११)ति सगिटौ । ६. **ल्वादिभ्यः** । इति निष्ठानत्वम् । ७. अयमपि प्वादिरिति मते 'व्रिणाति' इत्यादि ह्रस्वमपि । ८. षष्ठो लुङ् ।

यङि। यङ्लुकि—वेव्रयीति–वेव्रेति ॥ कृत्सु—व्रेतव्यम्। वरणीयम् व्रीर्णः[1]। व्रीणन्। व्रीणती। व्रेतुम्। व्रीत्वा।

[५८७] ज्ञा=अवबोधने। सकर्म०। अनिट्। परस्मै०। मित्॥

१. प्र० जानाति[2]। जानीतः। जानन्ति॥ म० जानासि। जानीथः॥ उ० जानामि॥ २. प्र० जानातु–जानीतात्॥ म० जानीहि॥ उ० जानानि॥ ३. प्र० अजानात्। अजानीताम्। अजानन्॥ म० अजानाः॥ उ० अजानाम्॥ ४. जानीयात्॥

५. प्र० जज्ञौ[3]। जज्ञतुः। जज्ञुः॥ म० जज्ञिथ–जज्ञाथ। जज्ञथुः। जज्ञ॥ उ० जज्ञौ। जज्ञिव। जज्ञिम॥ ६. ज्ञाता॥ ७. ज्ञास्यति॥ ८. ज्ञायात्[4]–ज्ञेयात्। ज्ञायास्ताम्–ज्ञेयास्ताम्॥ ९. अज्ञासीत्। अज्ञासिष्टाम्॥ १०. अज्ञास्यत्॥ प्रतिजानाति=कर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारं करोति। अनुजानाति=अनुमनुते। अवजानाति=अनादरं करोति। प्रतिजानीते[5]=अङ्गीकरोति। संजानीते। अपजानीते[6]=अपलपति।

कर्मणि—ज्ञायते। ५. जज्ञे। ९. अज्ञायि। णिचि—ज्ञापयति–ते—ज्ञपयति[7]–ते। ९. अजिज्ञपत्–त। सनि—जिज्ञासते[8]।

---

१. **संयोगादेरातोधातोर्यण्वतः**। इति निष्ठानत्वम्। २. **ज्ञाजनोर्जा**। ३. द्वित्वे ज्ञाज्ञा हलादिशेषे ह्रस्वे च जज्ञा+णल्=**आत औ णलः**=जज्ञौ। ४. **वान्यस्य संयोगादेः** (२६५) इत्येत्वविकल्पः। ५. **सम्प्रतिभ्यामनाध्याने**। इति तङ्। ६. **अपह्नवे ज्ञः**। इत्यात्मनेपदम्। ७. **मारणतोषणनिशामनेषु ज्ञा**। इति मित्वे ह्रस्वः। ८. **ज्ञाश्रुस्मृदृशां सनः**। इति तङ्।

**यङि**—जाज्ञायते । **यङ्लुकि**—जाज्ञाति ॥ **कृत्सु**—ज्ञातव्यः । ज्ञानीयः । ज्ञेयः । ज्ञातः । णिजन्तात्, ज्ञपितः–ज्ञप्तः । जानन् । जानती । ज्ञास्यन् । ज्ञास्यती–ज्ञास्यन्ती । प्रतिजानानः । ज्ञातुम् । ज्ञानम् । ज्ञात्वा । विज्ञाय ॥ ज्ञः । प्रज्ञः ॥ अव–निन्दायाम् । अवजानाति[1] । सर्पिषो जानीते[2] ।

[५८८] **बन्ध=बन्धने** । सकर्म० । अनिट् । परस्मै० ॥

१. **प्र०** बध्नाति । बध्नीतः ॥ **म०** बध्नासि ॥ **उ०** बध्नामि ॥ २. बध्नातु । बध्नीताम् ॥ **म०** बधान[3] । बध्नीतम् ॥ **उ०** बध्नानि । बध्नाव ॥ ३. **प्र०** अबध्नात् । अबध्नीताम् ॥ **म०** अबध्नाः ॥ **उ०** अबध्नाम् ॥ ४. बध्नीयात् । बध्नीयाताम् ॥ ५. **प्र०** बबन्ध ॥ **म०** बबन्धिथ- बबन्ध ॥ **उ०** बबन्ध । बबन्धिव ॥ ६. बन्धा ॥ ७. भन्त्स्यति[4] ॥ ८. बध्यात् । बध्यास्ताम् ॥ ९. अभान्त्सीत्[5] । अबान्धाम्[6] । अभान्त्सुः ॥ **म०** अभान्त्सीः । अबान्धम् । अबान्ध ॥ **उ०** अभान्त्सम् । अभान्त्स्व । अभान्त्स्म ॥ १०. अभन्त्स्यत् ॥

**कर्मणि**—बध्यते । ९. अबन्धि । **णिचि**—बन्धयति-ते । ९. अबबन्धत्–त । **सनि**—बिभन्त्सति । **यङि**—बाबध्यते । **यङ्लुकि**—बाबन्धीति–बाबन्धि ॥ **कृत्सु**—बन्धव्यम् । बन्धनीयम् । बन्ध्यम् । बद्धः[7] । बध्नन् । बध्नती । भन्त्स्यन् । बन्धुम् । बन्धनम् । बध्वा । प्रबध्य ॥ बन्धुः । बधिरः ॥

---

१. अवजानासि मां यस्मात् । इति रघुः । २ **अकर्मकाच्च** । इति तङ् । ३. **हलः श्नः शानज्झौ** । हलः परस्य श्नः शानजादेशः स्यात् हौ परे । मतिं बधान सुग्रीवे (भट्टिः २० । २२) । ४. **एकाचो बशो भष्**—(१८९) इति भष्भावः । ५. हलन्तलक्षणा वृद्धिः भष्भावः । षष्ठो लुङ् । ६. पूर्वत्रासिद्धमिति भष्भावात्पूर्वं **झलो झलि** (२५) इति सिज्लोपः । **वदव्रजे**—(पृ० ११)ति वृद्धिः । ७. छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । इति शाकुन्तलम् ।

[५८९] **वृङ्**=संभक्तौ । सकर्म० । सेट् । आत्मने० ॥

१. वृणीते । वृणाते । वृणते ॥ **म०** वृणीषे । वृणाथे । वृणीध्वे ॥ **उ०** वृणे । वृणीवहे । वृणीमहे ॥ **२. प्र०** वृणीताम् । वृणाताम् । वृणताम् ॥ **म०** वृणीष्व । वृणाथाम् । वृणीध्वम् ॥ **उ०** वृणै ॥ **३.** अवृणीत ॥ **म०** अवृणीथाः ॥ **उ०** अवृणि ॥ **४.** वृणीत । वृणीयाताम् ॥ **५. प्र०** वव्रे । वव्राते । वव्रिरे ॥ **म०** वव्रिषे । वव्राथे । ववृढ्वे ॥ **उ०** वव्रे । ववृवहे ॥ **६.** वरिता–वरीता ॥ **७.** वरिष्यते–वरीष्यते ॥ **८.** [1]वरिषीष्ट–वृषीष्ट ॥ **९.** [2]अवरिष्ट–अवरीष्ट–अ[3]वृत ॥ **१०.** अवरिष्यत–अवरीष्यत ॥

**कर्मणि**—व्रियते । **णिचि**—वारयति । **९.** अवीवरत् । **सनि**—वि[4]वरिषते–विवरीषते–वुवूर्षते । **यङि**—वेव्रीयते । **यङ्लुकि**—वर्विर्ति–वरीवर्ति ॥ **कृत्सु**—वरि(री)तव्यम् । वरणीयम् । वार्यः । वृतः । वृणानः । वरि(री)तुम् । वरणम् । वरि(री)त्वा । परावृत्य ॥ वरेण्यः ।

[५९०] **श्रन्थ**=विमोचनप्रतिहर्षयोः । सकर्म० । सेट् । परस्मै० ॥

**१.** श्र[5]थ्नाति ॥ **२.** श्रथ्नातु ॥ **३.** अश्रथ्नात् ॥ **४.** श्रथ्नीयात् ॥ **५. प्र०** शश्राथ । श्रेथतुः–शश्रन्थतुः । श्रेथुः–शश्रन्थुः ॥ **म०** शश्रन्थिथ–श्रेथिथ । श्रेथथुः–शश्रन्थथुः । शश्रन्थ–श्रेथ ॥ **उ०** शश्राथ–

---

१. **लिङ्सिचो**—(४७७)रिति इड्विकल्पः । इट्पक्षे **न लिङि** (४७७) इति नेटो दीर्घः । २. इट्पक्षे **वृतो वा** (२९२)इति वा दीर्घः । एकादशो लुङ् । ३ अनिट्पक्षे दशमो लुङ् । ४. **इट् सनि वा** (२९२) इति वेट् । तस्य **वृतो वे**—(२९२)ति वा दीर्घः । ५. **सार्वधातुकमपित्** (पृ० ३) इति श्नाप्रत्ययस्य ङित्वात् **अनिदिता**—(३१)मिति नलोपः ।

शश्रथ । शश्रथिव–श्रेथिव–शश्रन्थिव । शश्राथिम–श्रेथिम–शश्रन्थिम ॥ ६. श्रन्थिता ॥ ७. श्रन्थिष्यति ॥ ८. श्रथ्यात् ॥ ९. अश्रन्थीत् ॥ १०. अश्रन्थिष्यत् ॥

**कर्मणि**—श्रथ्यते । **णिचि**—श्रन्थयति-ते । ९. अशश्रन्थत्-त । **सनि**—शिश्रन्थिषति । **यङि**—शाश्रथ्यते । **यङ्लुकि**—शाश्रन्थीति–शाश्रन्ति ॥ **कृत्सु**—श्रन्थितव्यम् । श्रन्थनीयम् । श्रन्थित्वा । श्रथित्वा । श्रन्थनम् । इत्यादि ॥

[५९१] **मन्थ**=विलोडने । द्विकर्म० । सेट् । परस्मै० ॥

१. मथ्नाति[1] ॥ २. मथ्नातु ॥ म० मथान ॥ उ० मथ्नानि ॥ ३. अमथ्नात् ॥ ४. मथ्नीयात् ॥ ५. ममन्थ ॥ ६. मन्थिता ॥ ७. मन्थिष्यति ॥ ८. मथ्यात् ॥ ९. अमन्थीत्[2] ॥ १०. अमन्थिष्यत् ॥

**कर्मणि**—मथ्यते । **णिचि**—मन्थयति-ते । ९. अममन्थत्-त । **सनि**—मिमन्थिषति । **यङि**—मामथ्यते । **यङ्लुकि**—मामन्थीति--मामन्ति ॥ **कृत्सु**—मन्थितव्यम् । मन्थनीयम् । मन्थ्यम् । मथितः[3] । मन्थन् । मथ्नती । मन्थितुम् । मन्थनम् । मथित्वा-मन्थित्वा । प्रमथ्य ॥

[५९२] **ग्रन्थ**=सन्दर्भे । सकर्म० । सेट् । परस्मै० ॥

१. ग्रथ्नाति । इत्यादि सर्वं **'श्रथ्नाति'** (५९०) वत् ॥

[५९३] **मृद**=क्षोदे । सकर्म० । सेट् । परस्मै० ।

---

१. मथ्नाति कौरवशतं समरे –इति वेणीसंहारे । २. अमन्थीच्च परानीकम् । इति भट्टिः । ३ जाता मन्ये शिशिरमथितां पद्मिनीम् । इति माघे ।

१. मृद्नाति ॥ २. मृद्नातु ॥ **म०** मृदान ॥ **उ०** मृद्नानि ॥ ३. अमृद्नात् ॥ ४. मृद्नीयात् ॥ ५. ममर्द ॥ ६. मर्दिता ॥ ७. मर्दिष्यति ॥ ८. मृद्यात् ॥ ९. [1]अमर्दीत् ॥ १०. अमर्दिष्यत् ॥

**कर्मणि**—मृद्यते । **णिचि**—मर्दयति । ९. अममर्दत् । **सनि**—मिमर्दिषति । **यङि**—मरीमृद्यते । **यङ्लुकि**—मरीमर्दीति-मर्मृदीति-मरिमृदीति-मरीमृदीति-मर्मृष्टि इत्यादि ॥ **कृत्सु**—मर्दितव्यम् । मर्दनीयम् । मृद्यम् । मृद्नन् । मृद्नती । मर्दितुम् । मर्दनम् । मृदित्वा । प्रमृद्य ॥ मृत् । मृत्तिका । मृत्सा । मृत्स्ना ।

[५९४] **क्लिशू**=विबाधने । सकर्म० । वेट् । परस्मै० ।

१. क्लिश्नाति ॥ २. क्लिश्नातु ॥ ३. अक्लिश्नात् ॥ ४. क्लिश्नीयात् ॥ ५. **प्र०** चिक्लेश । चिक्लिशतुः । चिक्लिशुः ॥ **म०** चिक्लेशिथ-चिक्लेष्ठ । चिक्लिशथुः । चिक्लिश ॥ **उ०** चिक्लेश । चिक्लिशिव-चिक्लिश्व । चिक्लिशिम-चिक्लिश्म ॥ ६. क्लेशिता-क्लेष्टा ॥ ७. क्लेशिष्यति-क्लेक्ष्यति ॥ ८. क्लिश्यात् । क्लिश्यास्ताम् ॥ ९. अक्लेशीत्[2]-अक्लिक्षत्[3] । अक्लेशिष्टाम्-अक्लिक्षताम् ॥ १०. अक्लेशिष्यत् ॥

**कर्मणि**—क्लिश्यते । **णिचि**—क्लेशयति । ९. अचिक्लिशत् । **सनि**—चिक्लेशिषति-चिक्लिक्षति । **यङि**—चेक्लिश्यते । **यङ्लुकि**—चेक्लिशीति-चेक्लेष्टि ॥ **कृत्सु**—क्लेशितव्यः । क्लेशनीयः । क्लेश्यः । क्लिशितः[4]-क्लिष्टः । क्लिश्नन् । क्लिश्नती । क्लेशितुम्-क्लेष्टुम् । क्लेशनम् । क्लिशित्वा[5]-क्लिष्ट्वा । परिक्लिश्य ॥ क्लेशः ॥

१. तानमर्दीदखादीच्च (भट्टिः १५ । ३५) । २. सेट्पक्षे सप्तमो लुङ् । ३. अनिट्पक्षे पञ्चमो लुङ् । ४ **क्लिशः क्त्वानिष्ठयोः** । इति इड्विकल्पः । ५ सहस्राक्षं क्लिशित्वा कौशलैर्निजैः ।

[५९५] **अश**=भोजने । सकर्म० । सेट् । परस्मै० ॥

१. अश्नाति ॥ २. अश्नातु ॥ **म०** अशान[1] ॥ ३. आश्नत् ॥ ४. अश्नीयात् ॥ ५. **प्र०** आश[2] । आशतुः । आशुः ॥ **म०** आशिथ । आशथुः । आश ॥ **उ०** आश । आशिव । आशिम ॥ ६. अशिता ॥ ७. अशिष्यति ॥ ८. अश्यात् । अश्यास्ताम् ॥ ९. आशीत्[3] । आशिष्टाम् । आशिषुः ॥ १०. आशिष्यत् ॥

**कर्मणि**—अश्यते । ९. आशि । **णिचि**—आशयति[4] । **सनि**—अशिशिषति । **यङि**—अशाश्यते । **कृत्सु**—अशितव्यम् । अशनीयम् । अश्यम् । अशितः । अश्नन् । अश्नती । अशितुम् । अशनम् । आशः । प्रातराशः । अशित्वा । प्राश्य ॥ अशनायति[5]= बुभुक्षते इत्यर्थः ॥

[५९६] **पुष**=पु[illegible] सकर्म० सेट् परस्मै० ॥

१. पुष्णाति ॥ २. **प्र०** पुष्णातु ॥ **म०** पुषाण ॥ **उ०** पुष्णानि ॥ ३. अपुष्णात् ॥ ४. पुष्णीयात् । पुष्णीयाताम् ॥ ५. **प्र०** पुपोष । पुपुषतुः । पुपुषुः ॥ **म०** पुपोषिथ । पुपुषथुः । पुपुष ॥ **उ०** पुपोष । पुपुषिव । पुपुषिम ॥ ६. पोषिता ॥ ७. पोषिष्यति ॥ ८. पुष्यात् । पुष्यास्ताम् ॥ ९. अपोषीत्[6] । अपोषिष्टाम् ॥ १०. अपोषिष्यत् ॥

---

१ **हलः श्नः शानज्झौ** (५८८) । अशान भरताद्भोगान् (भट्टिः २० । २३) । २. लिटि द्वित्वे हलादिशेषे, अ अश्+णल् इति जाते, सवर्णदीर्घे 'आश' इति रूपम् । आशतुः' इत्यत्र द्विहल्त्वाभावान्न नुट् । ३ सप्तमो लुङ् । ४. निगरणार्थत्वान्नात्मनेपदम् । ५. **अशनायोदन्यधनाया-बुभुक्षापिपासागर्धेषु** । इति बुभुक्षायां निपातः । **क्यचि च** । इति प्राप्तस्य ईत्वस्यापवादः । ६. सप्तमो लुङ् ।

**कर्मणि**—पुष्यते। **णिचि**—पोषयति-ते। ९. अपूपुषत्-त। **सनि**—पुपुषिषति। **यङि**—पोपुष्यते। **यङ्लुकि**—पोपुषीति-पोपोष्टि॥ **कृत्सु**—पोषितव्यम्। पोषणीयम्। पोष्यम्। पुषितः। पुष्णन्। पुष्णती। पोषितुम्। पोषणम्। पुषित्वा-पोषित्वा। परिपुष्य

[५९७) **मुष=स्तेये**। सकर्म०। सेट्। परस्मै०॥

१. मुष्णाति॥ २. मुष्णातु॥ म० मुषाण[1]॥ ९. अमोषीत् इत्यादि सर्वं **'पुष्णाति'** (९९६) वत्॥ मुषित्वा॥

[५९८] **ग्रह=उपादाने**। सकर्म०। सेट्। उभय०॥

## परस्मैपदे—

१. प्र० गृह्णाति[2]। गृह्णीतः। गृह्णन्ति॥ म० गृह्णासि॥ उ० गृह्णामि॥ २. गृह्णातु॥ म० गृहाण॥ उ० गृह्णानि॥ ३. अगृह्णात्। अगृह्णीताम्। अगृह्णन्॥ ४. गृह्णीयात्॥ ५. प्र० जग्राह[3]। जगृहतुः[4]। जगृहुः॥ म० जग्रहिथ। जगृहथुः। जगृह॥ उ० जग्राह-जग्रह। जगृहिव। जगृहिम॥ ६. ग्रहीता[5]॥ ७. ग्रहीष्यति॥ ८. गृह्यात्। गृह्यास्ताम्। ९. अग्रहीत्[6]। अग्रहीष्टाम्॥ १०. अग्रहिष्यत्॥

१ मुषाण रत्नानि हरामराङ्गनाः। इति माघः। २ श्नाप्रत्ययस्य ङित्त्वात् **ग्रहिज्ये**—(३२१)ति सम्प्रसारणम्। ३. णलि द्वित्वे कृते, **लिट्यभ्यासस्योभयेषाम्** (३२१) इति सम्प्रसारणे, उरदत्वे, रपरत्वे, हलादिशेषे अभ्यासस्य चुत्वे, उपधावृद्धौ च रूपम्। ४ अतुसादौ **ग्रहिज्येति** सम्प्रसारणे कृते द्वित्वादि। तयोर्जगृहतुः पादान्राजा राज्ञी च मागधी। इति रघुः। ५. **ग्रहोऽलिटि दीर्घः**। ६. सप्तमो लुङ्। **ह्म्यन्तक्षणे** (१४१)ति न वृद्धिः।

## आत्मनेपदे—

१. प्र० गृह्णीते । गृह्णाते । गृह्णते ॥ म० गृह्णीषे ॥ उ० गृह्णे । गृह्णीवहे ॥ २. गृह्णीताम् ॥ म० गृह्णीष्व ॥ उ० गृह्णै ॥ ३. प्र० अगृह्णीत ॥ म० अगृह्णीथाः ॥ उ० अगृह्णि । अगृह्णीवहि ॥ ४. गृह्णीत । गृह्णीयाताम् । गृह्णीरन् ॥ ५. प्र० जगृहे । जगृहाते । जगृहिरे ॥ म० जगृहिषे । जगृहाथे । जगृहिढ्वे-ध्वे ॥ उ० जगृहे । जगृहिवहे । जगृहिमहे ॥ ६. ग्रहीता ॥ म० ग्रहीतासे ॥ ७. ग्रहीष्यते ॥ ८. ग्रहिषीष्ट । ग्रहिषीयास्ताम् ॥ ९. अग्रहिष्ट । अग्रहिषाताम् ॥ १०. अग्रहीष्यत ॥

**कर्मणि**—गृह्यते । ९. अग्राहि ॥ **णिचि**—ग्राहयति-ते । ९. अजीग्रहत्-त । **सनि**—जिघृक्षति-ते । **यङि**—जरीगृह्यते । **यङ्लुकि**—जाग्रहीति-जाग्राढि ॥ **कृत्सु**—ग्रहीतव्यम् । ग्रहणीयम् । प्रगृह्यम् । गृह्यकाः । ग्राह्यः । गृहीतः । गृह्णन् । गृह्णती । गृह्णानः । ग्रहीतुम् । ग्रहणम् । गृहीत्वा । प्रतिगृह्य ॥ गृह्यकाः शकुनयः अस्वतन्त्रा इत्यर्थः । ग्राही । ग्रहः । गृहम् । फलेग्रहिः । संगृह्णाति=राशीकरोति । प्रतिगृह्णाति=स्वीकरोति । तथा परिगृह्णाति । अवगृह्णाति=वर्षं प्रतिबध्नाति । नि=निग्रहे निगृह्णाति । विगृह्णाति=युध्यते । आगृह्णाति=आग्रहं करोति । आग्रहो हठः । अनुगृह्णाति=अनिष्टनिवारणपूर्वकमिष्टं साधयति ।

इति क्र्यादयः समाप्ताः ॥ ९ ॥

१. एकादशो लुङ् । २. **सनि ग्रहगुहोश्च** । इति इण्निषेधः । **रुदविद**—(३७१ ति सनः कित्त्वात्सम्प्रसारणम् । ढत्वे भष्भावकत्वषत्वानि । ३. **पदास्वैरिबाह्यापक्ष्येषु च** । इति क्यप् । ४. **ऋहलोर्ण्यत्** । ५. **पदास्वैरि**— ।

॥ श्रीः ॥

# बृहद्धातुरूपावल्याम्।

## अथ चुरादयः ॥ १० ॥

---

[५९९] **चुर=स्तेये।** सकर्म०। सेट्। उभयपदी ॥

१. **प्र०** चोरयति[1]। चोरयतः। चोरयन्ति ॥ **म०** चोरयसि। चोरयथः। चोरयथ ॥ **उ०** चोरयामि। चोरयावः। चोरयामः ॥ २. चोरयतु ॥ ३. अचोरयत् ॥ ४. चोरयेत् ॥ ५. चोरयाञ्चकार[2]-चोरयाम्बभूव-चोरयामास इत्यादि ॥ ६. चोरयिता ॥ ७. चोरयिष्यसि ॥ ८. चोर्यात्। चोर्यास्ताम् ॥ ९. अचूचुरत्[3] ॥ १०. अचोरयिष्यत् ॥

---

१ चुर्+ति इति स्थिते। **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्।** इति चुरादिभ्यः स्वार्थे णिच्। णचावितौ इमात्रं शिष्यते। चुर्+इ+ति इति जाते, **धातोः** इति विहितत्वात् तिङ्शिद्भिन्नत्वाच्च णिच आर्धधातुकत्वम्। आर्धधातुके णिचि परे **पुगन्तलघूपधस्य च** (पृ० ३)। इति गुणे चोर् इति भवति। **कर्तरि शप्** इति शपि चोर् इ अ ति इति स्थिते **सार्वधातुकार्धधातुकयो**रिति इकारस्य गुणे अयादेशे च 'चोरय' इत्यङ्गं निष्पद्यते। ततस्तिपि 'चोरयति' इति रूपम्। २ चोरय इत्यस्य अनेकाच्त्वात् **कास्प्रत्ययया**—(पृ० ८ दित्याम् कृभ्वस्त्यनुप्रयोगश्च। ३. अचूचुरच्चन्द्रमसोऽभिरामताम्। इति माघः।

## आत्मनेपदे[1]—

१. चोरयते ॥ २. चोरयताम् ॥ ३. अचोरयत ॥ ४. ५. चोरयाञ्चक्रे चोरयाम्बभूव–चोरयामास ॥ ६. चोरयितासे ॥ ७. चोरयिष्यते ॥ ८. चोरयिषीष्ट ॥ ९. अचूचुरत ॥ १०. अचोरयिष्यत ॥

**कर्मणि**—चोर्यते । अस्माद्धेतुमण्णिचि एवमेव रूपाणि । **सनि**—चुचोरयिषति–चुचोरयिषते । ण्यन्तधातूनामनेकाच्त्वान्न यङ्-यङ्लुकौ । **कृत्सु**—चोरयितव्यम् । चोरितव्यम् । चोर्यम् । इत्यादि ॥ चोरः । चौरः । चोरणा ॥

[६००] **चिति**=स्मृत्याम् । सकर्म० । सेट् । उभय० ॥

चिन्तयति ॥ ५. चिन्तयाञ्चकार–चिन्तयाञ्चक्रे । ९. अचिचिन्तत् ॥ **सनि**—चिचिन्तयिषति । चिन्ता । णिजभावे[2] चिन्तति इत्यादि ।

[६०१] **यत्रि**=सङ्कोचने । सकर्म० । सेट् । उभय० ॥

यन्त्रयति–ते ॥ ९. अययन्त्रत्-त ॥ **सनि**—यियन्त्रयिषति–ते । यन्त्रणा[3] । यन्त्रितः ॥

[६०२] **लक्ष**=दर्शनाङ्कनयोः । सकर्म० । सेट् । उभय० ॥

लक्षयति–ते ॥ ९. अललक्षत्–त । लिलक्षयिषति–ते ॥ लक्ष्मीः[4] । लक्ष्यम् । लक्षणम्[5] ॥

१. **णिचश्च** (पृ० १६) इति कर्तृगामिनि क्रियाफले आत्मनेपदम् । २. चिन्त स्मृत्यामित्यपठित्वा इदित्पाठात् स्वार्थे णिच् पाक्षिक इति ज्ञायते । ३. करयन्त्रणदन्तुरान्तरे । इति श्रीहर्षः । ४. **लक्षेर्मुट् च** । इति ईकारप्रत्ययो मुडागमश्च । ५. अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् । इति रघुः ।

[६०३] **पीड**=अवगाहने । सकर्म० । सेट् । उभय० ॥

पीडयति–ते ॥ ९. अपीपीडत्–त–अपिपीडत्–त[1] ।

[६०४] **पॄ**=पूरणे । सकर्म० । सेट् । उभय० ॥

पारयति–ते ॥ ९. अपीपरत्–त ॥

[६०५] **ऊर्ज**=बलप्राणनयोः । सकर्म० । सेट् । उभय० ॥

ऊर्जयति–ते ॥ ९. और्जिजत्–त ॥ **सनि**—ऊर्जिजयिषति–ते ॥ ऊर्क् । ऊर्जितम्[2] ॥

[६०६] **भक्ष**=अदने । सकर्म । सेट् । उभय० ॥

भक्षयति–ते ॥ ९. अबभक्षत्–त ॥ बिभक्षयिषति–ते । भक्षणम् । भक्ष्यम् ॥

[६०७] **कुट्ट**=छेदनभर्त्सनयोः । पूरणे इति स्वामी । सकर्म० । सेट् । उभय० ॥

कुट्टयति ते ॥ ९. अचुकुट्टत्–त ॥ चुकुट्टिषति–ते ॥ कुट्टाकः[3] । कुट्टः । कुट्टिमम् ॥

[६०८] **षान्त्व**=सामप्रयोगे । सक० । सेट् । उभय० ॥ आधृषीयाः ॥

सान्त्वयति–ते । सान्त्वति इति च ॥ ९. अससान्त्वत्–त । **सनि**— सिसान्त्वयिषति–ते ॥

---

१ **भ्राजभासे**—(७५)त्यादिना चङ्युपधाह्रस्वविकल्पः । २. मातृकं च धनुरूर्जितं दधत् । ३. इभकुम्भकूटकुट्टाकपाणिकुलिशस्य हरेः प्रमादः । इति भवभूतिः ।

[६०९] **श्रण**=दाने । सकर्म० । सेट् । उभय० ॥ प्रायेणायं विपूर्वः ।

श्राणयति--ते । ९. अशिश्रिणत्--त । **सनि**—शिश्राणयिषति--ते ॥ विश्राणनम्[1] ।

[६१०] **तड**=आघाते । सकर्म० । सेट् । उभय० ॥

ताडयति–ते । ९. अतीतडत्--त । **सनि**—तिताडयिषति--ते । ताडनम् ॥

[६११] **मडि**=भूषायां हर्षे च । सकर्म० । सेट् । उभय० ॥

मण्डयति- ते । ९. अममण्डत्--त । **सनि**—मिमण्डयिषति–ते । इदित्वात् मण्डति--ते । इत्यपि ॥

[६१२] **छर्द**=वमने । अकर्म० । सेट् । उभय० ॥

छर्दयति–ते । ९. अचच्छर्दत्–त ॥ **सनि**—चिच्छर्दयिषति–ते । छर्दिः ।

[६१३] **क्षल**=शौचकर्मणि । सकर्म० । सेट् । उभय० ॥

क्षालयति–ते । अचिक्षलत्–त । **सनि**—चिक्षालयिषति–ते ॥ प्रक्षालनम्[2] ॥

[६१४] **तुल**=उन्माने । सकर्म० । सेट् । उभय० ॥

तोलयति–ते । ९. अतूतुलत्--त । **सनि**—तुतोलयिषति–ते । तोलनम् । तुला । तुल्यम् ॥

---

१. तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोशजातम् । इति रघुः ।
२. प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ।

[६१५] **दुल**=उत्क्षेपे। सकर्म०। सेट्। उभय० ॥

दोलयति–ते। ९. अदूदुलत्–त। **सनि**—दुदोलयिषति–ते। दोला। दुलिः=कमठी।

[६१६] **मूल**=रोहणे। सकर्म०। सेट्। उभय० ॥

मूलयति–ते। अमूमुलत्–त। **सनि**—मुमूलयिषति–ते॥ उन्मूलयति=उत्पाटयति।

[६१७] **पाल**=रक्षणे। सकर्म०। सेट् उभय० ॥

पालयति–ते। अपीपलत्–त। **सनि**—पिपालयिषति–ते। पालनम् ॥

[६१८] **पूज**=पूजायाम्। सकर्म०। सेट्। उभय० ॥

पूजयति–ते। ९. अपूपुजत्[1]–त। **सनि**—पुपूजयिषति–ते ॥

[६१९] **घृ**=प्रस्रवणे। सकर्म०। सेट्। उभय० ॥

घारयति–ते। ९. अजीघरत्–त। **सनि**—जिघारयिषति–ते ॥

[६२०] **कॄत**=संशब्दने। सकर्म०। सेट्। उभय० ॥

[illegible]ते–ते। ९. अचीकृतत्[3]–त। अचिकीर्तत्[4]–त। **सनि**—चिकीर्तयिषति–ते। कीर्तिः। कीर्तना।

---

१. यदपूपुजस्त्वमिह पार्थ मुरजितमपूजितं सताम्। इति माघः। २. **उपधायाश्च**। धातोरुपधाभूतस्य ऋत इत्स्यात्। इति इत्वं रपरत्वम्। **उपधायां च** (१७)ति दीर्घश्च। ३. **उर्ऋत्** (४१८) इररामपवादः इत्युपधाया ऋत्वपक्षे रूपम्। ४. ऋत्वाभावपक्षे ऋत इत्वे रपरत्वे **उपधायां चे**ति दीर्घे कीर्त् इत्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे चुत्वे च रूपम्। भ्रातुरचिकीर्तच्च विक्रमम् इति भट्टिः।

[६२१] **तत्रि**=कुटुम्बधारणे। अकर्म०। सेट्। आत्मने०। आकुस्मीयः[1]।

तन्त्रयते। ९. अततन्त्रत॥ इदित्वाण्णिजभावे तन्त्रति। **सनि**—तितन्त्रयिषते। तन्त्रम्॥

[६२२] **मत्रि**=गुप्तभाषणे। सकर्म०। सेट्। आत्मने०। आकुस्मीयः।

मन्त्रयते[2]। ९. अममन्त्रत। इदित्वान्मन्त्रतीत्याद्यपि। **सनि**—मिमन्त्रयिषते॥ मन्त्रम्। मन्त्री।

[६२३] **तर्ज**=सन्तर्जने। सकर्म०। सेट्। आत्मने०। आकुस्मीयः॥

तर्जयते। अततर्जत। **सनि**—तितर्जयिषते॥

[६२४] **कुत्स**=अवक्षेपणे। सकर्म०। सेट्। आत्मने०। आकुस्मीयः॥

कुत्सयते। ९. अचुकुत्सत। **सनि**—चुकुत्सयिषते॥

[६२५] **त्रुट**=छेदने। सकर्म। सेट्। आत्मने०। आकुस्मीयः॥

त्रोटयते। ९. अतुत्रोटत। **सनि**—तुत्रोटयिषते।

[६२६] **वञ्चु**=प्रलम्भने। सकर्म०। सेट्। आत्मने०। आकुस्मीयः॥

वञ्चयते। ९. अववञ्चत। क्त्वायामिड्विकल्पार्थात् उादत्त्वात् णिजन्तस्यानित्यत्वमिति वञ्चति इत्यपि भवति। वञ्चित्वा-वचित्वा-वक्त्वा। वनीवच्यते। **सनि**—विवञ्चयिषति॥

[६२७] **चर्च**=अध्ययने। सकर्म०। सेट्। उभय०॥

---

१ **आकुस्मादात्मनेपदिनः**। अकर्तृगेपि क्रियाफले। २. किमपि हृदये कृत्वा मन्त्रयेथे इति शाकुन्तलम्।

चर्चयति-ते। ९. अचचर्चत्-त। **सनि**—चिचर्चयिषति-ते। चर्चा। चर्चितम्॥

[६२८] **आक्रन्द**=सातत्ये। सकर्म। सेट्। उभय०॥

आक्रन्दयति-ते। आचक्रन्दत्-त। **सनि**—आचिक्रन्दयिषति-ते।

[६२९] **अर्ह**=पूजायाम्। सकर्म०। सेट्। उभय०॥

अर्हयति-ते। ९. आर्जिहत्-त। **सनि**—आर्जिहयिषति। णिजभावे अर्हति। आनर्ह॥

[६३०] **चर**=संशये। सकर्म०। सेट्। उभय०॥

चारयति--ते। ९. अचीचरत्--त। **सनि**—चिचारयिषति॥ प्रायेणायं विपूर्वः। विचारः।

[६३१] **ईर**=क्षेपे। सकर्म०। सेट्। उभय०॥

ईरयति--ते। ९. ऐरिरत्-त। **सनि**—ईरियिषति। णिजभावे ईरति इत्यादि॥

[६३२] **ली**=द्रवीकरणे। सकर्म०। सेट्। उभय०॥

लाययति[2]--ते। लापयति[3]-ते। ९. अलीलयत्--त। अलीलपत्-त॥ आर्धधातुके लेता। लेष्यति--ते। इत्यादि। **सनि**— लिलाययिषति--ते।

[६३३] **वृजी**=वर्जने। सकर्म०। सेट्। उभयपदी॥ आधृषीयः।

१. राजाऽऽर्जिहत्त मधुपर्कपाणिः। २ वृद्ध्यायादेशौ। ३. **विभाषा लीयतेः** (४०६) इत्यात्वपक्षे पुक्।

वर्जयति--ते । ९. अवीवृजत्--त—अववर्जत्--त । **सनि**—विवर्जयिषति--ते ॥

[६३४] **रिच**=वियोजनसम्पर्चनयोः । सकर्म० । सेट् । उभय० । आधृषीयः ।

रेचयति--ते । ९. अरीरिचत्--त । णिजभावे रेचति । रेक्ता । अरैक्षत् । **सनि**—रिरेचयिषति -ते ।

[६३५] **तृप**=तृप्तौ । सन्दीपने इति क्षीरस्वामी । सकर्म० । सेट् । उभय० ॥ आधृषीयः ॥

तर्पयति--ते । ९. अतीतृपत्--त । णिजभावे तर्पति । तर्पिता । **सनि**—तितर्पयिषति--ते ॥

[६३६] **वच**=परिभाषणे । सकर्म० । सेट् । उभय० । आधृषीयः ॥

वाचयति–ते । ९. अवीवचत्–त । णिजभावे वचति । वक्ता । अवाक्षीत् । **सनि**—विवाचयति–ते ॥

[६३७] **मान**=पूजायाम् । सकर्म० । सेट् । उभय० । आधृषीयः ॥

मानयति–ते । ९. अमीमनत्–त । **सनि**—मिमानयिषति–ते ॥

[६३८] **भू**=प्राप्तौ । सकर्म० । सेट् । आत्मने० । आधृषीयः ॥

भावयते इत्यादि (पृ० २४) णिजभावे भवते । बभूवे । भविता । भविष्यते । भविषीष्ट ॥ प्राप्त्यर्थे भवति इत्यादि परस्मैपदमपीत्येके ॥

[६३९] **गर्ह**=निन्दने । सकर्म० । सेट् । उभय० । आधृषीयः ॥

गर्हयति[1]–ते ॥ ९. अजगर्हत्–त । णिजभावे गर्हतीत्यादि । **सनि**—जिगर्हयिषति–ते ॥

1. विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।

[६४०] **धृष=प्रसहने**। प्रसहनं क्षमाऽभिभवश्च। सकर्म०। सेट्। उभय०। आधृषीयः॥

घर्षयति–ते। अदीधृषत्-त–अदधर्षत्-त। णिजभावे धर्षतीत्यादि। **सनि**—दिधर्षयिषति॥ धर्षणा॥

[६४१] **कथ=वाक्यप्रबन्धे**। सकर्म०। सेट्। उभय०। अदन्तः[1]॥

कथयति–ते। अचकथत्[2]-त। **सनि**—चिकथयिषते॥

[६४२] **गण=सङ्ख्याने**। सङ्ख्यानिमित्तो ज्ञानविशेषः सङ्ख्यानम्। सकर्म०। सेट्। उभय०। अदन्त.॥

गणयति-ते। अजीगणत्–त। गणना। गणकः॥

[६४३] **स्तन=देवशब्दे**। अकर्म०। सेट्। उभय०। अदन्तः॥

स्तनयति–ते। अतस्तनत्–त। **सनि**—तिस्तनयिषति–ते। स्तनयित्नुः। स्तनितम्॥

[६४४] **रच=प्रतियत्ने**। सकर्म०। सेट्। उभय०। अदन्तः॥

रचयति[3]–ते। अररचत्–त। रिरचयिषति–ते॥ रचना॥

[६४५] **स्पृह=ईप्सायाम्**। सकर्म०। सेट्। उभय०। अदन्तः॥

स्पृहयति–ते। अपस्पृहत्–त। पिस्पृहयिषति–ते॥

[६४६] **सूच=पैशून्ये**। सकर्म०। सेट्। उभय०। अदन्तः॥

---

१ अदन्तत्वफल तु अल्लोपस्य स्थानिवद्भावात् यथायोगं वृद्धिगुणयोरभावः। २. **नाग्लोपी**—(३६)ति न दीर्घसन्वद्भावौ। ३. रचयति शयनं सचकितनयनम्—इति जयदेवः।

सूचयति-ते । असुसूचत्-त । **सनि**—सुसूचयिषति-ते । **यङि**—सोसूच्यते । **यङ्लुकि**—सोसूचयति-सोसूचेति । सूचकः ॥

[६४७] **शील**=उपधारणे । उपधारणमभ्यासः । सकर्म० । सेट् । उभय० । अदन्तः ॥

शीलयति[1]-ते । अशिशीलत्-त । शिशीलयिषति-ते । परिशीलनम् ॥

[६४८] **गवेष**=मार्गणे । सकर्म० । सेट् । उभय० । अदन्तः ॥

गवेषयति-ते । अजगवेषत्-त । जिगवेषिषति-ते ॥

[६४९] **भाज**=पृथक्करणे । सकर्म० । सेट् । उभय० । अदन्तः ॥

भाजयति-ते । अबभाजत्-त । बिभाजयिषति-ते ॥

[६५०] **सभाज**=प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके । सकर्म० । सेट् । उभय० । अदन्तः ॥

सभाजयति-ते । अससभाजत्-त । सिसभाजयिषति-ते ॥

[६५१] **सङ्केत**=आमन्त्रणे । सकर्म० । सेट् । उभय० । अदन्तः ।

सङ्केतयति-ते । अससङ्केतत्-त । सिसङ्केतयिषति-ते ॥

[६५२] **मृग**=अन्वेषणे । सकर्म० । सेट् । आत्मने० । आगर्वीयः ॥

मृगयते । अमीमृगत । मिमृगयिषते ॥

[६५३] **अर्थ**=उपयाच्ञायाम् । सकर्म० । सेट् । आत्मने० । अदन्तः । आगर्वीयः ॥

अर्थयते । आर्तथत । अर्तिथयिषते ॥

[६५४] **गर्व**=माने । अकर्म० । सेट् । आत्मने० । अदन्तः । आगर्वीयः ॥

---

१. शीलयन्ति मुनयः सुशीलताम् ।

गर्वयते । अजगर्वत । जिगर्वयिषते ॥

[६५५] **मूत्र**=प्रस्रवणे । सकर्म० । सेट् । उभय० । अदन्तः ॥

मूत्रयति–ते । अमुमूत्रत्–त । मुमूत्रयिषति–ते ॥

[६५६] **मिश्र**=सम्पर्के । सकर्म० । सेट् । उभय० । अदन्तः ॥

मिश्रयति–ते । अमिमिश्रत्–त । **सनि**—मिमिश्रयिषति–ते ॥

[६५७] **दण्ड**=दण्डनिपातने । सकर्म० । सेट् । उभय० । अदन्तः ॥

दण्डयति–ते । अददण्डत्–त । दिदण्डयिषति–ते ॥

[६५८] **अङ्क**=पदे लक्षणे च । सकर्म० । सेट् । उभय० । अदन्तः ॥

अङ्कयति–ते । आञ्चिकत्–त । अञ्चिकयिषति–ते ॥

[६५९] **रस**=आस्वादनस्नेहनयोः । सकर्म० । सेट् । उभय० ।

रसयति–ते । अररसत्–त । रिरसयिषति–ते ॥

[६६०] **व्यय**=वित्तसमुत्सर्गे । सकर्म० । सेट् । उभय० । अदन्तः ॥

व्यययति–ते । अवव्ययत्–त । विव्यययिषति–ते ॥

[६६१] **रूप**=रूपक्रियायाम् । रूपस्य दर्शनं करणं वा रूपक्रिया । सकर्म० । सेट् । अदन्तः ॥

रूपयति–ते । अरुरूपत्–त । रुरूपयिषति–ते ।

[६६२] **वर्ण**=वर्णक्रियाविस्तारगुणवचनेषु । सकर्म० । सेट् । उभय० । अदन्तः ॥

वर्णयति–ते । अववर्णत्–त । विवर्णयिषति–ते ॥

इति चुरादयः सम्पूर्णाः ॥ १० ॥

---

१. रथवेगं निरूपयति ।

श्रीगणेशाय नमः ।

श्रीसरस्वत्यै नमः ।

श्रीलक्ष्मीनारायणाभ्यां नमः ।

# अथ बृहद्धातुरूपावल्याम् ।

## धातुकोशः ।

---

लक्ष्मीलावण्यपीयूषपानपात्रायितेक्षणः ।
सनीरनीरदश्यामः पातु वो भगवान् हरिः ॥

धातुपाठे विद्यमानानां किञ्चिदूनाद्विसहस्रधातूनां मध्ये मुख्यत्वेन कठिनत्वेन च मह्यं रुचितानां द्विषष्ट्यधिकषट्शतानां (६६२) धातूनां रूपाणि सप्रकारं धातुरूपावल्यां प्रदर्शितानि । अधुना तेषां, तदनुक्तानां च सर्वेषां धातूनां वर्णानुक्रमणी प्रदर्श्यते ।

## अस्य प्रयोजनानि त्रीणि—

१. पूर्वोक्ताः (६६२) धातवोऽत्र स्थूलाक्षरैः सम्मुद्यन्ते । अत्रापि तेषां क्रमिकसंख्या वितीर्णाऽस्ति । तेन धातुरूपावल्याम् अन्वेषणप्रयासं विना तेषां स्थानं सुखेन ज्ञायेत ।

**यथा**—

×**अगि** (अङ्ग्)=गतौ [६७] १ । सक० । सेट् । प० । अङ्गति । इति । अनेन स धातुः तच्छ्रेण्यां ६७ तमे स्थाने द्रष्टव्यः अस्य रूपविवरणं तत्र वर्तते इति ज्ञायते ।

२. इतरेषां तत्सदृशानां मध्ये अयं धातुः धातुरूपावल्यां अमुकधातुवत् इति श्तिपा निर्देशपूर्वकम् अतिदिश्यते ।

**यथा—**

स्त्यै=शब्दसङ्घाते । १ । सक० । सेट् । प० । स्त्यायति । 'ध्यायति' (२६७) वत् इति । अनेन अस्य रूपाणि 'ध्यै' धातुवत्, स च २६७ तमे स्थाने वर्तते इति च बुध्येत ।

३. धातुरूपावल्यां विवृतरूपेभ्यो धातुभ्यो विसदृशरूपा अपि केचन धातवः प्रमादात् सङ्कलयितुं विस्मृताः । तेषां मध्ये यस्य कस्यापि रूपाणि अत्र मुद्रयित्वा, इतरेषां तत्सदृशानां रूपाणि, अमुक-धातुवत् इत्यतिदेशः कृतः ।

**यथा—**

गुड=रक्षायाम् । ६ । सक० । सेट् । प० । गुडति । 'कुच' धातुवत् । अनेन अस्य आदर्शो धातुः कुचधातुः । तस्य च रूपाणि धातुकोशे विवृतानि । इति ज्ञायेत ।

एतेन धातुपाठस्थानां सर्वेषां धातूनां रूपाण्यपि विवृतप्रायाणि भवन्ति ।

## अ०

अंश=विभाजने । १० । सक० । सेट् । उ० । अंशयति–अंशयते । ५. अंशयाञ्चकार–ञ्चक्रे । अंशयामास । अंशयाम्बभूव । अंशो-भागः । अंशुः ।

अंस=समाघाते । १० । सक० । सेट् । उ० । अंसयति–ते । ९. आंसिसत्–त । अंसः स्कन्धः । अंसलः ।

अक=कुटिलायां गतौ । १ । अक० । सेट् । प० । अकति । ५. आक । ६. अकिता । ९. आकीत् । 'अटति' (१०२) वत् ।

× **अकि** (अङ्क्)=लक्षणे [५६] १ । सक० । सेट् । आ० । अङ्कते । अङ्कितम्=स्वनामधेयचिह्नितम् ।

× **अक्षू** (अक्ष्)=व्याप्तौ [१९२] १ । सक० । वेट् । प० । अक्ष्णोति-अक्षति । अक्षमिन्द्रियम् । अक्षि नेत्रम् ।

अग=कुटिलायां गतौ । १ । सक० । सेट् । प० । अगति । 'अटति' (१०२) वत् । अगति सर्पः ।

अगद=नीरोगत्वे । ११ । अगद्यति ।

× **अगि** (अङ्ग्)=गतौ [६७] १ । सक० । सेट् । प० ।

अघि (अङ्घ्)=गत्याक्षेपे । आक्षेपो निन्दा । गतौ गत्यारम्भे चेत्यन्ये । १ । अक० । सेट् । आ० । 'अङ्कति' (५६) वत् । अङ्घते गच्छति दानादिना इति अघं पापम् ।

× अङ्क=पदे लक्षणे च [६५८] १० । सक० । सेट् । उ० । अङ्कयति-ते ।

अङ्ग=पदे लक्षणे च । १० । सक० । सेट् । उ० । अदन्तः । अङ्गयति-ते ।

अचि (अञ्च्)=गतौ याचने च । १ । सक० । सेट् । उ० । परस्मैपदे अञ्चति इत्यादि 'अङ्गति' (६७) वत् । आत्मनेपदे अञ्चते इत्यादि 'अङ्कति' (५६) वत् ।

अचु (अच्)=गतौ याचने च । १ । सक० । सेट् । उ० । उदित् । परस्मैपदे अचति इत्यादि 'अटति' (१०२) वत् । आत्मनेपदे अचते इत्यादि 'अयति' (१४२) वत् । अचित्वा-अक्त्वा । अक्तः ।

× **अज**=गतिक्षेपणयोः [८९] १ । सक० । सेट् । व्यादेशे त्वनिट् । प० । अजति ।

अजि (अञ्ज्)=भाषायाम् । १० । सक० । सेट् । उ० । अञ्जयति-ते ।

× **अञ्चु** (अञ्च्)=गतिपूजनयोः [७९] १ । सक० । सेट् । प० ।

× **अञ्चु** (अञ्च्)=गतौ याचने च [२५१] १। सक०। सेट्०। उ०। अञ्चति–ते।

**अञ्चु** (अञ्च्)=विशेषणे। १०। सक०। सेट्। उ०। उदित्। अञ्चयति–ते। ९. आञ्चिचत्–त।

**अञ्जू** (अञ्ज्)=व्यक्तिम्रक्षणकान्तिगतिषु [५५६] सक०। वेट्। प०। अनक्ति।

× **अट**=गतौ [१०२] १। सक०। सेट्। प०। अटति।

**अट्ट**=अतिक्रमहिंसनयोः। १। सक०। सेट्। आ०। अट्टते 'अङ्कति' (५६) वत्। अट्टः क्षौमः हर्म्यादि।

**अट्ट**=अनादरे। १०। सक०। सेट्। उ०। अट्टयति–ते। ९. आट्टिटत्–त।

**अठि**(अण्ठ्)=गतौ। १। सक०। सेट्। आ०। इदित्। अण्ठते। ५. आनण्ठे। 'अङ्कति' (५६) वत्।

**अड**=उद्यमने। १। सक०। सेट्। प०। अडति। 'अटति' (१०२) वत्। अडो वृश्चिकलाङ्गूलम्।

**अड्ड**=अभियोगे। १। सक०। सेट्। प०। अड्डति। 'अर्चति' (८१) वत्।

**अण**=शब्दे। १। सक०। सेट्। प०। अणति। ५ आण। 'अटति' (१०२) वत्। अणुः।

× **अण**=प्राणने [४२७] ४। अक०। सेट्। आ०। अण्यते।

× **अत**=सातत्यगमने [२७] १। सक०। सेट्। प०। अतति।

× **अति** (अन्त्)=बन्धने [४५] १। सक०। सेट्। प०। अन्तति।

× **अद**=भक्षणे [३२६] २। सक०। अनि०। प०। अत्ति।

अदि (अन्द्)=बन्धने । १ । सक० । सेट् । प० । इदित् । अन्दति । 'अन्तति' (४९) वत् ।

× **अन**=प्राणने [३७४] २ । अक० । सेट् । प० । अनिति । **अन्यः** अन्यौ अन्ये ।

अन=प्राणने । ४ । अक० । सेट् । आ० । अन्यते । 'अण्यति' (४२७) वत् ।

अन्ध=दृष्ट्युपघाते । १० । सक० । सेट् । उ० । अन्धयति-ते । अन्धः ।

अबि (अम्ब्)=शब्दे । १ । अक० । सेट् । आ० । इदित् । अम्बते । ५. आनम्बे । 'अङ्कति' (५६) वत् । अम्बकं नेत्रम् । अम्बरं वस्त्रम् । अम्बा माता । अम्बु जलम् ।

अभि (अम्भ्)=शब्दे । पूर्ववत् ।

अभ्र=गतौ । १ । सक० । सेट् । प० । अभ्रति । ५. आनभ्र । 'अर्चति' (८१) वत् । अभ्रं गगनं मेघो वा ।

अम=गत्यादिषु । १ । सक० । सेट् । प० । अमति । ५. आम । 'अटति' (१०२) वत् । अयं न मित् । आमयति ।

अम=रोगे । १० । सक० । सेट् । उ० । आमयति-ते । आमयो रोगः ।

× **अय**=गतौ [१४२] १ । सक० । सेट् । आ० । अयते ।

अररु=क्रूरकर्मणि । ११ । अरर्यति ।

अर्क=स्तवने तपने च । १० । सक० । सेट् । उ० । अर्कयति-ते ।

अर्घ=मूल्ये । १० । सक० । सेट् । उ० । अर्घयति-ते । अर्घो मूल्यम् । महार्घः ।

× **अर्च**=पूजायाम् [८१] १ । अक० । सेट् । प० । अर्चति । अर्चनम् । अर्चा । अर्चकः ।

अर्च=पूजायाम् । १० । सक० । सेट् । उ० । आधृषीयः । अर्चयति–ते । अर्चति–ते इत्यपि ।

× **अर्ज**=अर्जने [८६] १ । सक० । सेट् । पर० । अर्जति ।

अर्ज=प्रतियत्ने । १० । सक० । सेट् । उ० । अर्जयति–ते । ९. आर्जिजत्–त । अर्जनमप्यस्यार्थः । यथा धनमर्जयति ।

× **अर्थ**=उपयाच्ञायाम् [६५३] १० । सेट् । आ० । अर्थयते । अर्थो धनं वस्तु वा । अर्थी ।

× **अर्द**=गतौ याचने च । [४०] १ । सक० । सेट् । प० । अर्दति ।

अर्द=हिंसायाम् । १० । सक० । सेट् । उ० । आधृषीयः । अर्दयति–ते । ९. आर्दिदत् । अर्दति–ते । जनार्दनः ।

**अर्ब**=गतौ । १ । सक० । सेट् । प० । अर्बति । ५. आनर्ब । 'अर्चति' (८१) वत् ।

अर्व=हिंसायाम् । १ । सक० । सेट् । प० । अर्वति । ५. आनर्व । 'अर्चति' (८१) वत् ।

× **अर्ह** =पूजायाम् । [२१०] १ । सक० । सेट् । प० । अर्हति । अर्घो मूल्यम् ।

×**अर्ह**=पूजायाम् [६२९] १० । सक० । सेट् । उ० । आधृषीयः । अर्हयति–ते ।

× **अल**=भूषणपर्याप्तिवारणेषु [१५१] १ । सक० । सेट् । प० । अलति । केचिदिममुभयपदिनं मन्यन्ते । तन्मते अलते इत्याद्यपि । अलं वृश्चिकपुच्छकण्टकः । अलङ्करोति भूषयति । अलते गङ्गा ; पापं निवारयतीत्यर्थः ।

× **अव**=रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छा-वाप्त्यालिङ्गनहिंसादानभागवृद्धिषु [१७१] १ । सक० । प० । अवति ।

× **अश**=भोजने [५९५] ९ । सक० । सेट् । प० । अश्नाति ।

× **अशू** (अश्)=व्याप्तौ सङ्घाते च [४८६] ५ । सक० । वेट् । आ० । अश्नुते ।

अष=गतिदीप्त्यादानेषु । १ । दीप्तावकर्म० । सेट् । उ० । परस्मैपदे अषति इत्यादि 'अटति' (१०२) वत् । आत्मनेपदे अषते इत्यादि 'अयति' (१४२) वत् ।

अस=पूर्ववत् । स्वसा स्वसारौ स्वसारः ।

× **अस**=भुवि [३६९] २ । अक० । सेट् । प० । अस्ति ।

× **असु** (अस्)=क्षेपणे [४५६] ४ । सक० । सेट् । प० । पुषादिः । अस्यति । अभ्यस्यति शिक्षते । विन्यस्यति स्थापयति । उप-न्यस्यति वचनमारभते । परास्यति मारयति ।

असूञ्=उपतापे । ११ । असूयति । असूया गुणेषु दोषाविष्करणम् । असूयुः । देवदत्ताय असूयति ।

अह=व्याप्तौ । ५ । सक० । सेट् । प० । छान्दसः । अह्नोति । अह्नुतः । अह्नुवन्ति । २. अह्नोतु । ३. आह्नोत् । ४. अह्नुयात् । शेषं 'अटति' (१०२) वत् ।

अहि (अंह्)=गतौ । सक० । सेट् । आ० । इदित् । अंहते । ५. आनंहे । 'अङ्कति' (५६) वत् । अंहते गच्छति दानादिना इति अंहः पापम् ।

अहि (अंह्)=भषायाम् । भासन इत्येके । १० । सक० । सेट् । उ० । अंहयति–ते ।

## आ०

**आङः क्रन्द** सातत्ये । 'क्रन्द'धातुं पश्यत ।

आञ्छि (आञ्छ्)=आयामे । १ । सक० । सेट् । प० । इदित् । आञ्छति । २. आञ्छतु ३. आञ्छत् । ४. आञ्छेत् । ५. आनाञ्छ । ६. आञ्छिता । ७. आञ्छिष्यति । ८. आञ्छ्यात् । ९. आञ्छीत् । १०. आञ्छिष्यत् । **कर्मणि**—आञ्छ्यते । **णिचि**—आञ्छयति-ते । **सनि**—आञ्चिच्छिषति । **कृत्सु**—आञ्छितव्यम् । आञ्छितः । आञ्छनम् । आञ्छित्वा । प्राञ्छ्य ।

×**आप्लृ** (आप्)=व्याप्तौ [४८२] ५ । प० । ऌदित् । आप्नोति । अम्भस्तोयम् । अम्भसी अम्भांसि ।

आप्लृ (आप्)=लम्भने । १० । सक० । सेट् । उ० । ऌदित् । आधृषीयः । आपयति-ते । आपति-ते । ९. आपिपत्-त । आपत्-त ।

×**आस**=उपवेशने [३३६] २ । अक० । सेट् । आ० । आस्ते । अध्यास्ते । अध्यास्ते वैकुण्ठं हरिः ।

## इ०

×**इ**=गतौ [१०७] १ । सक० । अनि । प० । अयति ।

×**इक्** (इ)=स्मरणे [३५४] २ । सक० । अनि० । प० । नित्यमधिपूर्वोऽयम् । अध्येति । इतरः । अधीगर्थदयेशां कर्मणि—श्रुतेरध्ययनम् ।

इख=गतौ । १ । सक० । सेट् । प० । एखति । २. एखतु । ३. ऐखत् । ४. एखेत् । ५. **प्र०** इयेख । ईखतुः । ईखुः ॥ **म०** इयेखिथ । ईखथुः ॥ उ० इयेख । ईखिव । ६. एखिता । ७. एखिष्यति । ८. इख्यात् । ९. ऐखीत् । १०. ऐखिष्यत् ।

**कर्मणि**—इख्यते । **णिचि**—एखयति-ते । **सनि**—एचिखिषति । **कृत्सु**—एखितव्यम् । इखितः ।

इखि (इङ्ख्)=गतौ । १ । सक० । सेट् । प० । इदित् । प्रायः प्रपूर्वक एवायं प्रयुज्यते । इङ्खति । 'उङ्खति' (६६) वत् । प्रेङ्खो दोला ।

× **इगि** (इङ्ग्)=गतौ [१८] १ । सक० । सेट् । प० । इङ्गति । इङ्गनम् । इङ्गितम् ।

× **इङ्** (इ)=अध्ययने [३५३] २ । सक० । अनि० । आ० । नित्यमधिपूर्वोऽयम् । अधीते । आख्यातोपयोगे—उपाध्यायादधीते ।

इट=गतौ । १ । सक० । सेट् । प० । एटति । ५. इयेट । ईटतुः । ६. एटिता । 'इख' धातुवत् ।

× **इण्** (इ)=गतौ [३५२] २ । सक० । अनि० । प० । एति । एकः । एतद् । 'इणो गा लुङि' इत्यादौ विशेषणार्थो णकारः ।

× **इदि** (इन्द्)=परमैश्वर्ये [४४१] १ । अक० । सेट् । प० । इन्दति ।

× **ञि इन्धी** (इन्ध्)=दीप्तौ [५४६] ७ । अक० । सेट् । आ० । इन्धे ।

इयस्=ऐश्वर्ये । ११ इयस्यति ।

इरज्=ईर्ष्यायाम् । ११ । इरज्यति ।

इरञ्=ईर्ष्यायाम् । ११ । ईर्यति-ते ।

इरस्=ईर्ष्यायाम् । ११ । इरस्यति ।

इल=स्वप्नक्षेपणयोः । ६ । स्वप्नेऽकर्म० । क्षेपणे सकर्म० । सेट् । प० । इलति । २. इलतु । ३. ऐलत् । ४. इलेत् । ५. इयेल । ईलतुः । म० इयेलिथ । ईलथुः उ० इयेल । ईलिव ।

६. एलिता। ७. एलिष्यति ८. इल्यात्। ९. ऐलीत्
इली छुरिकापीठम्। इला पृथिवी।

इल=प्रेरणे। १०। सक०। सेट्। उ०। इलयति-ते।

× इवि (इन्व्)=व्याप्तौ [१६९] १। सक०। सेट्। प० इन्वति

× इष=गतौ [४०१] ४। सक०। सेट्। प०। इष्यति। इषीका।
इष्टका। इषुर्बाणः।

इष=आभीक्ष्ण्ये। ९। सक० सेट्। प०। इष्णाति। २. इष्णातु। ३.
ऐष्णात्। ४. इष्णीयात्। आर्धधातुके 'इष्यति' (४०१) वत्।
एषितव्यम्–एष्टव्यम्। इष्टः। इष्णन्। एषितुम्–एष्टुम्। एषित्वा–

× इष=इच्छायाम् [५०६] ६। सक०। सेट्। प०। इच्छति।

इषुध=शरधारणे। ११। इषुध्यति।

× ई=गतौ [१०८] १। स० अनि०। प०। अयति।

ई=गतिप्रजनकान्त्यसनखादनेषु। २। अर्थानुगुण्येन सकर्मकोऽकर्मकश्च
अनि०। प०। एति। ईतः। इयन्ति। **म०** एषि। ईथः। ईथ
**उ०** एमि। ईवः। ईमः। २. एतु–ईतात्। ईताम्। इयन्तु
**म०** ईहि–ईतात्। ईतम्। ईत। **उ०** अयानि। **३.** ऐत्
ऐताम्। आयन्। **म०** ऐः। ऐतम्। ऐत। **उ०** आयम्
ऐव। ऐम। **४.** ईयात्। ईयाताम्। ईयुः। **५.** अयाञ्चकार
**६.** एता। **७.** एष्यति। **८.** ईयात्। ईयास्ताम्। ईयासुः
**९.** ऐषीत्। ऐष्टाम्। **१०.** ऐष्यत्। **कर्मणि**—ईयते
**णिचि**—आययति–ते। **सनि**—इषिषति। एतव्यम्। अयनी-
यम्। एयम्। ईतः। ईयन्। इयती। एष्यन्।
अयनम्। ईत्वा। प्रेय।

× ईक्ष=दर्शने [१७७] १ । सक० । सेट् । आ० । ईक्षते । राधीक्ष्योर्यस्य विप्रश्नः–कृष्णाय ईक्षते । पृष्टो गर्गः कृष्णाय शुभाशुभं पर्यालोचयतीत्यर्थः ।

ईखि (ईङ्ख् )=गतौ । सक० । सेट् । प० । ईङ्खति 'उङ्खति' (६६) वत् ।

× ईङ् (ई)=गतौ [४०७] ४ । सक० । अनि० । आ० । ईयते ।

ईज=गतिकुत्सनयोः । १ । सक० । सेट् । आ० । ईजते । ५. ईजाञ्चक्रे । ईजाम्बभूव । 'ईक्षति' (१७७) वत् ।

× ईड=स्तुतौ [३३४] २ । सक० । सेट् । आ० । ईट्टे । ऋक्षु डस्य ळः प्रायेण । अग्निमीळे पुरोहितम् ।

ईड=गतौ । १० । सक० । सेट् । उ० । ईडयति–ते ।

× ईर=गतौ कम्पने च [३३३] २ । सक० । सेट् । आ० । ईर्ते ।

× ईर=क्षेपे [६३१] १० । सक० । सेट् । उ० । ईरयति–ते । प्रेरणम् । प्रेरणा ।

ईर्क्ष्य=ईर्ष्यायाम् । १ । सक० । सेट् । प० । ईर्क्ष्यति । 'ईर्ष्यति' (१५१) वत् ।

× ईर्ष्य=ईर्ष्यायाम् [१५१] सक० । सेट् । प० । ईर्ष्यति । देवदत्ताय ईर्ष्यति ।

× ईश=ऐश्वर्ये [३३५] २ । अक० । सेट् । आ० । ईष्टे । ईशनीयम् । ईश्यम् । ईशितः । ईशानः । ईशितुम् । ईशित्वा । ईश्वरः । अधीगर्थदयेशां कर्मणि–सर्पिष ईशनम् ।

× ईष=गतिहिंसादर्शनेषु [१७८] १ । सक० । सेट् । आ० । ईषते । अभीषुः प्रग्रहे रश्मौ । ईषः । ईष्यः । प्रेषयति यापयति । प्रेष्यो दासः ।

× ईष=उञ्छे [२००] १ । सक० । सेट् । प० । ईषति ।

× ईह=चेष्टायाम् [१८४] १। सक०। सेट् आ०। समीहते इच्छति यतते वा।

## उ०

× उक्ष=सेचने [१९४] १। सक०। सेट्। प०। उक्षति। प्रोक्षणं यज्ञार्थं पशुहननम्। प्रक्षालनं वा।

× उख=गतौ [६५] १। सक०। सेट्। प०। ओखति। उखा यज्ञपात्रविशेषः।

× उखि (उङ्ख्)=गतौ [६६]। १। सक०। सेट्। प०। उङ्खति।

उङ्(उ)=शब्दे। १। अक०। अनि०। आ०। अवते। २. अवताम्। ३. आवत। ४. अवेत। ५. ऊवे। ऊवाते। म० ऊविषे। ऊवाथे। ऊविध्वे—ढ्वे। उ० ऊवे। ऊविवहे। ६. ओता। ७. ओष्यते। ८. ओषीष्ट। ९. औष्ट। औषाताम्। औढ्वम्। १०. औष्यत। **भावे** ऊयते। **णिचि**—आवयति—ते। **सनि**—ऊषिषते। **कृत्सु**—ओतव्यम्। अवनीयम्। आव्यम्—अव्यम्। उतम्। उत्वा। प्रोत्य। अवमानः। ओतुम्।

उच=समवाये। समवायः सङ्गमो मिश्रणम्। ४. अक०। सेट्। प०। पुषादिः। उच्यति। ५. उवोच। ऊचतुः। ऊचुः। म० उवोचिथ। उ० ऊचिव। ६. ओचिता। ७. ओचिष्यति। ८. उच्यात्। ९. औचत्। ओचितव्यम्। ओचनीयम्। ओच्यम्। उचितः। ओचितुम्। ओचित्वा। प्रोच्य। औचित्यम्। औचिती। ओकः ओकसी। उल्बः। उच्यति केशः स्नानेनेति मनोरमायाम्।

× उछि (उञ्छ्)=उञ्छे [८४] १। सक०। सेट्। प०। उञ्छति।

उछि (उञ्छ्)=उञ्छे। ६। सक०। सेट्। प०। उञ्छतीत्यादि भौवादिक (८४) वत्। स्वरे विशेषः।

उच्छी (उच्छ्)=विवासे। विवासः समाप्तिः। १। अक०। सेट्। प०। प्रायेणायं विपूर्वः। ईदित्। व्युच्छति। उञ्छति (८४) वत्। व्युचिच्छिषति। व्युष्टः। व्युष्टवान्।

उच्छी (उच्छ्) विवासे। ६। व्युच्छति इत्यादि पूर्ववत्। स्वरे विशेषः।

× **उज्झ**=उत्सर्गे [१०१] ६। सक०। सेट्। प०। उज्झति।

उठ=उपघाते। १। सक०। सेट्। प०। ओठति। ५. उवोठ। ऊठतुः। ७. ओठिष्यति। 'ओखति' (६५) वत्।

उतृदिर् 'तृदिर् धातुं पश्यत।

उध्रस=उञ्छे। ९। सक०। सेट्। प०। उकारो धात्ववयव इत्येके। नेत्यन्ये। आद्यपक्षे—उध्रस्नाति। २. उध्रस्नातु। ३. औध्रस्नात्। ४. उध्रस्नीयात्। ५. उध्रसाञ्चकार। ६. उध्रसिता। ७. उध्रसिष्यति। ८. उध्रस्यात्। उध्रस्यास्ताम्। ९. औध्रसीत्। १०. औध्रसिष्यत्। **कर्मणि**—उध्रस्यते। **णिचि** उध्रासयति–ते। **सनि**—उदिध्रसिषति। **कृत्सु**—उध्रसितव्यम्। उध्रसितः। उध्रसित्वा। उध्रस्नन्।

× **उन्दी** (उन्द्)=क्लेदने [५५५] ७। सक०। सेट्। प० उनत्ति।

उबुन्दिर् 'बुन्दिर्' धातुं पश्यत।

उब्ज=आर्जवे। ६। सक०। सेट्। प०। उब्जति। ५. उब्जाञ्चकार। 'उज्झति' (५०१) वत्।

उभ=पूरणे। ६। सक०। सेट्। प०। उभति। २.। उभतु। ३. औभत्। ४. उभेत्। ५. उवोभ। ऊभतुः। म० ऊभिथ। उ० उवोभ। ऊभिव। 'इख' धातुवत्। उभौ।

उम्भ=पूरणे। ६। सक०। सेट्। प०। उम्भतु। ५. उम्भाञ्चकार। 'इखि' धातुवत्। कुम्भः। कुम्भी।

उरस् =बलार्थे । ११ । उरस्यति ।

× उर्द=माने क्रीडायां च [१७] १ । अक० । सेट् । आ० । ऊर्दते ।

उर्वी (उर्व्)=हिंसायाम् । १ । सक० । सेट् । प० । ईदित् । ऊर्वति । २. ऊर्वतु । ३. और्वत् । ५. ऊर्वाञ्चकार । ६. ऊर्विता । ८. ऊर्व्यात् । ९. और्वीत् । ऊर्णः । ऊर्णवान् । ऊः उरौ उरः ।

× उष=दाहे [२०१] १ । सक० । प० । ओषति । ऊष्मा । उष्णः । उष्णालुः । ओष्ठः । उष्ट्रः ।

उषस् =प्रभातभावे । ११ । उषस्यति रात्रिः । उष ।

उहिर् (उह्)=अर्दने । १ । सक० । सेट् । प० । इरित् । ओहति । ५. उवोह । ६. ओहिता । ९. औहत्—औहीत् । 'ओखति' (६५) वत् ।

## ऊ

ऊठ=उपघाते । १ । सक० । सेट् । प० । ऊठति । २. ऊठतु । ३. औठत् । ४. ऊठेत् । ५. ऊठाञ्चकार । ६. ऊठिता । ९. औठीत् । 'ईर्ष्यति' (१५१) वत् । ऊठिषिषति ।

ऊन=परिहाणे । १० । सक० । सेट् । उ० । ऊनयति—ते । ९. औनिनत्—त । ऊनं हीनम् ।

× ऊयी (ऊय्)=तन्तुसंताने । [१४४] सक० । सेट् । आ० । ऊयते ।

× ऊर्ज=बलप्राणनयोः [६०५] १० । सक० । सेट् । उ । ऊर्जयति—ते । ऊर्जस्वी अधिकबलवान् ।

× ऊर्णुञ् (ऊर्णु)=आच्छादने [३४६] २ । सक० । सेट् । उ० । ऊर्णोति ऊर्णौति ।

ऊष=रुजायाम् । १ । सक० । सेट् । प० । ऊषति । 'ईर्ष्यति' (१५१) वत् । ऊषरः क्षारभूमिः ।

× ऊह=वितर्के [१८८] १ । सक० । सेट् । आ० । ऊहते । ऊहा ।

## ऋ

× ऋ=गतिप्रापणयोः [२८१] १ । सक० । अनि० । प० । ऋच्छति ।

ऋ=गतौ । ३ । सक० । अनि० । प० । इयर्ति । इयृतः । इयूति । २. इयर्तु–इयृतात् । इयृताम् । इयूतु । म० इयृहि । उ० इयराणि । ३. ऐयः । ऐयृताम् । ऐयरुः । म० ऐयः । एयृतम् । उ० ऐयरम् । ऐयृव । ४. इयृयात् । ५. आर । म० आरिथ । उ० आर । आरिव । ६. अर्ता । ७. अरिष्यति । ८. अर्यात् । ९. आरत् । आरताम् । अर्यः स्वामिवैश्ययोः । आर्यो ब्राह्मणः । सम्पूर्वकोऽयमात्मनेपदी । समियृते । समियूाते । ५. समारे । इत्यादि ।

× ऋच=स्तुतौ [५००] ६ । सक० । सेट् । प० । ऋचति । अर्कः ।

× ऋच्छ=गतिप्रलयेन्द्रियमूर्तिभावेषु [४९९] ६ । अक० । सेट् । प० । ऋच्छति ।

× ऋज=गतिस्थानार्जनोपार्जनेषु [७२] सक० । सेट् । आ० । अर्जते । ऋजुः । आर्जनम् ।

ऋजि (ऋञ्ज्)=भर्जने । भर्जनं पाकविशेषः । १ । सक० । सेट् । आ० । इदित् । ऋञ्जते । ५. ऋञ्जाञ्चक्रे । ६. ऋञ्जिता । ८. ऋञ्जिषीष्ट । ९. आर्ञ्जिष्ट । ढ्वम्–ध्वम् ।

ऋणु (ऋण्)=गतौ । ८ । सक० । सेट् । उ० । उदित् । तनोत्यादिः । ऋणोति–अर्णोति । ऋणुते–अर्णुते । ५. आनर्ण–आनृणे । ६. अर्णिता । ९. आर्णीत्–आर्णिष्ट । ऋतः । अर्णितुम् । ऋतं सत्यम् । अर्णित्वा–ऋत्वा । प्रार्त्य–प्राण्र्य । अर्णवः ! स्वर्णम् । सुवर्णम् ।

× ऋधु (ऋध्)=वृद्धौ [४६९] ४ । अक० । सेट् । प० । पुषादिः । ऋध्यति ।

× ऋधु (ऋध्)=वृद्धौ [४८८] ५ । अक० । सेट् । प० । ऋध्नोति ।

ऋफ=हिंसायाम् । सक० । सेट् । प० । ऋफति । ९. आनर्फ । 'ऋचति' (५००) वत् ।

ऋम्फ=हिंसायाम् । ६ । सक० । सेट् । प० । ऋम्फति । 'उङ्घति' (६६) वत् ।

ऋषी (ऋष्)=गतौ । ६ । सक० । सेट् । प० । ऋषति । 'ऋचति' (५००) वत् । ऋषिः । ऋषभः । ऋष्टः । ऋष्टवान् ।

## ॠ

ॠ=गतौ । ९ । सक० । सेट् । प० । प्वादिः । ॠणाति । २. ॠणातु । ३. आर्णात् । ४. ॠणीयात् । ५. आराञ्चकार । ६. अरिता । ७. अरिष्यति । ८. ईर्यात् । ९. आरीत् । **कर्मणि**—ईर्यते । प्रेर्यते । **णिचि**—ईरयति-ते । ईर्णः । ईर्त्वा ।

## ए

× एजृ (एज्)=दीप्तौ [७४] १ । अक० । सेट् । आ० । एजते ।

× एजृ (एज्)=कम्पने [९१] १ । अक० । सेट् । प० । एजति । एजन् । उदेजयः ।

एठ=विबाधायाम् । १ । सक० । सेट् । आ० । एठते । 'एजति' (७४) वत् ।

× एध=वृद्धौ [२] १ । अक० । सेट् । आ० । एधते ।

एला=विलासे । ११ । एलायति ।

एषृ (एष्)=गतौ प्रयत्ने च । १ । सक० । सेट् । आ० । ऋदित् । एषते । २. एषताम् । ३. ऐषत । ४. एषेत । ५. एषाञ्चकार । 'एधति' (२) वत् ।

## ओ०

ओखृ (ओख्)=शोषणालमर्थयोः । १ । अक० । सेट् । प० । ऋदित् ।
ओखति । 'ओणति' (१३७) वत् ।

×ओणृ (ओण्)=अपनयने [१३७] १ । सक० । सेट् । प० । ओ-
णति ।

ओ प्यायी 'प्यायी' धातुं पश्यत ।
ओ लजी 'लजी' धातुं पश्यत ।
ओ लडि 'लडि' धातुं पश्यत ।
ओ लस्जी 'लस्जी' धातुं पश्यत ।
ओ विजी 'विजी' धातुं पश्यत ।
ओ वै 'वै' धातुं पश्यत ।
ओ व्रश्चू 'व्रश्चू' धातुं पश्यत ।
ओ श्वि 'श्वि' धातुं पश्यत ।
ओ हाक् 'हाक्' धातुं पश्यत ।
ओ हाङ् 'हाङ्' धातुं पश्यत ।

## क०

कक=लौल्ये । लौल्यं गर्वश्चापल्यं च । १ । अक० । सेट् । आ० ।
ककते । 'कलति' (१४९) वत् । काकः ।

ककि (कङ्क्)=गतौ । १ सक० । सेट् । आ० । इदित् । कङ्कते ।
५. चकङ्के । ६. कङ्किता । ८. कङ्किषीष्ट । ९. अकङ्किष्ट ।
'वन्दति' (९) वत् । कङ्कः पक्षिविशेषः । कङ्कतिका प्रसाधिनी ।

कखे (कख्)=हसने । १ । सक० । सेट् । प० । एदित् । कखति ।
५. चकाख । 'गदति, (३७) वत् । ९. अकखीत् ।

कगे (कग्)=नोच्यते । अस्यायमर्थ इति नोच्यत इत्यर्थः । अनेकार्थोऽयम् । क्रियासामान्यार्थो वा । १ । सक० । सेट् । प० । एदित् । कगति । ५. चकाग । 'गदति' (३७) वत् । ९. अकगीत् ।

कच=बन्धने । १ । सक० । सेट् । आ० । कचते । 'कलति' (१४९) वत् । कचते बध्नाति यूनां मनांसीति 'कचः ।'

कचि (कञ्च्)=दीप्तिबन्धनयोः । १ । दीप्तावक० । बन्धने । सक० । सेट् । आ० । इदित् । कञ्चते । ५. चकञ्चे । 'वन्दति' (९) वत् । कञ्चुकः ।

कटी (कट्)=गतौ । १ । सक० । सेट् । ईदित् । कटति । ५. चकाट । ९. अकाटीत् । 'गदति' (३७) वत् । कट्टः । कट्टवान् ।

कटे (कट्)=वर्षावरणयोः । सक० । सेट् । प० । एदित् । कटति । ५. चकाट । ९. अकटीत् । 'गदति' (३७) वत् । कटः । कटी । कटकम् । कटुः ।

कठ=कृच्छ्रजीवने । १ । अक० । सेट् । प० । कठति । 'गदति' (३७) वत् । अयमात्मनेपद्यपि कठते 'कलति' वत् । कठः । कठिनम् । कठोरम् ।

कठि (कण्ठ्)=शोके । शोक इह आध्यानम् । १ । अक० । सेट् । आ० । कण्ठते । 'वन्दति' (९) वत् । उत्पूर्वोयमुत्कण्ठायाम् । उत्कण्ठते ।

कठि (कण्ठ्)=शोके । अर्थः पूर्ववत् । १० । अक० । सेट् । उ० । आधृषीयः । कण्ठयति–ते । कण्ठति–ते ।

कड=मदे । १ । अक० । सेट् । प० । कडति । ५. चकाड । 'गदति' (३७) वत् ।

कड=बन्धने मदे च । ६ । बन्धने । सक० । सेट् । प० । कुटादिः । कडति । 'गदति' (३७) वत् । कडन् । कडन्ती-कडती ।

कडि (कण्ड्)=मदे । १ । अक० । सेट् । प० । कण्डति । 'क्रन्दति' (५०) वत् । अयमात्मनेपद्यपि । कण्डते । ५. चकण्डे । 'वन्दति' (९) वत् ।

कडि (कण्ड्)=मदे । १ । अक० । सेट् । आ० । कण्डते । 'वन्दति' (९) वत् । कण्डनी उलूखलम् । कण्डुः ।

कडि(कण्ड्)=भेदने । १० । सक० । सेट् । उ० । कण्डयति-ते । ९. अचकण्डत्-त ।

कड्ड=कार्कश्ये । कार्कश्यं कठोरत्वम् । १ । अक० । सेट् । प० । कड्डति । ५. चकड्ड । 'नर्दति' (४१) वत् ।

कण=शब्दे । गतौ च । १ । अक० । सकर्मकश्च । सेट् । प० । कणति । ५. चकाण । चकणतुः । 'गदति' (३७) वत् । कणः । कण्ठः ।

कण=सङ्कोचने । १० । सक० । सेट् । आ० । आकुस्मीयः । काणयते । ९. अचीकणत ।

कण=निमीलने । १० । सक० । सेट् । उ० । काण्यादिः । काणयति-ते । ९. अचीकणत्-अचकाणत्-त ।

कण्डूञ्=गात्रविघर्षणे । ११ । कण्डूयति । कण्डूः ।

× **कत्थ**=श्लाघायाम् [२६] १ । सक० । सेट् । आ० । कत्थते ।

कत्र=शैथिल्ये । १० । अक० । सेट् । उ० । कत्रयति-ते । ९. अचकत्रत्-त ।

× **कथ**=वाक्यप्रबन्धे [६४१] १० । सक० । सेट् । उ० । कथयति-ते ।

कदि (कन्द्)=आह्वाने रोदने च । १ । आह्वाने सक० । रोदने त्वकर्म० ।

कन्दति । ५. चकन्द । 'क्रन्दति' (९०) वत् । कन्द-यति पुत्रं देवदत्तेन । ९. अचकन्दत् । कन्दलः । कन्दली । कन्दरः ।

कदि (कन्द्)=वैक्लव्ये । वैकल्य इत्येके । वैक्लव्यं भयादिना अभिभवः । वैकल्यं न्यूनत्वम् । १ । अक० । सेट् । आ० । घटादिः । कन्दते । 'वन्दति' (९) वत् ।

× **कनी** (कन्)=दीप्तिकान्तिगतिषु । कान्तिः कामना [१३८] १ । अक० । सेट् । प० । इदित् । कनति । चङ्कन्यते । कन्नः । कन्नवान् ।

× **कपि** (कम्प्)=चलने [११८] १ । अक० । सेट् । आ० । कम्पते । अनुकम्पते दयते । कपोलः ।

कबृ (कब्)=वर्णे । १ । अक० । सेट् । आ० । ऋदित् । कबते । 'कलति' (१४९) वत् । णौ चङि—अचकाबत् । कबरः । कबरी । कर्बुरः । कपोतः ।

× **कमु** (कम्)=कान्तौ । कान्तिरिच्छा [१३४] १ । सक० । सेट् । आ० । अयं न मित् । कामयते । कमठः ।

कर्ज=व्यथने ।१। सक० । सेट् । प० । कर्जति । 'नर्दति' (४१) वत् ।

कर्ज=भेदने । १० । सक० । सेट् । उ० । कर्णयति–ते । आकर्ण-यति शृणोति । कर्ण्यते अनेनेति कर्णः श्रोत्रम् ।

× **कर्द**=कुत्सिते (कौक्षे) शब्दे [४४] १ । अक० । सेट् । प० । कर्दति । कर्दमः ।

कर्ब=गतौ । १ । सक० । सेट् । प० । कर्बति । 'नर्दति' (४१) वत् ।

कर्व=दर्पे । १ । अक० । सेट् । प० । कर्वति । 'नर्दति' (४१) वत् ।

कल=शब्दसंख्यानयोः (कल=कामधेनौ । कामधेनुवत् सर्वार्थप्रदः इत्येके)

[१४९] १ । अर्थानुगुण्येन सकर्मकोऽकर्मकश्च । सेट् । आ० । कलते ।

कल=क्षेपे । १० । सक० । सेट् । उ० । कालयति–ते । कालयति द्रावयतीत्यर्थः । ९. अचीकलत्–त । सनि—चिकालयिषति ते ।

कल=गतौ संख्याने च । १० । सक० । सेट् । उ० । अदन्तः । कलयति–ते । ९. अचकलत्–त । सङ्कलयति-ते मेलयतीत्यर्थः ।

कल्ल=अव्यक्ते शब्दे । १ । अक० । सेट् । आ० । कल्लते । 'कत्थति' वत् । कल्लोलः ।

कश=गतिशासनयोः । २ । सक० । सेट् । आ० । कष्टे । कशाते । कशते । म० । कक्षे । कड्ढ्वे । 'वस' (३३८) वत् । कशा । कश्यः ।

कशि (कंश्)=गतिशासनयोः । २ । सक० । सेट् । आ० । कंष्टे । कंशाते । कंशते । 'कसि' धातुवत् ।

कस=गतौ । १ । सक० । सेट् । प० । कसति । 'गदति' (३७) वत् । कस्वरः ।

कसि (कंस्)=गतिशासनयोः । २ । सक० । सेट् । आ० । कंस्ते । कंसाते । कंसते । म० कंस्से । कंसाथे । कन्ध्वे । २. कंस्ताम् । कंसाताम् । ३. अकंस्त । ४. कंसीत । ५. चकंसे । चकंसाथे । चकन्ध्वे । ६. कंसिता । ७. कंसिष्यते । ८. कंसिषीष्ट । ९. अकंसिष्ट । म० ढ्वम्–ध्वम् ।

×काक्षि (काङ्क्ष्)=काङ्क्षायाम् [१९६] १ । सक० । सेट् । प० । काङ्क्षति ।

काचि (काञ्च्)=दीप्तिबन्धनयोः । १ । दीप्तावकर्म० । बन्धने । सक० । सेट् । आ० । इदित् । काञ्चते । काञ्चनम् । काञ्चिः । काञ्ची ।

काल=कालोपदेशे। १०। सक०। सेट्। उ०। अदन्तः। कालयति—ते। कालः समयः।

×काशृ (काश्)=दीप्तौ [१८७] १। अक०। सेट्। आ०। काशते।

×काशृ (काश्)=दीप्तौ [४१७] ४। अक०। सेट्। आ०। काश्यते।

कासृ (कास्)=शब्दकुत्सायाम्। १। अक०। सेट्। आ०। कासते। 'काशति' (१८७) वत्। कासते वृद्धः। कासो रोगविशेषः।

कि=ज्ञाने। ३। छान्दसः। सक०। अनिट्। प०। चिकेति। चिकीतः। चिक्यति।

किट=त्रासे गतौ च। १। अक०। सेट्। प०। केटति। ५. चिकेट। चिकिटतुः। 'चेटति' (१०६) वत्।

× कित=निवासे रोगापनयने च। [३१२] १। सक०। सेट्। प०। चिकित्सति। निकेत्यतेऽस्मिन्निति निकेतनं गृहम्। निवासार्थे केतति। केततः। केतन्ति। इत्यादि रूपाणीति वोबदेवः।

किल=श्वैत्ये। क्रीडायां च। ६। अक०। सेट्। प०। किलति। चिकेल। चिकिलतुः। 'चेटति' (१०६) वत्। केलिः क्रीडा।

कीट=वर्णे। १०। अक०। सेट्। उ०। कीटयति—ते। ९. अचीकिटत्। कीटः कृमिः।

कील=बन्धने। १। सक०। सेट्। प०। कीलति। 'मीलति' (१५४) वत्। कीलकः। शङ्कुः।

× कु=शब्दे [३४९] २। अक०। अनि०। प०। उकारान्तः। कौति। कूपः। कविः।

कुक=आदाने। १। सक०। सेट्। आ०। कोकते। ५. चुकुके। ९. अकोकिष्ट। द्युतादिकार्यं विना 'रोचति' (२१४) वत्।

कुङ् (कु)=शब्दे । १ । अक० । अनि० । आ० । उकारान्तः । कवते । २. कवताम् । ३. अकवत । ४. कवेत । ५. चुकुवे । ६. कोता । ७. कोष्यते । ८. कोषीष्ट । ९. अकोष्ट । १०. अकोष्यत । **भावे**—कूयते । **णिचि**—कावयति । **सनि** चुकूषते । **यङि**—चोकूयते । **यङ्लुकि**—चोकवीति–चोकोति । **कृत्सु**—कोतव्यम् । कवनीयम् । कोतुम् । कवनम् । कुत्वा । प्रकुत्य ।

कुङ् (कु)=शब्दे । ६ । अक० । अनि । आ० । उकारन्तः । कुटादिः । कुवते । २. कुवताम् । ३. अकुवत । ४. कुवेत । ५. चुकुवे । ६. कुता । ७. कुष्यते । ८. कुषीष्ट । म० ध्वम् । ९. अकुत । **कृत्सु**—कुवितव्यम् । कुवनीयम् । **कूयम्** । आवश्यके काव्यम् । कुतः । कुवानः । कुतुम् । कुवनम् । कुत्वा । विकुत्य ।

कुच=सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । १ । सक० । सेट् । प० । कोचति । ५. चुकोच । ६. कोचिता । 'शोचति' (७६) वत् ।

कुच=सङ्कोचने । सङ्कोचो ह्रस्वीभवनम् । ६ । अक० । सेट् । प० । कुटादिः । प्रायेणायं सम्पूर्वः प्रयुज्यते । संकुचति । २. संकुचतु । ३. समकुचत् । ४. संकुचेत् । ५. सञ्चुकोच । सञ्चुकुचतुः । म० सञ्चुकुचिथ । ६. संकुचिता । ८. संकुच्यात् । समकुचीत् । सङ्कुचन् । सङ्कोचः ।

× **कुञ्च**=कौटिल्याल्पीभावयोः [७७] १ । अक० । सेट् । प० । कुञ्चति । कुजु (कुज्)=स्तेयकरणे । १ । सक० । सेट् । प० । उदित् । कोजति । 'शोचति' (७६) वत् । कोजित्वा–कुक्त्वा । कुक्तः ।

कुट=कौटिल्ये । ६ । अक० । सेट् । प० । कुटादिः । कुटति । ५. चुकोट । चुकुटतुः । 'कुच सङ्कोचने' वत् । कुट्मलम् । कोटरः । कुटिलम् । कुटी । ह्रस्वा कुटी कुटीरः ।

कुट=छेदने । १० । सक० । सेट् । आ० । आकुस्मीयः । कोटयते । ९. अचूकुटत ।

× **कुट्ट**=छेदनभर्त्सनयोः । पूरण इत्येके [६०७] १० । सक० । सेट् । उ० । कुट्टयति–ते ।

कुट्ट=प्रतापने । १० । सक० । सेट् । आ० । आकुस्मीयः । कुट्टयते । ९. अचुकुट्टत ।

कुठि (कुण्ठ्)=वेष्टने । १० । सक० । सेट् । उ० । इदित् । कुण्ठयति–ते । अचुकुण्ठत्–त । इदित्पाठात् पाक्षिको णिच् तस्मात् कुण्ठति–ते इत्यपि । अवकुण्ठनम् ।

× **कुठि** (कुण्ठ्)=प्रतिघाते [११३] १ । सक० । सेट् । प० ।

कुड=बाल्ये । ६ । अकर्म० । सेट् । प० । कुटादिः । कुडति । चुकोड । 'कुच=सङ्कोचने' इति वत् । कुड्मलः ।

कुडि (कुण्ड्)=दाहे । १ । सकर्म० । सेट् । आ० । इदित् । कुण्डते । 'स्कुन्दति' (८) वत् ।

कुडि (कुण्ड्)=वैकल्ये । १. अक० । सेट् । प० । इदित् । कुण्डति । 'कुन्थति'[३१]वत् ।

कुडि (कुण्ड्)=रक्षणे । १०. । सकर्म० । सेट् । उ० । कुण्डयति–ते । ९. अचुकुण्डत्–त ।

कुण=शब्दोपकरणयोः । ६. । अक० । सेट् । प० । कुणति । चुकोण । 'कुच=संकोचने' वत् । कोणो वीणादिवादनम् ।

कुण=आमन्त्रणे । १० । सक० । सेट् । उ० । अदन्तः । कुणयति–ते । अचुकुणत्–त ।

× **कुत्स**=अवक्षेपणे (निन्दने) [६२४] १० । सक० । सेट् । आ० । आकुस्मीयः । कुत्सयते ।

कुथ=पूतीभावे । पूतीभावो दौर्गन्ध्यम् । ४ । अक० । सेट् । प० । कुथ्यति । चुकोथ । 'कुप्यति' (४६५) वत् ।

कुथ=संश्लेषणे । संक्लेशन इत्येके । ९ । सक० । सेट् । प० । कुथ्नाति । चुकोथ । 'मुष्णाति' (५९७) वत् । कुथः ।

× कुथि (कुन्थ्)=हिंसासंक्लेशनयोः [३२] १ । सक० । सेट् । प० । कुन्थति ।

कुद्रि (कुन्द्र्)=अनृतभाषणे । १० । सक० । सेट् । उ० । इदित् । कुन्द्रयति–ते । कुन्द्रति–ते । अचुकुन्द्रत्–त ।

कुन्थ=संश्लेषणे । ९ । 'कुथ' धातुवत् । ८. कुथ्यात् ।

× कुप=क्रोधे [४६९] ४ । अक० । सेट् । प० । पुषादिः । कुप्यति ।

कुप=भाषायाम् । १० । सक० । सेट् । उ० । कोपयति–ते । अचूकुपत्–त ।

कुबि (कुम्ब्)=आच्छादने । १ । सक० । सेट् । प० । कुम्बति । 'कुन्थति' (३२) वत् । कुबेरः ।

कुबि (कुम्ब्)=आच्छादने । १० । सक० । सेट् । उ० । इदित् । कुम्बयति–ते । कुम्बति–ते । अचुकुम्बत्–त ।

कुमार=क्रीडायाम् । १० । अक० । सेट् । उ० । अदन्तः । कुमारयति–ते । ९. अचुकुमारत् । कुमारः ।

कुर=शब्दे । ६ । अक० । सेट् । प० । कुरति । 'कुच सङ्कोचने' वत् । ८. कूर्यात् ।

× कुर्द=क्रीडायाम् [१८] १ । अक० । सेट् । आ० । कूर्दते ।

कुल=संत्याने बन्धुषु च । संत्यानं सङ्घीकरणम् । १ । अक० । सेट् ।

प० । कोलति । 'शोचति' (७६) वत् । कुलम् । कुलीनः । कुल्यः । कौलीनः । कौलेयकः=श्वा ।

कुशि (कुंश्)=भाषायाम् । १० । अक० । सेट् । उ० । इदित् कुंशयति–ते । कुंशति-ते । ९. अचुकुंशत्-त । कुशिः

कुष=निष्कोषे । तच्च अन्तर्गतस्य बहिर्निस्सारणम् । ९. सक० । सेट् । पर० । कुष्णाति 'मुष्णाति' (५९७) वत् । कुषित्वा । कोष्ठं कुक्षिः ।

कुषुभ=क्षेपे । ११ । कुषुभ्यति ।

× कुस=श्लेषणे [४९८] ४ । सक० । सेट् । प० । पुषादिः । कुस्यति ।

कुसि (कुंस्)=भाषायाम् । १० । अक० । सेट् । उ० । कुंसयति–ते । भ्रुवा कुंसयति=भ्रूकुंसः ।

कुस्म=कुत्सितस्मये । १० । अक० । सेट् । आ० । कुस्मयते ।

कुह=विस्मापने । १० । सक० । सेट् । आ० । आगर्वीयः । अदन्तः । कुहयते । ९. अचुकुहत । कुहको वञ्चकः ।

कूङ् (कू)=शब्दे । ६ । अक० । सेट् । आ० । ऊकारान्तः । ङित् । कुवते । २. कुवताम् । ३. अकुवत । ४. कुवीत । ५. चुकुवे । ६. कुविता । ८. कुविषीष्ट । ९. अकुविष्ट । १०. अकुविष्यत । कूतः । कुवितुम् । कूतम् । कूत्वा । शेषं 'कुङ्' वत् ।

× कूज=अव्यक्ते शब्दे [८५] १ । अक० । सेट् । प० । कूजति ।

कूट=आप्रदाने । १० । सक० । सेट् । आ० । आकुस्मीयः । कूटयते । अचुकूटत । कूटः=छद्म, राशिर्वा ।

कूट=परितापे । १० । अक० । सेट् । उ० । अदन्तः । कूटयति-ते । अचुकूटत्-त ।

कूण=सङ्कोचने । १० । सक० । सेट् । उ० । अदन्तः । कूणयति-ते । कूणिः=कुञ्चितकरः ।

कूल=आवरणे । १ । सक० । सेट् । प० । कूलति । 'कूजति' (८५) वत् । कूलं=तीरम् ।

× कॄञ् (कॄ)=हिंसायाम् [४७६] ५ । सक० । अनि० । उ० । ऋकारान्तः । ञित् । कृणोति-कृणुते ।

× (डु) कृञ् (कृ)=करणे । [५६५] ८ । सक० । अनि० । उ० । करोति-कुरुते ।

कृड=घनत्वे । घनत्वं सान्द्रता । वसने इत्येके । ६ । अक० । सेट् । प० । कुटादिः । कृडति । २. कृडतु । ५. चकर्ड । ६. कर्डिता । ८. कृड्यात् । ९. अकृडीत् ।

× कृती (कृत्)=छेदने [५३७] ६ । सक० । सेट् । प० । ईदित् । मुचादिः । कृन्तति ।

कृती (कृत्)=वेष्टने । ७ । सक० । सेट् । पर० । ईदित् । कृणत्ति । कृन्तः । कृन्तन्ति । 'वृणक्ति' (५५८) वत् ।

कृप=दौर्बल्ये । १० । अक० । सेट् । उ० । अदन्तः । क्लपयति-ते । ९. अचक्लपत्-त ।

× कृपू (कृप्)=सामर्थ्ये [२२४] १ । अक० । वेट् । ऊदित् । आ० । कल्पते ।

कृवि (कृण्व्)=हिंसाकरणयोश्च । चाद्गतौ । १ । सक० । सेट् । प० । इदित् । कृणोति । 'विनोति' (१७०) वत् ।

× कृश=तनूकरणे [४६१] ४ । सक० । सेट् । प० । पुषादिः । कृश्यति ।

×**कृष**=विलेखने। विलेखनमाकर्षणम्। [३०९] १। द्विकर्मकः। अनि०। प०। ग्राममजां कर्षति। कर्षति।

× **कृष**=विलेखने [४९४] ६। सक०। अनि०। उ०। कृषति-ते।

×**कॄ**=विक्षेपे [११८] ६। ॠकारान्तः। सक०। सेट्। प०। किरति।

×**कॄ**=हिंसायाम् [५८३] ९। ॠकारान्तः। सक०। सेट्। प०। कृणाति।

×**कॄञ्**=हिंसायाम् [५७९] ९। ॠकारान्तः। सक०। सेट्। प्वादिः। उ०। कृणाति-कृणीते।

×**कॄत**=संशब्दने [६२०] १०। सक०। सेट्। उ०। कीर्तयति-ते। कीर्तिः। कीर्तितः। कीर्तनम्।

**केत**=निमन्त्रणे श्रवणे च। १०। सक०। सेट्। उ०। अदन्तः। केतयति-ते। अचिकेतत्-त।

**केपृ** (केप्)=कम्पने गतौ च। १। अक०। सेट्। आ०। ऋदित्। केपते। ५. चिकेपे। 'देवति' (१५०) वत्।

**केला**=विलासे। ११। केलायति। केलिः।

**केलृ** (केल्)=चलने। १। अक०। सेट्। प०। ऋदित्। केलति। चिकेल। 'खेलति' (१९९) वत्। केलिः। केली। केला।

**केवृ** (केव्)=सेवने। १। सक०। सेट्। आ०। केवते। ५. चिकेवे। 'वेष्टति' (९४) वत्।

×**कै**=शब्दे [२६९] १। अक०। अनि०। प०। ऐकारान्तः। कायति। किम्। कः कौ के। काकः।

**क्नथ**=हिंसायाम्। १। सक०। सेट्। प०। क्नथति। 'गदति' (३७) वत्।

क्रसु (क्रस्)=ह्वरणदीप्त्योः । ४ । ह्वरणं कौटिल्यम् । अक० । सेट् । प० । उदित् । क्रस्यति । 'यस्यति' (४५७) वत् ।

क्रञ् (क्रू)=शब्दे । ९ । अक० । सेट् । ञित् । उ० । क्रूनाति । क्रूनीते । ५. चुक्राव चुक्रुवे । ७. क्रविष्यति–ते । ९. अक्रावीत्–अक्रविष्ट ।

क्रूयी (क्रूय्)=शब्दे उन्दने च । १ । शब्दे अक० । उन्दने सक० । सेट् । आ० । ईदित् । क्रूयते । ५. चुक्रूये । ६. क्रूयिता । ८. क्रूयिषीष्ट । ९. अक्रूयिष्ट । क्रोपयति ।

क्मर=ह्वूर्च्छने । ह्वूर्च्छनं कौटिल्यम् । १ । अक० । सेट् । प० । क्मरति । 'कणति' (१३५) वत् ।

क्रथ=हिंसायाम् । १ । सक० । सेट् । प० । घटादिः । क्रथति । 'कणति' (१३५) वत् । मित्त्वेपि वृद्धिर्भवति । क्राथयति चोरस्य इति । मित्त्वफलं तु अक्राथि–अक्रथि इत्यादौ चिण्णमुलोर्दीर्घविकल्पः ।

क्रद=आह्वाने रोदने च । १ । सक० । सेट् । प० । घटादिः । क्रदति । क्रदयति ।

× **क्रदि** (क्रन्द्)=आह्वाने रोदने च [१०] १ । आह्वाने सक० । रोदने त्वकर्म० । सेट् । प० । क्रन्दति ।

क्रदि (क्रन्द्)=वैक्लब्ये । वैकल्ये च । १ । अक० । सेट् । आ० । घटादिः । षित् । क्रन्दते । ५. चक्रन्दे । ६. क्रन्दिष्यते । ९. अक्रन्दिष्ट । 'वन्दति' (९) वत ।

× **आङः क्रन्द**=सातत्ये [६२८] १० । अक० । सेट् । उ० । आक्रन्दयति-ते ।

क्रप=कृपायाम् । १ । सक० । सेट् । आ० । घटादिः । षित । क्रपते । चक्रपे । क्रपयते । कृपणः । कृपाणः । कृपा । कर्पूरम । 'कलति' (१४९) वत् ।

×क्रमु (क्रम्)=पादविक्षेपे [१४१] १। सक०। सेट्। प०। क्राम्यति–क्रामति।

×(डु) क्रीञ् (क्री)=द्रव्यविनिमये [९६६] ९। सक०। अनि०। उ०। क्रीणाति–क्रीणीते।

×क्रीडृ (क्रीड्)=विहारे [१९४] १। अक०। सेट्। प०। क्रीडति।

कुञ्च=कौटिल्याल्पीभावयोः। १। अक०। सेट्। प०। कुञ्चति। 'कुञ्चति' (२७) वत्।

कुड=निमज्जने। ६। अक०। सेट्। प०। कुटादिः। कुडति। चुक्रोड। 'त्रुटति' (११०) वत्। क्रोडा।

×क्रुध=कोपे [४९८] ४। अक०। अनि०। प०। पुत्राय क्रुध्यति। शत्रुमभिक्रुध्यति।

×क्रुश=आह्वाने रोदने च [२४८] १। आद्ये सक०। रोदने त्वकर्म०। अनि०। क्रोशति।

क्लथ=हिंसायाम्। १। सक०। सेट्। प०। घटादिः। क्लथति। 'क्वणति' (१३९) वत्।

क्लदि=(क्लन्द्)=आह्वाने रोदने च। १। आह्वाने सक०। रोदने त्वक०। सेट्। प०। इदित्। क्लन्दति। 'क्रन्दति' (५०) वत्।

क्लप=व्यक्तायां वाचि। १०। सक०। सेट्। उ०। क्लापयति-ते।

×क्लमु (क्लम्)=ग्लानौ [४९४] ४। अक०। सेट्। प०। क्लाम्यति-क्लामति।

×क्लिदि (क्लिन्द्)=परिदेवने [१३] १। सक०। सेट्। आ०। क्लिन्दते।

×क्लिदि (क्लिन्द्)=परिदेवने [५१] १। सक०। सेट्। प०। क्लिन्दति।

× **क्लिन्दू** (क्लिन्द् )=आर्द्रीभावे [४६८] ४ । अक० वेट् ० । पुषादिः । क्लिद्यति ।

× **क्लिश**=उपतापे [४१६] ४ । अक० । सेट् । आ० । क्लिश्यते ।

× **क्लिशू** (क्लिश् )=विबाधने [५९४] ९ । सक० । वेट् । प० । क्लिश्नाति ।

× **क्लीबृ** (क्लीब् )=अधाष्टर्ये [११९] १ । अक० । सेट् । आ० । क्लीबते ।

क्लुङ्=गतौ । १ । सक० । अनि० । आ० । क्लवते । चुक्लुवे ।

क्लेश=अव्यक्तायां वाचि । बाधन इति केचित् । १ । सक० । सेट् । आ० । क्लेशते । चिक्लेशे । 'वेष्टति' (९४) वत् ।

× **क्वण**=शब्दे [११५] १ । अक० । सेट् । प० । क्वणति ।

× **क्वथे** (क्वथ् )=निष्पाके [२४०] १ । अक० । सेट् । प० । क्वथति ।

क्षजि (क्षञ्ज् )=गतिदानयोः । १ । सक० । सेट् । आ० । घटादिः । षित् । इदित् । क्षञ्जते । ५. चक्षञ्जे । ७. क्षञ्जिता । ९. अक्षञ्जिष्ट । **सनि**—चिक्षञ्जिषते । क्षञ्जितुम् । क्षञ्जित्वा ।

क्षणु (क्षण् )=हिंसायाम् । ८ । सक० । सेट् । उ० । तनोत्यादिः । उदित् । क्षणोति–क्षणुते । **उ०** क्षण्वः–क्षणुवः । क्षण्वहे–क्षणुवहे । ५. चक्षाण–चक्षणे । ९. अक्षणीत्–अक्षत–अक्षणिष्ट । **म०** अक्षथाः–अक्षणिष्ठाः । 'सनोति' (९६१) वत् । क्षत्वा–क्षणित्वा । क्षतः । क्षतम् ।

क्षप=प्रेरणे । १० । सक० । सेट् । उ० । अदन्तः । क्षपयति–ते । ९. अचक्षपत्–त । प्रायश्चित्तं पापं क्षपयति । क्षपा=रात्रिः ।

क्षपि (क्षम्प् )=क्षान्त्याम् । १० । सक० । सेट् । उ० । क्षम्पयति–ते । ९. अचक्षम्पत्–त । क्षम्पति–ते इत्यपि ।

× **क्षमू** (क्षम् )=सहने [४५३] ४ । सक० । वेट् । प० । क्षाम्यति । **शमामष्टानां दीर्घः श्यनि** ।

×क्षमूष् (क्षम्)=सहने [१२३] १। सक०। वेट्। आ०। क्षमते

क्षर=सञ्चलने। स्रवणे च। १। अक०। सेट्। प०। क्षरति। ५. चक्षार। 'कणति' (१३५) वत्। क्षर=नश्वरः।

×क्षल=शौचकर्मणि [६१६] १०। सक०। सेट्। उ०। क्षालयति-ते।

×क्षि=क्षये [९६] १। अक०। अन्तर्भावितण्यर्थस्तु सक०। अनि०। प०। क्षयति।

क्षि=हिंसायाम्। ५। सक०। अनि०। प०। इदन्तः। छान्दसः। क्षिणोति।

×क्षि=निवासगत्योः [५१६] ६। अक०। अनि०। प०। इकारान्तः। क्षियति।

×क्षिणु (क्षिण्)=हिंसायाम् [५६२] ८। सक०। सेट्। उ०। क्षिणोति-क्षिणुते।

×क्षिप=प्रेरणे [३९९] ४। सक०। अनि०। प०। क्षिप्यति। क्षिप्रम्। क्षेपीयस्। क्षेपिष्ठम्।

×क्षिप=प्रेरणे [४९३] ६। सक०। अनि०। उ०। क्षिपति-ते।

क्षीज=अव्यक्ते शब्दे। १। अक०। सेट्। प०। क्षीजति। 'क्रीडति' (११४) वत्।

×क्षीबृ (क्षीब्)=मदे [१२०] १। अक०। सेट्। आ०। क्षीबते।

क्षीवु (क्षीव्)=निरसने। १। सक०। सेट्। प०। उदित्। क्षीवति। ५. चिक्षीव। 'क्रीडति' (११४) वत्।

क्षीष् (क्षी)=हिंसायाम्। ९। सक०। अनि०। प०। प्वादिः। षित्। क्षिणाति। ५. चिक्षाय। चिक्षियतुः। ६. क्षेता। ८. क्षीयात्। ९. अक्षैषीत्। प्वादित्वमस्य नास्तीति मते क्षीणातीत्यादि। षित्वादङ् क्षियः।

=शब्दे । २ । अक० । सेट् । प० । क्ष्णौति । क्ष्णुतः । क्ष्णुवन्ति । ५. चुक्षाव । चुक्षुवतुः । म० चुक्षविथ । उ० चुक्षाव–चुक्षव । ६. क्षोता । क्षुरः ।

×**क्षुदिर्** (क्षुद्)=सम्पेषणे [५४४] ७ । सक० । अनि० । उ० । क्षुणत्ति–क्षुन्ते ।

×**क्षुध**=बुभुक्षायाम् [४३९] ४ । अक० । अनि० । प० । क्षुध्यति ।

×**क्षुभ**=सञ्चलने [२१७] १ । अक० । सेट् । आ० । क्षोभते ।

×**क्षुभ**=सञ्चलने [४६७] ४ । अक० । सेट् । प० । पुषादिः । क्षुभ्यति ।

क्षुभ=सञ्चलने । ९ । अक० । सेट् । प० । क्षुभ्नादिः । क्षुभ्नाति । **२.** क्षुभ्नातु । **३.** अक्षुभ्नात् । **४.** क्षुभ्नीयात् । **५.** चुक्षोभ । **६.** क्षोभिता । ८. क्षुभ्यात् । ९. अक्षोभीत् । क्षुभ्नादित्वान्न णत्वम् । 'मुष्णाति' (९९७) वत् ।

क्षुर=विलेखने । ६ । सक० । सेट् । प० । क्षुरति । ५. चुक्षोर । 'कुच सङ्कोचने' वत् । ८. क्षूर्यात् । क्षुरम् ।

क्षेवु=निरसने । १ । सक० । सेट् । प० । क्षेवति । चिक्षेव । 'नर्दति' (४१) वत् ।

क्षै=क्षये । १ । अक० । अनि० । प० । ऐकारान्तः । क्षायति । ५. चक्षौ । 'गायति' (२७०) वत् । क्षामः ।

**क्षोट**=क्षेपे । १० । सक० । सेट् । उ० । अदन्तः । क्षोटयति–ते । ९. अचुक्षोटत्–त ।

×**क्ष्णु**=तेजने [३४४] २ । सक० । सेट् । प० । क्ष्णौति ।

क्ष्मायी (क्ष्माय्)=विधूनने । १ । सक० । सेट् । आ० । ईदित् । क्ष्मा-

यते। ५. चक्ष्माये। ६. क्ष्मायिता। ९. अक्ष्मायिष्ट। क्ष्मातः।
**णिचि**—क्ष्मापयति। 'गाधति' (४) वत्।

क्ष्मील=निमेषणे। १। अक०। सेट्। प०। क्ष्मीलति। ५. चिक्ष्मील। ९. अचिक्ष्मिलत्। 'क्रीडति' (११४) वत्।

(ञि) क्ष्विदा (क्ष्विद्)=स्नेहनमोचनयोः। १। सक०। सेट्। आ०। ञित्। आदिच्च। द्युतादिः। क्ष्वेदते। ५. चिक्ष्विदे। ७. क्ष्वेदिष्यते। ८. क्ष्वेदिषीष्ट। ९. अक्ष्वेदिष्ट। द्युतादित्वाल्लुङि परस्मैपदमपि। अक्ष्विदत्। क्ष्विण्णः।

(ञि) क्ष्विदा (क्ष्विद्)=स्नेहनमोचनयोः। ४। सक०। सेट्। प०। पुषादिः। आदित्। क्ष्विद्यति। २. क्ष्विद्यतु। ३. अक्ष्विद्यत्। ४. क्ष्विद्येत्। ५. चिक्ष्वेद। ६. क्ष्वेदिता। ८. क्ष्विद्यात्। ९. अक्ष्विदत्। क्ष्वेदितव्यम्। क्ष्विण्णः।

क्ष्वेल (क्ष्वेल्)=चलने। १। अक०। सेट्। प०। क्ष्वेला।

## ख

खच=भूतप्रादुर्भावे। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः। ९। अक०। सेट्। प०। खच्ञाति। खच्ञीतः। खच्ञन्ति। २. खच्ञातु। म० खचान। ५. चखाच। ६. खचिता। ९. अखाचीत्-अखचीत्। खचित्वा। खचितः।

खज=मन्थे। १। सक०। सेट्। प०। खजति। ५. चखाज। 'गदति' (३७) वत्।

×**खजि** (खञ्ज्)=गतिवैकल्ये [९०] १। अक०। सेट्। प०। खञ्जति। खञ्जः।

खट=काङ्क्षायाम्। १। सक०। सेट्। प०। खटति। ५. चखाट। 'गदति' (३७) वत्। खट्वा=मञ्चः।

खट्ट=संवरणे । १० । सक० । सेट् । उ० । खट्टयति-ते । ९. अच-खट्टत्-त ।

खड=भेदने । १० । सक० । सेट् । उ० । खडयति-ते । ९. अची-खडत्-त । खड्गः ।

खडि (खण्ड्)=भेदने । १० । सक० । सेट् । उ० । इदित् । खण्ड-यति-ते । ९. अचखण्डत्-त । खण्डः=शकलम् ।

खडि (खण्ड्)=मन्थे । १ । सक० । सेट् । आ० । इदित् । खण्डते । ५. चखण्डे । 'वन्दति' (९) वत् ।

खद=स्थैर्ये हिंसायां भक्षणे च । १ । स्थैर्येऽकर्म० । अन्यत्र सकर्म० । प० । खदति । ५. चखाद । 'गदति' (३७) वत् । खदिरः ।

× **खनु** (खन्)=अवदारणे [२५५] १ । सक० । सेट् । उ० । खन-ति-ते । खेयम् ।

खर्ज=व्यथने पूजने च । १ । सक० । सेट् । प० । खर्जति । ५. चखर्ज । 'नर्दति' (४१) वत् । खर्जूः=पामा ।

खर्द=दन्दशूके । दंशनहिंसनादिरूपायां दन्दशूकक्रियायामित्यर्थः । १ । सक० । सेट् । प० । खर्दति । ५. चखर्द । 'नर्दति' (४१) वत् ।

खर्ब=गतौ । १ । सक० । सेट् । प० । खर्बति । ५. चखर्ब । 'नर्दति' (४१) वत् ।

खर्व=दर्पे । १ । अक० । सेट् । प० । खर्वति । 'नर्दति' (४१) वत् ।

खल=सञ्चये । १ । सक० । सेट् । प० । खलति । ५. चखाल । 'गदति' (३७) वत् । खलं धान्यसञ्चयस्थानम् ।

खव=भूतप्रादुर्भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । ९ । अक० । सेट् । प० । खौनाति । २. खौनातु । ३. अखौनात् । ४. खौनीयात् ।

५. चखाव । चखवतुः । ६. खविता । ८. खव्यात् । ९. अखावीत्–अखवीत् ।

खष=हिंसायाम् । १ । सक० । सेट् । प० । खषति । 'गदति' (३७) वत् ।

× खादृ (खाद्)=भक्षणे [३६] १ । सक० । सेट् । प० । खादति ।

खिट=त्रासे । १ । अक० । सेट् । प० । खेटति । चिखेट । चिखिटतुः । 'चेटति' (१०६) वत् । खेटो=मृगया ।

× खिद्=दैन्ये [४२२] ४ । अक० । अनिट् । आ० । खिद्यते ।

× खिद्=परिघाते [५३८] ६ । सक० । अनिट् । प० । मुचादिः । खिन्दति ।

× खिद्=दैन्ये [५४७] ७ । अक० । अनिट् । आ० । खिन्ते ।

खुङ् (खु)=शब्दे । १ । सक० । अनिट् । आ० । ङित् । उकारान्तः । खवते । ५. चुखुवे । भ्वादि 'कुङ् शब्दे वत् ।

खुजु (खुज्)=स्तेयकरणे । १ । सक० । सेट् । प० । खोजति । ५. चुखोज । 'शोचति' (७६) वत् ।

खुड=संवरणे । ६ । सक० । सेट् । प० । कुटादिः । खुडति । ५. चुखोड । तौदादिक 'कुच' धातुवत् ।

खुडि (खुण्ड्)=खण्डने । १० । सक० । सेट् । उ० । खुण्डयति–ते । ९. अचुखुण्डत्–त ।

खुर=छेदने । ६ । सक० । सेट् । प० । खुरति । ८. खूर्यात् । 'कुच सङ्कोचने' वत् । खुरम् ।

खुर्द=क्रीडायाम् । १ । अक० । सेट् । आ० । खूर्दते । 'कूर्दति' (१८) वत् ।

खेट=भक्षणे । १० । सक० । सेट् । उ० । अदन्तः । खेटयति–ते । ९. अचिखेटत् ।

खेला=विलासे । ११ । खेलायति । खेला ।

×**खेलृ** (खेल्)=चलने [१५९] १ । अक० । सेट् । प० । खेलति ।

खेवृ (खेव्)=सेवने । १ । सक० । सेट् । आ० । ऋदित् । खेवते । 'देवति' वत् ।

खै=खदने । खदनं स्थिरत्वं हिंसा च । १ । सक० । अनि० । प० । ऐकारान्तः । खायति । ५. चखौ । 'गायति' (२७०) वत् ।

खोट=भक्षणे । १० । सक० । सेट् । उ० । खोटयति–ते । अचुखोटत्–त ।

खोर्ऋ (खोर्)=गतिप्रतिघाते । १ । अक० । सेट् । प० । ऋदित् । खोरति । ५. चुखोर । 'खेलति' (१५९) वत् ।

खोलृ (खोल्)=गतिप्रतिघाते । १ । अक० । सेट् । प० । खोलति । चुखोल । पूर्वधातुवत् ।

×**ख्या**=प्रकथने [३६९] २ । सक० । अनि० । प० । ख्याति ।

## ग

गज=शब्दे मदे च । १ । अक० । सेट् । प० । गजति । जगाज । 'गदति' (३७) वत् ।

गज=शब्दे । १० । अक० । सेट् । उ० । गाजयति–ते । ९. अजीगजत्–त ।

गजि (गञ्ज्)=शब्दे । १ । अक० । सेट् । प० । गञ्जति । ५. जगञ्ज । 'क्रन्दति' (५०) वत् ।

गड=सेचने । १ । सक० । सेट् । प० । घटादिः । गडति । 'गदति' (३७) वत् ।

गडि (गण्ड्)=वदनैकदेशे । १ । अक० । सेट् । प० । गण्डति । जगण्ड । 'क्रन्दति' (५०) वत् ।

×**गण**=संख्याने [६४२] १० । सक० । सेट् । उ० । गणयति–ते ।

×**गद**=व्यक्तायां वाचि [३७] १ । सक० । सेट् । प० । गदति ।

गदी=देवशब्दे । १० । अक० । सेट् । उ० । गदयति-ते । ९. अजगदत्-त ।

गद्गद=वाक्स्खलने । ११ । गद्गद्यति ।

गन्ध=अर्दने । १० । सक० । सेट् । आ० । आकुस्मीयः । गन्धयते । ९. अजगन्धत ।

×**गम्लृ** (गम्)=गतौ [३०१] १ । सक० । अनि० । प० । गच्छति । गात्रम् । गामुकः । जगत् ।

×**गर्ज**=शब्दे [८७] १ । अक० । सेट् । प० । गर्जति ।

गर्ज=शब्दे । १० । अक० । सेट् । उ० । गर्जयति-ते । अजगर्जत्-त ।

×**गर्द**=शब्दे [४२] १ । अक० । सेट् । प० । गर्दति ।

गर्ब=गतौ । १ । सक० । सेट् । प० । गर्बति । ५. जगर्ब । 'नर्दति' (४१) वत् ।

गर्व=माने । १ । अक० । सेट् । प० । गर्वति । ५. जगर्व । 'नर्दति' (४१) वत् । गर्वः ।

×**गर्व**=माने [६५४] १० । अक० । सेट् । आ० । गर्वयते ।

×**गर्ह**=कुत्सायाम् [१८६] १ । सक० । सेट् । आ० गर्हते ।

गर्ह=निन्दने । १० । सक० । सेट् । उ० । आधृषीयः । गर्हयति-ते । ९. अजगर्हत्-त । गर्हति इत्याद्यपि ।

गल=अदने स्रवणे च । १ । सक० । सेट् । प० । गलति । ५. जगाल 'गदति' (३७) वत् ।

गल=स्रवणे । १० । अक० । सेट् । आ० । आकुस्मीयः । गालयते । ९ अजीगलत ।

गल्भ=धार्ष्ट्ये । १ । अक० । सेट् । आ० । गल्भते । ५. जगल्भे । 'करथति' (२६) वत् । प्रगल्भः ।

गल्ह=कुत्सायाम् । १ । सक० । सेट् । आ० । गल्हते । ५. जगल्हे । 'कत्थति' (२६) वत् ।

× **गवेष**=मार्गणे [६४८] १० । सक० । सेट् । उ० । गवेषयति–ते ।

गा=स्तुतौ । ३ । सक० । अनि० । प० । आकारान्तः । छान्दसः । जिगाति । जिगीतः । जिगति ।

× **गाङ्** (गा)=गतौ [२८८] १ । सक० । अनि० । आ० । आकारान्तः । गाते ।

× **गाधृ** (गाध्) =प्रतिष्ठालिप्सयोर्ग्रन्थे च [४] १ । सक० । सेट् । आ० । गाधते ।

× **गाहू** (गाह्)=विलोडने [१८९] १ । सक० । वेट् । आ० । गाहते ।

× **गु**=पुरीषोत्सर्गे [५१४] ६ । अक० । अनि । प० । उकारान्तः । गुवति ।

गुङ् (गु) =अव्यक्ते शब्दे । १ । अक० । अनि० । आ० । उकारान्तः । ङित् । गवते । ५. जुगुवे । भ्वादि 'कुङ्' धातुवत् ।

गुज=शब्दे । ६ । अक० । सेट् । प० । कुटादिः । गुजति । ५. जुगोज । 'कुच' धातु वत् ।

× **गुजि** (गुञ्ज्)=अव्यक्ते शब्दे [८०] १ । अक० । सेट् । प० । गुञ्जति । गुञ्जा ।

गुठि (गुण्ठ्)=वेष्टने । १० । सक० । सेट् । उ० । गुण्ठयति–ते । अजुगुण्ठत्–त ।

गुड=रक्षायाम् । ६ । सक० । सेट् । पर० । कुटादिः । गुडति । ५. जुगोड । तुदादि 'कुच' धातुवत् । गुडः=इक्षुविकारः ।

गुडि )गुण्ड्)=वेष्टने । रक्षण इत्येके । १० । सक० । सेट् । उ० । गुण्डयति–ते ।

गुण=आमन्त्रणे । १० । सक० । सेट् । उ० । गुणयति-ते ।

गुद=क्रीडायाम् । चलने च । १ । अक० । सेट् । आ० । गोदते । ५. जुगुदे । 'मोदति' (१४) वत् । गुदम् ।

गुध=परिवेष्टने । ४ । सक० । सेट् । प० । गुध्यति । ५. जुगोध । 'कुप्यति' (४६५) वत् । गुधित्वा । गोधा । गोधिका ।

गुध=रोषे । ९ । अक० । सेट् । प० । गुध्नाति । (९९७) वत् ।

× **गुप**=गोपने [२९३] १ । सक० । सेट् । आ० । जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । पापाज्जुगुप्सते ।

गुप=व्याकुलत्वे । ४ । अक० । सेट् । प० । पुषादिः । गुप्यति । 'कुप्यति' (४६५) वत् ।

गुप=भाषायाम् । १० । सक० । सेट् । उ० । गोपयति-ते । ९. अजूगुपत्-त ।

× **गुपू** (गुप्)=रक्षणे [१२३] १ । सक० । सेट् । प० । गोपायति ।

गुफ=ग्रन्थे । ६ । सक० । सेट् । प० । गुफति । तुदादि 'कुच' धातुवत् ।

× **गुम्फ**=ग्रन्थे [५०३] ६ । सक० । सेट् । प० । गुम्फति । २. गुम्फतु । ३. अगुम्फत् । ४. गुम्फेत् । ५. जुगुम्फ । ६. गुम्फिता । ८. गुफ्यात् । ९. अगुम्फीत् । गुफित्वा-गुम्फित्वा ।

गुरी (गुर्)=उद्यमने । ६ । सक० । सेट् । आ० । कुटादिः । गुरते । ५. जुगुरे । ६. गुरिता । ७. गुरिष्यते । ८. गुरिषीष्ट । ९. अगुरिष्ट । गूर्यते । गूर्णः ।

गुर्द=क्रीडायाम् । १ । अक० । सेट् । आ० । गूर्दते । ५. जुगूर्दे । 'कूर्दति' (१८) वत् । णिचि—गूर्दयति-ते । ९. अजुगूर्दत्-त ।

गुर्द=पूर्वनिकेतने । १० । अक० । सेट् । उ० । गूर्दयति-ते । ९. अजुगूर्दत् ।

गुर्वी=उद्यमने। १। सक०। सेट्। प०। ईदित्। गूर्वति। २. गूर्वतु। ३. अगूर्वत्। ४. गूर्वेत्। ५. जुगूर्व। ६. गूर्विता। ८. गूर्व्यात्। ९. अगूर्वीत्। गूर्णः। गूर्वितुम्। गूर्वित्वा।

× **गुहू** (गुह्)=संवरणे [२५८] १। सक०। वेट्। आ०। ऊदित्।

गुर=उद्यमने। १०। सक०। सेट्। आ०। आकुस्मीयः। **गूरयते**। ९. अजुगूरत।

गूरी (गूर्)=हिंसागत्योः। ४। सक०। सेट्। आ०। ईदित्। गूर्यते। ५. जुगूरे। ६. गूरिता। ८. गूरिषीष्ट। ढ्वम्—ध्वम्। ९. अगूरिष्ट। 'पूर्यति' (४१४) वत्। गूर्णः। गूरित्वा। गूरितुम्।

गॄ=सेचने। १। सक०। अनि०। प०। ऋकारान्तः। गरति। जगार। जग्रतुः। गर्ता। 'सरति' (२८०) वत्। गर्तोऽवटः।

गॄ=विज्ञाने। १०। सक०। सेट्। आ०। ऋकारान्तः। आकुस्मीयः। गारयते।

गृज=शब्दे। १। अक०। सेट्। प०। गर्जति। 'वर्षति' (२०२) वत्। गर्जित्वा। सिंहगर्जनम्।

गृजि(गृञ्ज्)=शब्दे। १। अक०। सेट्। प०। इदित्। 'बृंहति' (२०९) वत्। गृञ्जति। गृञ्जनम्=मूलविशेषः।

× **गृधु**(गृध्)=अभिकाङ्क्षायाम् [४७०] ४। सक०। सेट्। प०। पुषादिः। गृध्यति। गर्धः स्पृहा। गर्धनो लुब्धः।

गृह=ग्रहणे। १०। सक०। सेट्। आ०। अदन्तः। आगर्वीयः। गृहयते। ९. अजगृहत।

× **गृहू**(गृह्)=गर्हणे। गर्हणं कुत्सनम्। [१९०] १। सक०। वेट्। आ०। ऊदित्। गर्हते। गर्हणम्। गर्हा।

×गॄ=निगरणे [५१९] ६ । सक० । सेट् । प० । गिरति–गिलति । गर्भः ।

×गॄ=शब्दे [५८४] ९ । अक० । सेट् । प० । प्वादिः । गृणाति । गीः गिरौ गिरः ।

गेपृ (गेप्)=कम्पने । १ । सक० । सेट् । आ० । ऋदित् । गेपते । ५. जिगेपे । 'देवति' (१५०) वत् । णौ चङि अजिगेपत्–त ।

गेवृ (गेव्)=सेवने । १ । सक० । सेट् । आ० । ऋदित् । गेवते । 'देवति' (१५०) वत् । चङि अजिगेवत्–त ।

गेषृ (गेष्)=अन्विच्छायाम् । अन्विच्छा अन्वेषणम् । १ । सक० । सेट् । आ० । ऋदित् । गेषते । ५. जिगेषे । 'देवति' (१५०) वत् । चङि अजिगेषत्–त ।

×गै=शब्दे [२७०] १ । अक० । अनि० । प० । ऐकारान्तः । गायति । गाथा । गेष्णुर्गाथा । गादाभ्यामिष्णुच् ।

गोम=उपलेपने । १० । सक० । सेट् । उ० । अदन्तः । गोमयति–ते । ९. अजुगोमत्–त । अजुगोमद्गोमयेन गृहं चेटी ।

गोष्ट=सङ्घाते । १ । अक० । सेट् । आ० । गोष्टते । ५. जुगोष्टे । 'वेष्टति' (९४) वत् । गोष्ठी=सभा ।

ग्रथि (ग्रन्थ्)=कौटिल्ये । १ । अक० । सेट् । आ० । इदित् । ग्रन्थते । ५. जग्रन्थे । 'श्रन्थति' (२९) वत् ।

×ग्रन्थ=सन्दर्भे [९९२] ९ । सक० । सेट् । प० । ग्रथ्नाति । ग्रन्थिः ।

ग्रन्थ=सन्धर्भे बन्धने च । १० । सक० । सेट् । उ० । आधृषीयः । ग्रन्थयति–ते । ९. अजग्रन्थत्–त । ग्रन्थः=शास्त्रम् ।

ग्रस=ग्रहणे । १० । सक० । सेट् । उ० । ग्रसयति–ते । ९. अजिग्रसत्–त ।

×ग्रसु (ग्रस्)=अदने [१८३] १ । सक० । सेट् । आ० । उदित् । ग्रसते ।

×ग्रह=उपादाने [५९८] ९ । सक० । सेट् । उ० । गृह्णाति–गृह्णीते ।

ग्राम=आमन्त्रणे । १० । सक० । सेट् । उ० । ग्रामयति–ते । ९. अजग्रामत्–त ।

ग्रुचु (ग्रुच्)=स्तेयकरणे । १ । सक० । सेट् । प० । उदित् । ग्रोचति । ५. जुग्रोच । ९. अग्रुचत्–अग्रोचीत् । **जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** । 'शोचति' (७६) वत् । ग्रुक्तः । ग्रुचित्वा । ग्रोचित्वा-ग्रुक्त्वा ।

ग्लसु (ग्लस्)=अदने । १ । सक० । सेट् । आ० । उदित् । ग्लसते । 'ग्रसति' (१८३) वत् ।

ग्लुचु (ग्लुच्)=स्तेयकरणे । १ । सक० । सेट् । प० । उदित् । ग्लोचति । 'ग्रुचु' धातुवत् ।

ग्लुञ्चु (ग्लुञ्च्)=गतौ । १ । सक० । सेट् । प० । उदित् । ग्लुञ्चति । ५. जुग्लुञ्च । ९. अग्लुचत्–अग्लुञ्चीत् । 'कुञ्चति' (७७) वत् । **जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** । ग्लुक्तः । ग्लुञ्चित्वा ग्लुक्त्वा ।

ग्लेपृ=दैन्ये । कम्पने गतौ च । १ । सक० । सेट् । आ० । ऋदित् । ग्लेपते । 'देवति' (१५०) वत् । चङि अजिग्लेपत्–त ।

ग्लेवृ=सेवने दैन्ये कम्पने गतौ च । १ । सक० । सेट् । आ० । ऋदित् । ग्लेवते । 'देवति' (१५०) वत् ।

ग्लेषृ(ग्लेष्)=अन्विच्छायाम् । अन्विच्छा अन्वेषणम् । सक० । सेट् । आ० । ऋदित् । ग्लेषते । ५. जिग्लेषे । 'देवति' (१५०) वत् ।

× ग्लै=हर्षक्षये [२६५]। हर्षक्षयो धातुक्षयः। १। अक०। अनि०। प०। ऐकारान्तः। ग्लायति। ग्लास्नुः। ग्लौः।

## घ

घघ=हसने। १। अक०। सेट्। प०। घघति। ५. जघाघ। 'गदति' (३७) वत्। घग्घ इति केचित्। घग्घति।

× घट=चेष्टायाम्। [२२५] १। अक०। सेट्। आ०। घटते।

घट=भाषायाम्। संघाते च। १०। सक०। सेट्। उ०। घाटयति-ते। ९. अजीघटत्-त। घटा करिणां समूह।

घटि (घण्ट्)=भाषायाम्। १०। सक०। सेट्। उ०। घण्टयति-ते। ९. अजघण्टत्-त। घण्टा।

× घट्ट=चलने [९६] १। अक०। सेट्। आ०। घट्टते। घट्टः=तीर्थावतरस्थानम्। घट्टना।

घट्ट=चलने। १०। अक०। सेट्। उ०। घट्टयति-ते। ९. अजघट्टत्-त।

घष=कान्तिकरणे। १। सक०। सेट्। आ०। घषते। 'कलति' (१४९) वत्।

× घस्लृ (घस्)=अदने [२०४] १। सक०। अनि०। प०। ऌदित्। घसति। घासः तृणम्।

घिणि (घिण्ण्)=ग्रहणे। १। सक०। सेट्। आ०। इदित्। घिण्णते। जिघिण्णे। 'क्लिन्दति' (१३) वत्।

घुङ् (घु)=शब्दे। १। अक०। अनि०। आ०। उकारान्तः। घवते। ५. जुघुवे। भ्वादि 'कुङ्' धातुवत्।

× घुट=परिवर्तने। [२१५] १। सक०। सेट्। आ०। द्युतादिः। घोटते।

घुट=प्रतिघाते। ६। सक०। सेट्। प० कुटादिः। घुटति। तौदादिक-'कुच' धातु'वत्।

घुण=भ्रमणे । १ । अक० । सेट् । आ० । घोणते । ९. जुघुणे । द्युतादिकार्यं विना 'रोचति' (२१४) वत् । घोणा नासिका ।

घुण=भ्रमणे । ६ । अ० । सेट् । प० । घुणति । ५. जुघोण । ६. घोणिता । 'कुच सङ्कोचने'वत् ।

घुणि (घुण्ण्)=ग्रहणे १ । सक० । सेट् । आ० । घुण्णते । 'क्लिन्दति' (१३) वत् ।

घुर=भीमार्थशब्दयोः । ६ । अक० । सेट् । प० । घुरति । 'कुच सङ्कोचने'वत् । घोरम् ।

घुष=कान्तिकरणे । १ । सक० । सेट् । आ । घोषते । ९. जुघुषे । 'रोचति' (२१४) वत् ।

घुषि (घुंष्)=कान्तिकरणे । १ । सक० । सेट् । आ० । घुंषते । ५. जुघुंषे । ९. अघोषिष्ट ।

× **घुषिर्**=अविशब्दने [१९१] १ । सक० । सेट् । इरित् । घोषति । घोषः आभीरपल्ली ।

घुषिर् =विशब्दने । १० । सक० । सेट् । उ० । इरित् घोषयति-ते । ९. अजूघुषत्-त । णिजभावपक्षे घोषति । ९. अघुषत्-अघोषीत् ।

घूरी (घूर्)=हिंसावयोहान्योः । ४ । सक० । सेट् । आ० । ईदित् । घूर्यते । ५. जुघूरे । ९. अघूरिष्ट । 'गूरी' धातुवत् । घूर्णः ।

× **घूर्ण**=भ्रमणे [१३०] १ । आ० । घूर्णते । घूर्णितः । घूर्णितुम् । घूर्णित्वा । घूर्णनम् । घूर्णमानः ।

× **घूर्ण**=भ्रमणे [६०६] ६ । प० । घूर्णति ।

× घृ=सेचने [२८२] १ । सक० । अनिट् । ऋकारान्तः । प० । घरति । घृणा=दया । बाहुळकान्नक् ।

घृ=क्षरणदीप्त्योः । ३ । क्षरणे सक० । दीप्तावक० । अनिट् । प० ।

ऋकारान्तः । छान्दसोऽयम् । जिघर्ति । घृणिः=सूर्यः । घृतमाज्यम् । घर्मः=स्वेदजलम् ।

×घृ=प्रस्रवणे [६१९] १० । सक० । सेट् । उ० । ऋकारान्तः । घारयति-ते ।

घृणि (घृण्ण्)=ग्रहणे । १ । सक० । सेट् । आ० । इदित् । घृण्णते । ५. जिघृण्णे । 'क्लिन्दति' (१३) वत् ।

घृणु (घृण् )=दीप्तौ । ८ । अक० । सेट् । उ० । उदित् । तनोत्यादिः । उप्रत्ययनिमित्तो लघूपधगुणः संज्ञापूर्वको विधिरनित्य इति न भवतीति मैत्रेयादयः । भवत्येवेत्यन्ये । अतो रूपद्वयम् । घृणोति–घर्णोति । घृणुते–घर्णुते । ५. जघर्ण–जघृणे । ९. अघर्णीत्–अघर्त–अघर्णिष्ट । घृतः । घर्णित्वा-घृत्वा । घृणा दया ।

×घृष=सङ्घर्षे [२०३] १ । सक० । सेट् । प० । घर्षति ।

×घ्रा=गन्धोपादाने [२७३] १ । सक० । अनि० । प० । आकारान्तः । जिघ्रति ।

## ङ

ङुङ् (ङु)=अव्यक्ते शब्दे । १ । अक० । अनि । आ० । उकारान्तः । ङवते । भ्वादि 'कुङ्' धातुवत् ।

×चक=तृप्तौ [१३०] १ । अक० । सेट् । प० । चकति ।

×चक=तृप्तौ प्रतिघाते च । [५७] १ । सक० । सेट् । आ० । चकते । चकितो भीतः ।

×चकासृ (चकास्)=दीप्तौ [३७८] २ । अक० । सेट् । प० । ऋदित् । अनेकाच् । चकास्ति ।

चक्क=व्यथने । १० । सक० । सेट् । उ० । चक्कयति–ते । ९. अचचक्कत्–त ।

**चक्षिङ्** (चक्ष्)=व्यक्तायां वाचि [३३२] २ । सक० । सेट् । आ० । ङित् । नायमिदित् । इकारोऽनुदात्तो युजर्थः ।

**चञ्चु** (चञ्च्)=गतौ । १ । सक० । सेट् । प० । उदित् । चञ्चति । ५. चचञ्च । 'गर्जति (८७) वत् । चञ्चित्वा–चक्त्वा । चक्तः । चञ्चुः पक्षिणामोष्ठम् ।

**चट**=भेदने । १० । सक० । सेट् । उ० । चाटयति–ते । ९. अचीचटत्–त । उच्चाटयति–ते । उच्चिचाटयिषति–ते । चटकः । चटुः ।

**चटे**=वर्षावरणयोः । १ । सक० । सेट् । प० । एदित् । चटति । चचाट । चेटतुः । ९. अचटीत् । 'चरति' (१६२) वत् । चटुः । चटुलः । चाटुः । चटकः । चटका ।

× **चडि** (चण्ड्)=कोपे [१००] १ । आ० । चण्डते ।

**चण**=दाने गतौ च । १ । सक० । सेट् । प० चणति । चचाण । 'चरति' (१६२) वत् ।

**चते**=याचने । १ । सक० । सेट् । उ० । एदित् । चतति–ते । ९. अचतीत्–अचतिष्ट । परस्मैपदे 'चरति' (१६२) वत् । आत्मनेपदे 'कलति' (१४९) वत् । चातकः पक्षी । ण्वुल् । चत्वारः चतुरः चतुर्भिः । चतुरः समर्थः । चातुर्यम् ।

× **चदि** (चन्द्)=आह्लादने दीप्तौ च । [४९] १ । प० । चन्दति ।

**चदे**=याचने । १ । सक० । सेट् । उ० । एदित् । चदति–ते । ९. अचदीत्–अचदिष्ट । 'चते' धातुवत् ।

**चन**=हिंसायाम् । १ । सक० । सेट् । प० । चनति । 'चरति' (१६२) वत् । घटादिः । चनयति–ते ।

**चन**=श्रद्धोपतापयोः । १० । सक० । सेट् । उ० । आधृषीयः । चानयति–ते । चनति–ते ।

चप=सान्त्वने । १ । सक० । सेट् । प० । चपति । 'चरति'(१९२) वत् । ज्ञपादित्वान्मित् । तस्माण्णौ चपयति-ते ।

चपि (चम्प्) =गत्याम् । १० । सक० । सेट् । उ० । चम्पयति-ते ।

× **चमु** (चम्)=भक्षणे [१४०] १ । प० । उदित् । चमति ।

**चमु**=भक्षणे । ५ । सक० । सेट् । प० । छान्दसोऽयम् । चम्नोति ।

चय=गतौ । १ । सक० । सेट् । आ० । चयते । ५. चेये । 'दधति' (७) वत् । चयः समूहः ।

× **चर**=गतिभक्षणयोः [१९२] १ । सेट् । प० । चरति । चरमः । चरुः हव्यान्नम् ।

**चर**=संशये [६३०] १० । उ० । चारयति-ते । उच्चारयति ।

चरण=गतौ । ११ । चरण्यति । चरणः ।

× **चर्च**=अध्ययने [६२७] १० । उ० । चर्चयति-ते ।

चर्च=परिभाषणभर्त्सनयोः । १ । सक० । सेट् । प० । चर्चति । 'नर्दति' (४१) वत् ।

चर्ब=गतौ । १ । सक० । सेट् । प० । चर्बति । ५. चचर्ब । 'नर्दति' (४१) वत् ।

× **चर्व**=अदने [१६८] १ । सक० । सेट् । प० । चर्वति । ताम्बूल-चर्वणम् ।

× **चल**=कम्पने [२३७] १ । अक० । सेट् । प० । घटादिः । चलति । चलाचलिः ।

चल=विलसने । ६ । सक० सेट् । प० । चलति । पूर्ववत् । स्वरे विशेषः ।

चल=भृतौ । १० । सक० । सेट् । उ० । चालयति--ते । ९. अचीचलत्-त ।

चष=भक्षणे । १ । सक० । सेट् । उ० । चषति । ५. चचाष ।

९. अचाषीत्-अचषीत् । 'रदति' (३८) वत् । आत्मनेपदे— 'दधति' (८) वत् । चषते । ५. चेषे । ९. अचषिष्ट । चषकः पात्रम् । चाषः पक्षिविशेषः ।

चह=परिकल्कने । १ । परिकल्कनं दम्भः शाठ्यं च । अक० । सेट् । प० । चहति । ५. चचाह । चेहतु. । 'रदति' (३८) वत् ।

चह=परिकल्कने । १० । सक० । सेट् । उ० । अदन्तः । ज्ञपादित्वान्मित् । चहयति-ते । ९. अचीचहत्-त ।

चायृ (चाय्)=पूजानिशामनयोः । १ । सक० । सेट् । उ० । ऋदित् । चायति । ५. चचाय । 'खादति' (३९) वत् । आत्मनेपदे चायते । ५. चचाये । 'गाधति' (४) वत् । तं पार्वतीयाः प्रमदाश्च-चायिरे । इति माघः । चायः की । चेकीयते ।

चिक्क=व्यथने । १० । सक० । सेट् । उ० । चिक्कयति-ते ।

× चिञ् (चि)=चयने [४७४] ५ । उ० । चिनोति-चिनुते । उच्चैः । नीचैः । चयः । निश्चयः । निकायः ।

चिञ् (चि)=चयने । १० । सक० । सेट् । उ० । ज्ञपादित्वान्मित्त्वम् । चि-स्फुरोर्णौ । इति आत्वपक्षे पुक् । चपयति-ते । णिजभावमक्षे चयति-ते ।

× चिट=परप्रेष्ये [१०६] १ । अक० । सेट् । प० । चेटति ।

चित=सञ्चलने । १० । सक० । सेट् । आ० । आकुस्मीयः । चेतयते ।

× चिति (चिन्त्)=स्मृत्याम् [९००] १० । चिन्तयति-ते ।

× चिती (चित्)=संज्ञाने [२८] १ । अक० । सेट् । प० । ईदित् । चेतति । चित्तम्=मनः । चेतः, असुन् ।

चित्र=चित्रीकरणे । १० । सक० । सेट् । उ० । अदन्तः । चित्रयति-ते । चित्रम् ।

चिरि=हिंसायाम् । ९ । सक० । सेट् । प० । इकारान्तः । छान्दसः । चिरिणोति ।

चिरु=निवसने । ६ । सक० । सेट् । प० । चिरुति । ५. चिचेरु । 'किल' धातुवत् । चिल्यते इति चेलं वस्त्रम् ।

चिल्ल=शैथिल्ये भावकरणे च । १ । अक० । सेट् । प० । चिल्लति । ५. चिचिल्ल । 'कुञ्चति' (७७) वत् ।

चीक=मर्षणे । १० । सक० । सेट् । उ० । आधृषीयः । चीकयति–ते । चीकति–ते ।

चीभृ (चीभ्)=कत्थने । १ । सक० । सेट् । आ० । चीभते । 'क्लीबति' (११९) वत् ।

चीव=भाषायाम् । १० । सक० । सेट् । उ० । चीवयति–ते ।

चीवृ (चीव्)=आदानसंवरणयोः । १ । सक० । सेट् । उ० । ऋदित् । चीवति-ते । ५. चिचीव–वे । 'जीवति' (१६५) वत् । चीवरं कन्था ।

चुक्क=व्यथने । १० । सक० । सेट् । उ० । चुक्कयति–ते ।

चुच्य=अभिषवे । अभिषवः स्नपनं, पीडनं, स्नानं, सुरायाः सन्धानं च । १ । स्नानेऽकर्म० । अन्यत्र सक० । सेट् । प० । चुच्यति । 'कुञ्चति' (७७) वत् ।

चुट=छेदने । ६ । सक० । सेट् । प० । कुटादिः । चुटति । ५. चुचोट । तुदादि 'कुच' धातुवत् ।

चुट=छेदने । १० । सक० । सेट् । उ० । चोटयति–ते ।

चुटि (चुण्ट्)=अल्पीभावे । १ । अक० । सेट् । प० । चुण्टति । 'कुन्थति' (३२) वत् ।

चुटि (चुण्ट्)=छेदने । १० । सक० । सेट् । उ० । चुण्टयति–ते ।

चुट्ट=अल्पीभावे । १० । अक० । सेट् । उ० । चुट्टयति–ते ।

चुड=संवरणे । समुच्छ्राये च । ६ । सक० । सेट् । प० । कुटादिः । चुडति । ५. चुचोड । 'कुच' धातुवत् । चूडा शिखा ।

चुडि (चुण्ड् )=अल्पीभावे । १ । अक० । सेट् । प० । चुण्डति । 'कुन्थति' (३२) वत् ।

चुड्ड्=भावकरणे । भावकरणमभिप्रायसूचनम् । १ । अक० । सेट् । प० । चुड्डति । ५. चुचुड्ड । 'कुञ्चति' (७७) वत् ।

चुतिर् (चुत् )=क्षरणे । १ । सक० । सेट् । प० । इरित् । चोतति । चुचोत । 'च्योतति' (२९) वत् ।

चुद=संचोदने । १० । सक० । सेट् । उ० । चोदयति-ते । ९. अचूचुदत्-त । चोदनम् । चोदना ।

चुप=मन्दायां गतौ । १ । अक० । सेट् । प० । चोपति । ५. चुचोप । 'शोचति' (७६) वत् ।

× चुबि (चुम्ब् )=वक्त्रसंयोगे [१२८] १ । सक० । सेट् । प० । चुम्बति ।
चुबि (चुम्ब् )=हिंसायाम् । १० । सक० । सेट् । उ० । चुम्बयति-ते ।
× चुर=स्तेये । [५९९] १० । सक० । सेट् । उ० । चोरयति-ते ।
चुरण=चौर्ये । ११ । चुरण्यति ।

चुल=समुच्छ्राये । १० । सक० । सेट् । उ० । चोलयति-ते ।

चुल्ल=भावकरणे । 'चुड्ड' धातुं पश्यत । चुल्लिः । चुल्ली ।

चूरी (चूर् )=दाहे । ४ । सक० । सेट् । आ० । ईदित् । चूर्यते । ५. चुचूरे । 'गूरी' धातुवत् । चूर्णः ।

चूर्ण=प्रेरणे सङ्कोचने च । १० । सक० । सेट् । उ० । चूर्णयति-ते । ९. अचुचूर्णत्-त ।

× चूष=पाने [१९८] १ । सक० । सेट् । प० । चूषति ।

चृती (चृत् )=हिंसाग्रन्थनयोः । ६ । सक० । सेट् । प० । चृतति । २. चृततु । ३. अचृतत् । ४. चृतेत् । ५. चचर्त । चचृततु. । ६. चर्तिता । ७. सेऽसिचि कृतचृत-तीड्विकल्पः । चर्त्स्यति-च-

तिंष्यति । ८. चृत्यात् । ९. अचर्तीत् । चृत्तः । चृत्तवान् । 'कृन्तति' (१३७) वत् ।

चृप=सन्दीपने । १० । सक० । सेट् । उ० । आधृषीयः । चर्पयति–ते ।

चेलृ(चेल्)=चलने । १ । अक० । सेट् । प० । चेलति । 'खेलति' (१५९) वत् । चेलं वस्त्रम् ।

× चेष्ट=चेष्टायाम् [९९] १ । अक० । सेट् । आ० । ऋदित् । चेष्टते

च्यु=सहने । १० । सक० । सेट् । उ० । च्यावयति–ते । ९. अचुच्युवत्–त ।

च्युङ् (च्यु)=गतौ । १ । सक० । अनि० । आ० । उकारान्तः । च्यवते । ५. चुच्युवे । भ्वादि 'कुङ्' धातुवत् । च्युतं गलितम् । च्युतिः ।

× च्युतिर् (च्युत्)=आसेचने [२९] । सक० । सेट् । प० । इरित् । च्योतति ।

च्युस=हसने । १० । अक० । सेट् । उ० । च्योसयति–ते । ९. अचुच्युसत्–त ।

## छ

छद=अपवारणे । १० । सक० । सेट् । उ० । आधृषीयः । छादयति–ते । छदति–ते । ९. अचिच्छदत्–त । छन्नः–छादितः । छादयति गगनं मेघः । छदिः=गृहपटलम् । छद्म=कपटम् । छदः=पत्रम् ।

छद=अपवारणे । १० । सक० । सेट् । उ० । अदन्तः । छदयति–ते । ९. अचिच्छदत्–त ।

छदि(छन्द्)=संवरणे। १०। सक०। सेट्। उ० छन्दयति-ते
 ९. अचच्छन्दत्-त।

छदिर्(छद्)=ऊर्जने। ऊर्जनं बलं जीवनं च। १। सक०। सेट्।
 प०। घटादिः। इरित्। छदति। छदयति। छन्दः अभिप्रायः।
 छन्दस् वेदः। अनुष्टुबादिकं च।

छमु(छम्)=अदने। १। सक०। सेट्। प०। छमति। ५.
 चच्छाम। 'चमति' (१४०) वत्।

छर्द=वमने। १। अक०। सेट्। प०। छर्दति। ५. चच्छर्द।
 'नर्दति' (४१) वत्। छर्दिः वमथुः।

छर्द=वमने। १०। अक०। सेट्। उ०। छर्दयति-ते।

छष=हिंसायाम्। १। सक०। सेट्। उ०। छपति-ते। ५. च-
 च्छाष-चच्छषे। 'चष' धातुवत्। अत्रैत्वाभ्यासलोपौ न स्तः।

× छिदिर्(छिद्)=द्वैधीकरणे [५४१] ७। सक०। अनि०। उ०।
 छिनत्ति-छिन्ते। छिद्रं रन्ध्रम्। परिच्छिनत्ति। परिच्छेदः।

छिद्र=कर्णभेदने। १०। सक०। सेट्। उ०। अदन्तः। छिद्रयति-ते।

छुट=संवरणे। ६। सक०। सेट्। प०। कुटादिः। छुटति। ५.
 चुच्छोट। तौदादिक 'कुच' धातुवत्।

छुड=संवरणे। ६। पूर्ववत्।

छुप=स्पर्शे। ६। सक०। अनि०। प०। छुपति। ५. चुच्छोप।
 चुच्छोपिथ। ६. छोप्ता। ८. छुप्यात्। ९. अच्छौप्सीत्। छुप्तः।
 छोप्तुम्। छुप्त्वा।

छुर=छेदने। ६। सक०। सेट्। प०। कुटादिः। छुरति। ५. चुच्छोर।
 'कुच' धातुवत्। छुरिका। आच्छुरितकम् सोत्प्रासो हासः।

(उ)च्छृदिर्-(छृद्)=दीप्तिदेवनयोः। ७। दीप्तावकर्म०। देवने सकर्म०।

सेट् । उ० । छृणत्ति-छृन्तः । छृन्ते । ५. चच्छर्द । चच्छृदतुः । चच्छृदे । ६. छर्दिता । ७. सेऽसिचि-छर्दिष्यति-ते-छर्त्स्यति-ते । ८. छृद्यात्-छर्दिषीष्ट । ९. अच्छृदत्-अच्छर्दीत् । अच्छृत्त । १०. अच्छर्दिष्यत्-अच्छर्त्स्यत्-त । छृत्वा-छर्दित्वा । 'छिनत्ति' (९४१) वत् ।

छृदी(छृद्)=दीपने । १० । सक० । सेट् । उ० । आधृषीयः । छर्दयति-ते । ९. अचीच्छृदत्-त । अचच्छर्दत्-त । णिजभावपक्षे छर्दति । ७. छर्दिष्यति-छर्त्स्यति । निष्ठायामनिडर्थकेनीदिता णिज्वैकल्पिक इति ज्ञायते । छर्दितः । छृण्णः ।

छृप=सन्दीपने । १० । सक० । सेट् । उ० । आधृषीयः । छर्पयति-ते । ९. अचीछृपत्-त-अचच्छर्पत्-त । छर्पति इत्याद्यपि ।

छेद=द्वैधीकरणे । १० । सक० । सेट् । उ० । अदन्तः । छेदयति-ते ।

छो=छेदने । ४ । सक० । अनि० । प० । ओकारान्तः । छ्यति । 'श्यति' (४०९) वत् । छाया । णिचि—छाययति-ते ।

## ज

× जक्ष=भक्षहसनयोः [३७९] २ । भक्षणे सक० । सेट् । प० । रुदादिः । जक्षिति ।

जज=युद्धे । १ । अक० । सेट् । प० । जजति । ५. जजाज । जेजतुः । 'चरति' (१६२) वत् ।

जजि(जञ्ज्)=युद्धे । १ । अक० । सेट् । प० । जञ्जति । ५. जजञ्ज । 'क्रन्दति' (९०) वत् ।

जट=सङ्घाते । १ । सक० । सेट् । प० । जटति । ५. जजाट । जेटतुः । 'चरति' (१६२) वत् । जटा । जटिलः ।

जड=संघाते । १ । 'जट' धातुवत् ।

जन=जनने । ३ । अक० । सेट् । प० । छान्दसः । जजन्ति । जजातः । जज्ञति । २. जजन्तु । ३. अजजन् । अजजताम् । अजज्ञन् । ४. जजायात् । ५. जजान । जज्ञतुः । ६. जनिता । ८. जन्यात् । ९. अजानीत् ।

×**जनी** (जन्)=प्रादुर्भावे [४१२] ४ । अक० । सेट् । आ० । जायते । जनुः । जन्म । जन्तुः । जानुः । जाया । जनिः । जनी । जन्यः । प्रजनिष्णुः ।

×**जप**=व्यक्तायां वाचि । मानसे च [१२९] १ । सक० । सेट् । प० । जपति ।

जभी (जम्भ्)=गात्रविनामे । १ । अक० । सेट् । आ० । ईदित् । **रधिजभोरचि** । जम्भते । ५. जजम्भे । ६. जम्भिता । ८. जम्भिषीष्ट । ९. अजम्भिष्ट । ढ्वम्—ध्वम् । जब्धः । जम्भित्वा । 'जभि' इत्यपि केचित् । **णिचि**—जम्भयति–ते ।

जभि (जम्भ्)=नाशने । १० । सक० । सेट् । उ० । जम्भयति–ते ।

जमु (जम्)=अदने 'चमु' धातुवत् । जेमनम् आहारः ।

जर्ज=परिभाषणहिंसातर्जनेषु । १ । सक० । सेट् । प० । जर्जति । ५. जजर्ज । 'नर्दति' (४१) वत् । जर्जरः ।

जल=घातने । घातनं तैक्ष्ण्यम् । १ । सक० । सेट् । प० । जलति । 'जपति' (१२५) वत् । जलः । जालः । जडः ।

जल=अपवारणे । १० । सक० । सेट् । उ० । जालयति–ते । जालम् ।

×**जल्प**=व्यक्तायां वाचि [१२६] १ । सक० । सेट् । प० । जल्पति 'जपति' (१२५) वत् ।

जष=हिंसायाम् । १ । सक० । सेट् । प० । जषति । 'जपति'(१२९)वत् ।

जसि (जंस्)=रक्षणे । १० । सक० । सेट् । उ० । जंसयति–ते ।

जसु (जस्)=हिंसायाम्। ताडने च। १०। सक०। सेट्। उ०। जासयति–ते। ९. अजीजसत्–त।

जसु(जस्)=मोक्षणे। ४। सक०। सेट्। प०। जस्यति। ५. जजास। जेसतुः। 'क्रसु' धातुवत्। जस्यति वत्सं गोपः।

× **जागृ**=निद्राक्षये [३७१] २। अक०। सेट्। प०। ऋकारान्तः। जागर्ति।

× **जि**=जये [१६४] १। अक०। अनि०। प०। जयति।

जि=अभिभवे। अभिभवो न्यूनीकरणम्। न्यूनीभवनं च। आद्ये सक०। द्वितीयेऽकर्म०। अनि०। प०। जयति। प्राग्वत्।

जिमु(जिम्)=अदने। १। सक०। सेट्। प०। जेमति। ५. जिजेम। 'चेटति' (१०६) वत्। जेमनं आहारः।

जिरि=हिंसायाम्। ५। सक०। सेट्। प०। छान्दसः। इकारान्तः। जिरिणोति।

जिवि(जिन्व्)=प्रीणने। १। सक०। सेट्। प०। १. जिन्वति। २. जिन्वतु। ५. जिजिन्व। ६. जिन्विता। ९. अजिन्वीत्।

जिषु=सेचने। १। सक०। सेट्। प०। उदित्। जेषति। 'चेटति' (१०६) वत्। जेषित्वा–जिष्ट्वा। जिष्टः। जिष्टवान्।

× **जीव**=प्राणने [१६९] १। अक०। सेट्। प०। जीवति।

जुगि(जुङ्ग्)=वर्जने। १। सक०। सेट्। प०। जुङ्गति। ५. जुजुङ्ग। 'कुन्थति' (३२) वत्।

जुट=गतौ। ६। सक०। सेट्। प०। कुटादिः। जुटति। 'कुच' धातुवत्।

जुड=गतौ बन्धने च। ६। पूर्ववत्।

जुड=प्रेरणे। १०। सक०। सेट्। उ०। जोडयति–ते। ९. अजूजुडत्–त।

जुतृ (जुत्)=भासने । १ । अक० । सेट् । आ० । जोतते । ५. जुजुते । 'रोचति' (२१४) वत् ।

जुन=गतौ । ६ । जुटवत् । मरुतो जुनान्ति ।

जुष=परितर्कणे । परितर्कणं ऊहो हिंसा वा । सुखे च । १० । सक० । सेट् । उ० । आधृषीयः । जोषयति-ते । जुषति-ते । जोषं तूष्णीं सुखं वा ।

जुष=हिंसायाम् । १ । सक० । सेट् । प० । जुषति । ५. जुजोष । भ्वादि 'शोचति' (७६) वत् ।

× **जुषी**=प्रीतिसेवनयोः [४९९] ६ । सक० । सेट् । आ० । जुषते । जोषा योषित् ।

जूरी=हिंसाहान्योः । ४ । 'गूरी' धातुवत् ।

× **जृभि** (जृम्भ्)=गात्रविनामे [१२२] १ । अक० । सेट् । आ० । जम्भते

× **जॄ**=वयोहानौ [५८२] ९ । अक० । सेट् । प० । ॠकारान्त । जृणाति ।

जॄ=वयोहानौ । १० । अक० । सेट् । ॠकारान्तः । उ० । आधृषीयः । जारयति-ते , जरति ।

× **जॄष्** (जॄ)=वयोहानौ [४०२] ४ । अक० । सेट् । प० । जीर्यति ।

जेषृ (जेष्)=गतौ । १ । सक० । सेट् । आ० । ऋदित् । जेषते । ५. जिजेषे । 'देवति' (१५०) वत् ।

जेहृ (जेह्)=प्रयत्ने १ । अक० । सेट् । आ० । ऋदित् । जेहते । जिजेहे । 'देवति' (१५०) वत् ।

जै=क्षये । १ । अक० । अनि० । प० । ऐकारान्तः । जायति । ५. जजौ । 'गायति' (२७०) वत् ।

ज्ञप=ज्ञाने ज्ञापने च। १०। सक०। सेट्। उ०। मित्। ज्ञपयति-ते।

×ज्ञा=अवबोधने [५८७] ९। सक०। अनि०। आकारान्तः। प०। जानाति।

ज्ञा=नियोगे। १०। सक०। सेट्। उ०। ज्ञापयति-ते।

×ज्या=वयोहानौ [५८५] ९। अक०। अनि०। प०। ल्वादिः। जिनाति।

ज्युङ् (ज्यु)=गतौ। १। सक०। अनि०। आ०। उकारान्तः। ज्यवते। ५. जुज्युवे। भ्वादि'कुङ्' धातुवत्।

ज्रि=जये अभिभवे च। १। आद्येऽकर्म०। द्वितीये। सक०। अनि०। प०। ज्रयति। 'जयति' (१६४) वत्।

×ज्वर=रोगे [२२९] १। अक०। सेट्। प०। मित्। ज्वरति। ज्वर। जूः जुरौ।

×ज्वल=दीप्तौ [२३६] १। अक०। सेट्। प०। ज्वलति।

## झ

झट=संघाते। १। 'जट'धातुवत्।

झड=संघाते। १। 'जट' धातुवत्।

झमु (झम्)=अदने। १। 'चमु' धातुवत्।

झझ=१। 'जज' धातुवत्। झर्झरः।

झर्झ=६। पूर्ववत्।

झष=१। 'जष' धातुवत्।

झष=आदानसंवरणयोः। १। सक०। सेट्। उ०। झषति-ते। 'चष' धातुवत्।

झॄष् (झॄ)=वयोहानौ। ४। अक०। सेट्। प०। झीर्यति। 'जीर्यति' (४०२) वत्।

## ञ

(ञि) इन्धी । 'इन्धी' धातुं पश्यत ।

(ञि) क्ष्विदा । 'क्ष्विदा' धातुं पश्यत ।

(ञि) तृषा । 'तृषा' धातुं पश्यत ।

(ञि) त्वरा । 'त्वरा' धातुं पश्यत ।

(ञि) धृषा । 'धृषा' धातुं पश्यत ।

(ञि) फला । 'फला' धातुं पश्यत ।

(ञि) भी । 'भी' धातुं पश्यत ।

(ञि) भिदा । 'भिदा' धातुं पश्यत ।

(ञि) ष्वप् । 'ष्वप्' धातुं पश्यत ।

(ञि) ष्विदा । 'ष्विदा' धातुं पश्यत ।

## ट

टकि (टङ्क्)=बन्धने । १० । सक० । सेट् । उ० । टङ्कयति—ते ।

टल=वैक्लब्ये । १ । अक० । सेट् । प० । टलति । टटाल । टट्वलतु. । 'चरति' (१६२) वत् ।

टिकृ (टिक्)=गतौ । १ । सक० । सेट् । आ० । ऋदित् । टेकते । ५. टिटीके । 'ञिक्ष्विदा' धातुवत् । ९. अटेकिष्ट । अटेकिषाताम् । इति आत्मनेपदमेव ।

टीकृ [टीक्)=गतौ । १ । सक० । सेट् । आत्म० । ऋदित् । टीकते । ५. टिटीके । ६. टीकिता । ८. टीकिषीष्ट । ९. अटीकिष्ट । टीक्यते गम्यते ज्ञायते अनया टीका व्याख्यानम् ।

(टुओ) श्वि='श्वि' धातुं पश्यत ।

(टुओ) स्फुर्जा='स्फुर्जा' धातुं पश्यत ।

(टु) क्षु='क्षु' धातुं पश्यत ।

(टु) टु='टु' धातुं पश्यत ।

(टु) नदि='नदि' धातुं पश्यत ।

(टु) मस्जो='मस्जो' धातुं पश्यत ।

(टु) भ्राजृ='भ्राजृ' धातुं पश्यत ।

(टु) भ्राशृ='भ्राशृ' धातुं पश्यत ।

(टु) भ्लाशृ='भ्लाशृ' धातुं पश्यत ।

(टु) याचृ='याचृ' धातुं पश्यत ।

(टु) वम='वम' धातुं पश्यत ।

(टु) वेपृ='वेपृ' धातुं पश्यत ।

टौकृ (टौक्)=गतौ । १ । सक० । सेट् । आ० । ऋदित् । टौकते । ५. टुटौके । ६. टौकिता । ८. टौकिषीष्ट । ९. अटौकिष्ट ।

ट्वल=वैक्लव्ये । १ । अक० । सेट् । प० । ट्वलति । ५. टट्वाल । 'ज्वलति' (२३६) वत् ।

## ड

डप=संघाते । १० । सक० । सेट् । आ० । आकुस्मीयः । डापयते ।

डिप=क्षेपे । ४ । सक० । सेट् । प० । डिप्यति । ५. डिडेप । 'कुस्यति' (४५८) वत् ।

डिप=क्षेपे । ६ । सक० । सेट् । प० । कुटादिः । डिपति । ५. डिडेप । 'मिषति' (५०७) वत् ।

डिप=क्षेपे संघाते च । १० । सक० । सेट् । आ० आकुस्मीयः । डेपयते ।

डिबि (डिम्ब्)=क्षेपे । १० । सक० सेट् । उ० । डिम्बयति–ते ।

डिभि (डिम्भ्)=क्षेपे । १० । सक० । सेट् । उ० । डिम्भयति–ते ।

डिम्भः=अर्भकः ।

×डीङ् (डी)=विहायसा गतौ [२९१] १ । सक० । सेट् । आ० । डयते ।

×डीङ् (डी)=विहायसा गतौ [४०९] ४ । सक० । सेट् । ओदित् । आ० । डीयते ।

(डु) कृञ् =करणे 'कृञ्' धातुं पश्यत ।

(डु) क्रीञ् ='क्रीञ्' धातुं पश्यत ।

(डु) दाञ् ='दाञ्' धातुं पश्यत ।

(डु) धाञ् ='धाञ्' धातुं पश्यत ।

(डु) पचष् ='पचष्' धातुं पश्यत ।

(डु) भृञ् ='भृञ्' धातुं पश्यत ।

(डु) मिञ् ='मिञ्' धातुं पश्यत ।

(डु) लभष्='लभष्' धातुं पश्यत ।

(डु) वप् ='वप्' धातुं पश्यत ।

(डुल)=उत्क्षेपणे । १० । सक० । सेट् । उ० । डोलयति–ते । डोला ।

## ढ

ढौकृ (ढौक्)=गतौ । १ । सक० । सेट् । आ० । ढौकते । ५. डुढौके । तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके । (भट्टिः २ । २३) । ६. ढौकिता ८. ढौकिषीष्ट । ९. अढौकिष्ट ।

## ण

णक्ष=गतौ । सङ्घात इत्येके । १ । सक० । सेट् । प० । नक्षति । ५. ननक्ष । 'नर्दति' (४१) वत् । नक्षत्रम् ।

णख=गतौ । १ । सक० । सेट् । प० । नखति । ५. ननाख । नेखतुः । 'रदति' (३८) वत् ।

णखि (नङ्ख्)=गतौ । १ । सक० । सेट् । प० । नङ्खति । ५. ननङ्ख । ननङ्खतुः । 'क्रन्दति' (९०) वत् ।

× **णट**=नृत्तौ [१०४] १। अक०। सेट्। प०। नटति। नटनम्। नाट्यम्।

× **णद**=अव्यक्ते शब्दे [३९] १। प०। नदति।

**णद**=भाषायाम्। १०। सक०। सेट्। उ०। नादयति–ते।

**णभ**=हिंसायाम्। अभावेपि। १। हिंसायां सक०। सेट्। आ०। द्युतादिः नभते। ५. नेभे। नेभाते। सुग्रीवः प्रवसं नेभे। (भट्टिः १४। ३३)। ९. अनभत्–अनभिष्ट। 'स्वदति' (१६) वत्। नभते हिनस्ति कीटादीन् इति नभः श्रावणमासः।

**णभ**=हिंसायाम्। ४। सक०। सेट्। प०। पुषादिः। नभ्यति। ५. ननाभ। नेभतुः। 'नश्यति' (४४२) वत्।

**णभ**=हिंसायाम्। ९। सक०। सेट्। प०। नभ्नाति। ५. ननाभ। नेभतुः। ९. अनभीत्–अनाभीत्।

× **णम**=प्रह्वत्वे शब्दे च [३००] १। प०। नमति।

**णय**=गतौ। १। सक०। सेट्। आ०। नयते। ५. नेये। नेयाते। 'दधति' (७) वत्।

**णल**=गन्धने। बन्धने च। गन्धनं=सूचनम्। १। सक०। सेट्। प०। नलति। ५. ननाल। नेलतुः। 'जपति' (१२५) वत्। नलः। नड। नालिनम्। नालः। नाली। प्रणाली।

× **णश**=अदर्शने [४४२] ४। पुषादिः। सक०। सेट्। रधादित्वाद्वेट्। प०। नश्यति।

**णस**=कौटिल्ये। १। अक०। सेट्। आ०। नसते। ५. नेसे। 'दधति' (७) वत्।

× **णह**=बन्धने [४१९] ४। अनि०। उ०। नह्यति–ते। प्रणह्यति। नध्री चर्मरज्जुः। नाभिः उपानत्।

× णासृ=शब्दे [१८१] १ । आ० । नासते ।

णिक्ष=चुम्बने । १ । सक० । सेट् । प० । निक्षति । ५. निनिक्ष । 'क्लिन्दति' (९१) वत् ।

णिजि (निञ्ज्)=शुद्धौ । २ । सक० । सेट् । आ० । निङ्क्ते । निञ्जाते । म० निङ्क्षे । निङ्ध्वे । २. निङ्क्ताम् । म० निङ्क्ष्व । ३. अनिङ्क्त । ४. निञ्जीत । निञ्जीयाताम् । ५. निनिञ्जे । ६. निञ्जिता । ८. निञ्जिषीष्ट । ९. अनिञ्जिष्ट । निञ्जानः । निञ्जितम् । निञ्जित्वा ।

× **णिजिर्** (निज्)=शौचपोषणयोः [३९१] ३ । सक० । अनि० । उ० । नेनेक्ति–नेनिक्ते ।

× **णिदि** (निन्द्)=कुत्सायाम् [४७] १ । प० । निन्दति । निन्दा । निद्रा । निन्दितः । निन्दनीयम् । निन्दित्वा । निन्दितुम् ।

णिदृ=कुत्सासन्निकर्षयोः । १ । सक० । सेट् । उ० । नेदति–ते । ५. निनेद । निनिदतुः । निनिदे । निनिदाते । ६. नेदिष्यति–ते । ८. निद्यात् । निद्यास्ताम् । नेदिषीष्ट । नेदिषीयास्ताम् । ९. अनेदीत्–अनेदिष्ट ।

णिल=गहने । गहनं=दुर्बोधः । ६ । सक० । सेट् । प० । निलति । लिखति (५०८) वत् । निलति शास्त्रं कुधीः ।

णिवि (निन्व्)=सेचने सेवने च । १ । सक० । सेट् । प० । निन्वति । ५. निनिन्व । 'जिवि' धातुवत् ।

णिश=समाधौ । समाधिः=शीलम् । १ । अक० । सेट् । प० । निशति । ५. निनेश । निनिशतुः । 'चेटति' (१०६) वत् ।

णिसि (निंस्)=चुम्बने । २ । सक० । सेट् । आ० । निंस्ते निंसाते । निंसते । निंस्से । निंसाथे । निन्ध्वे ॥ २. निंस्ताम् । निंस्व

. ५. निनिंसे । ६. निंसिता । ९. अनिंसिष्ट । निंसित । निंसितुम् । निंसित्वा । प्रनिंस्य—प्रणिंस्य ।

× **णीञ्** (नी)=प्रापणे [२६३] १ । द्विकर्म० । उ० । नयति–ते । ना नरौ नरः ।

णील=वर्णे । १ । सक० । सेट् । प० । नीलति । निनील । प्रणीलति । नीलः । नीली । 'मीलति' (१५४) वत् ।

णीव=स्थौल्ये । १ । अक० । सेट् । प० । नीवति । ५. निनीव । 'जीवति' (१६५) वत् ।

× **णु** (नु)=स्तुतौ [३४३] २ । प० । नौति ।

× **णुद्**=प्रेरणे [४९०] ६ । उ० । नुदति–ते । नौः ।

× **णुद्**=प्रेरणे [५२९] ६ । प० । नुदति ।

× **णू**=स्तवने [५१२] ६ । प० । नुवति ।

णेद=कुत्सासंनिकर्षयोः । १ । सक० । सेट् । उ० । नेदति–ते । ३. अनेदत्–त । ५. निनेद–निनिदे । ७. नेदिष्यति–ते । ८. नेद्यात्–नेदिषीष्ट । ९. अनेदीत्-अनेदिष्ट । **चङि** — अनिनेदत्–त ।

णेषृ=गतौ । १ । सक० । सेट् । आ० । नेषते । ५. निनेषे । वेपति (११६) वत् । **चङि**—अनिनेषत्–त ।

तक=हसने । १ । अक० । सेट् । प० । तकति । ५. तताक । तेकतुः । 'जपति' (१२९) वत् ।

× **तकि** (तङ्क् )=कृच्छ्रजीवने गतौ च । [६२] १ । प० । तङ्कति ।

तक्ष=त्वचने । त्वचनं संवरणं त्वचो ग्रहणं च । १ । अक० । सेट् । प० । तक्षति । ५. ततक्ष । 'नर्दति' (४१) वत् ।

× **तक्षू** (तक्ष् )=तनूकरणे। [१९३] सक०। वेट्। प०। तक्ष्णोति-तक्षति।

तगि (तङ्ग् )=गतौ । १ । सक० । सेट् । प० । तङ्गति । ५. ततङ्ग । 'क्रन्दति' (९०) वत् ।

तञ्चु (तञ्च् )=गतौ । १ । सक० । सेट् । प० । तञ्चति । ५. ततञ्च । 'नर्दति' (४१) वत् । तक्तः । तचित्वा–तक्त्वा । तक्रम् । आतञ्चनम् ।

तञ्चू (तञ्च् )=सङ्कोचने । ७ । सक० । वेट् । प० । तनक्ति । तङ्क्तः । तञ्चन्ति । २. तनक्तु । म० तङ्ग्धि । उ० तनचानि । ३. अतनक् । अतङ्क्ताम् । ४. तञ्च्यात् । तञ्च्याताम् । ५. ततञ्च । म० ततञ्चिथ–ततङ्क्थ । उ० ततञ्चिव–ततञ्च्व । ६. तञ्चिता–तङ्क्ता । ७. तञ्चिष्यति–तङ्क्ष्यति । ८. तञ्च्यात् । तञ्च्यास्ताम् । ९. अतञ्चीत्–अताङ्क्षीत् । तङ्क्यम् । तक्तम् । तञ्चितुम्–तङ्क्तुम् । तञ्चित्वा –तङ्क्त्वा । आतच्य । **कर्मणि**— तच्यते

तञ्जू (तञ्ज् )=सङ्कोचने । ७ । सक० । वेट् । प० । पूर्वधातुवत् । तञ्जन्ति । तनजानि । ततञ्ज । इत्यादि द्रष्टव्यम् ।

तट=उच्छ्राये । १ । अक० । सेट् । प० । तटति । ५. तताट । तेटतुः । 'रदति' (३८) वत् । तटः । तटाकः ।

× **तड**=आघाते [६१०] १० । सक० । सेट् । उ० । ताडयति–ते । ताडनम् । तडागः । तण्डुलम् ।

तड=भाषायाम् । १० । पूर्ववत् ।

× **तडि** (तण्ड् )=ताडने [१०१] १ । सक० । सेट् । आ० । तण्डते ।

× **तत्रि**(तन्त्र्)=कुटुम्बधारणे [६२१] १० । अक० । सेट् । उ० । तन्त्रयति–ते । तन्त्रीः=वीणादेर्गुणः ।

× **तनु** (तन् )=विस्तारे [९६०] ८ । सक० । सेट् । उ० । तनोति-तनुते । तद्=सः । तौ । ते । तितउः । वितानम् ।

तनु (तन् )=श्रद्धोपकरणयोः । १० । सक० । सेट् । उ० । आधृषीयः । तानयति-ते । वितानम् ।

× **तप**=सन्तापे [२०४] १ । सक० । अनिट् । प० । तपति । तपोऽनुतापे च । अन्वतप्त पापेन ।

× **तप**=ऐश्वर्ये [४१९] ४ । अक० । अनिट् । आ० । तप्यते ।

तप=सन्तापे । १० । सक० । सेट् । उ० । आधृषीयः । तापयति-ते । तपति ।

× **तमु** (तम् )=काङ्क्षायाम् [४४९] ४ । अक० । सेट् । प० । ताम्यति ।

तय=गतौ । १ । सक० । सेट् । आ० । तयते । ५. तेये । 'दयति' (७) वत् ।

तर्क=भाषायाम् । वितर्कणे च । १० । सक० । सेट् । उ० । तर्कयति-ते । तर्कः=तर्कविद्या ।

× **तर्ज**=भर्त्सने [८८] १ । सक० । सेट् । प० । तर्जति ।

× **तर्ज**=भर्त्सने [६२३] १० । सक० । सेट् । आ० । आकुस्मीयः । तर्जयति-ते । तर्जति-ते ।

× **तर्द**=हिंसायाम् [४३] १ । सक० । सेट् । प० । तर्दति ।

तल=प्रतिष्ठायाम् । १० । सक० । सेट् । उ० । तालयति-ते । तलम् । भूतलम् ।

तसि (तंस् )=अलंकरणे । १० । सक० । सेट् । उ० । तंसयति-ते । अवतंसः ।

तसु (तस् )=उपक्षये । ४ । अक० । सेट् । प० । तस्यति । ५. ततास । ते सतुः । 'यस्यति' (४९७) वत् ।

× तायृ (ताय्)=सन्तानपालनयोः [१४७] १ । सक० सेट् । आ० । तायते ।

तिक=आस्कन्दे गतौ च । आस्कन्दनं तिरस्कारो वधश्च । ५ । सक० । सेट् । प० । तिक्नोति । ५. तितेक । ६. तेकिता । ९. अतेकीत् ।

तिकृ (तिक्)=गतौ । १ । सक० । सेट् । आ० । तेकते । ५. तितेके । ६. तेकिता । ९. अतेकिष्ट ।

तिग=आस्कन्दे गतौ च । 'तिक' धातुवत् ।

तिघ='तिक' धातुवत् ।

× तिज=निशाने । निशानं=सहनम् । [२९४] १ । सक० । सेट् । प० । नित्यसन्नन्तः । तितिक्षते ।

तिज=निशाने । निशानम्=तीक्ष्णीकरणम् । १० । सक० । सेट् । उ० । तेजयति-ते । तिक्तो रसः । तेजो दीप्तिः ।

× तिपृ (तिप्)=क्षरणे [११९] १ । सक० । अनि० । आ० । तेपते ।

तिम=आर्द्रीभावे । ४ । अक० । सेट् । प० । तिम्यति । 'लुभ्यति' (४६६) वत् । तिमिः । तिमिरम् ।

तिल=गतौ । १ । सक० । सेट् । प० । तेलति । तितेल । 'चेटति' (१०६) वत् ।

तिल=स्नेहने । ६ । अक० । सेट् । प० । तिलति । 'मिलति' (५३१) वत् । तिलाः । तैलम् ।

तीकृ (तीक्)=गतौ । १ । सक० । सेट् । आ० । तीकते । तितेके । 'दीक्षति' (१७६) वत् ।

तीम=आर्द्रीभावे । ४ । 'तिम' धातुवत् । तीम्यति ।

तीर=कर्मसमाप्तौ । १० । सक० । सेट् । उ० । अदन्तः । तीरयति-ते ।

तीव=स्थौल्ये । १ । अक० । सेट् । प० । तीवति । 'जीवति' (१६५) वत् ।

तु=गतिवृद्धिहिंसासु । सौत्रोयमुकारान्तः । २ । हिंसायां सकर्म० । अन्यत्राकर्म० । अनि० । प० । तौति–तवीति । 'कौति' (३४९) वत् ।

तुज=हिंसायाम् । १ । सक० । सेट् । प० । तोजति । तुतोज । 'शोचति' (७६) वत् ।

तुज=हिंसाबलादाननिकेतेषु । १० । सक० । सेट् । उ० । तोजयति–ते ।

तुजि (तुञ्ज्)=पालने हिंसायां च । १ । सक० । सेट् । प० । तुञ्जति । 'कुञ्चति' (७७) वत् । ८. तुज्यात् ।

तुजि (तुञ्ज्)=हिंसादाननिकेतनेषु भाषायां च । १० । सक० । सेट् । उ० । तुञ्जयति–ते ।

तुट=कलहकर्मणि । ६ । अक० । सेट् । प० । कुटादिः । तुटति । 'कुच' धातुवत् । तुटिः ।

तुड=तोडने । तोडनं भेदः । ६ । सक० । सेट् । प० । कुटादिः । तुडति । 'कुच' धातुवत् ।

तुडि (तुण्ड्)=तोडने । तोडनं दारणं हिंसनं च । १ । सक० । सेट् । आ० । तुण्डते । ५. तुतुण्डे । 'स्कुन्दति' (८) वत । तुण्डते खादति खाद्यं द्रव्यमिति तुण्डं मुखम् ।

तुडृ (तुड्)=तोडने । १ । सक० । सेट् । प० । तोडति । तुतोड । 'कुच' धातुवत् ।

तुण=कौटिल्ये । ६ । अक० । सेट् । प० । तुणति । 'कुच' धातुवत् ।

तुत्थ=आवरणे । आवरणमाच्छादनम् । १० । सक० । सेट् । उ० । अदन्तः । तुत्थयति–ते ।

× तुद=व्यथने [४८९] ६ । सक० । अनि० । उ० । तुदति–ते । तुन्दम् उदरम् ।

तुप=हिंसायाम् । १ । सक० । सेट् । प० । तोपति । ५. तुतोप । ६. तोपिता । 'शोचति' (७६) वत् ।

तुप=हिंसायाम् । ६ । स० । सेट् । प० । तुपति । 'कुच' धातुवत् ।

तुफ=हिंसायाम् । ६ । पूर्ववत् ।

तुफ=हिंसायाम् । १ । भ्वादि 'तुप' वत् ।

तुबि (तुम्ब्)=अर्दने । १ । सक० । सेट् । प० । तुम्बति । तुतुम्ब । 'कुन्थति' (३२) वत् ।

तुबि (तुम्ब्)=अदर्शने अर्दने च । १० । सक० । सेट् । उ० । तुम्बयति–ते ।

तुभ=हिंसायाम् । १ । सक० । सेट् । आ० । द्युतादिः । तोभते । ९. अतुभत्–अतोभिष्ट । 'रोचाति (२१४) वत् ।

तुभ=हिंसायाम् । ४ । सक० । सेट् । प० । पुषादिः । तुभ्यति । ९. अतुभत । 'लुभ्यति' (४६६) वत् ।

तुभ=हिंसायाम् । ९ । सक० । सेट् । प० । तुभ्नाति । क्र्यादि- 'क्षुभ' धातुवत् । तुभित्वा तोभित्वा । तुब्धः ।

तुम्प=हिंसायाम् । १ । सक० । सेट् । प० तुम्पति । ८. तुप्यात् ।

तुम्प=हिंसायाम् । ६ । सक० । सेट् । प० । तुम्पति । 'गुम्फति' (५०३) वत् ।

तुम्फ=हिंसायाम् । १ । सक० । सेट् । प० । तुम्फति ।

तुम्फ=हिंसायाम् । ६ । सक० । सेट् । प० । तुम्फति । 'गुम्फति' (५०३) वत् ।

तुर=त्वरणे । ३ । अक० । सेट् । प० । छान्दसः । तोतूर्ति ।

तुर्वी (तुर्व्)=हिंसायाम् । १ । सक० । सेट् । प० । ईदित् । 'उर्वी–गुर्वी' धातुवत् ।

× **तुल**=उन्माने [६१४] १० । सक० । सेट् । उ० । तोलयति-ते ।

× **तुष**=तुष्टौ [४१३] ४ । अक० । अनि० । प० । तुष्यति ।

तुस=शब्दे । १ । अक० । सेट् । प० । तोसति । 'शोचति' (७६) वत् ।

तुहिर् (तुह्)=अर्दने । १ । सक० । सेट् । प० । इरित् । तोहति ।
५. तुतोह । ९. अतुहत्-अतोहीत् । 'च्योतति' (२९) वत् ।
तुहिनम् =हिमम् ।

तूण=पूरणे । १० । सक० । सेट् । आ० । आकुस्मीयः । तूणयते ।

तूरी (तूर्)=गतित्वरणयोः । ४ । सक० । सेट् । आ० । तूर्यते ।
५. तुतूरे । 'दीप्यति' (४१३) वत् । ९. अतूरिष्ट इत्येव ।

तूल=निष्कर्षे । निष्कर्षो निष्कोषणम् । तच्च अन्तर्गतस्य बहिः निस्सा-
रणम् । १ । सक० । सेट् । प० । तूलति । 'कूजति' (८५) वत् ।

तूल=निष्कर्षे । १० । सक० । सेट् । उ० । तूलयनि-ते ।

तूष=तुष्टौ । १ । अक० । सेट् । पर० । तूषति । 'कूजति' (८९) वत् ।

तृंह (तृंह्)=हिंसायाम् । ६ । सक० । सेट् । वेट् । प० । ऊदित् ।
१. तृंहति । ५. ततृंह । म० ततृंहिथ-ततृण्ढ । उ० ततृंहिव-ततृंह्व ।
६. तृंहिता तृण्ढा । ७. तृंहिष्यति-तृङ्क्ष्यति । ८. तृह्यात । तृह्या-
स्ताम् । ९. अतृंहीत्--अताङ्क्षीत् । तृढः । तृंहितुम--तृण्ढुम् ।
तृंहित्वा- तृढ्वा ।

तृक्ष=गतौ । १ । सक० । सेट् । प० । तृक्षति । ५. ततृक्ष । 'नर्दति'
(४१) वत् ।

तृणु (तृण्)=अदने । ८ । सक० । सेट् । उ० । तनोत्यादिः । तृणोति-
तृणुते । 'तनोति' (५६०) वत् । वितृत्य-वितृण्य । तृणम् । तृण्या ।

उतृदिर् (तृद्)=हिंसानादरयोः । ७ । सक० । सेट् । प० । तृणत्ति ।
'उछृदिर्' धातुवत्त ।

× **तृप**=प्रीणने । प्रीणन तृप्तिस्तर्पणं च [४४३] ४ । प० । पुषादिः । रधादित्वात् वेट् । तृप्यति ।

तृप=प्रीणने ।५। सक० । सेट्। प०। तृप्नोति । 'धृष्णोति' (४८७) वत् ।

× **तृप**=प्रीणने [५०२] ६ । सक० । सेट् । प० । तृपति ।

× **तृप**=प्रीणने संदीपने च । [१३२] १० । सक० । सेट् । उ० । **आधृषीय** । तर्पयति-ते ।

तृफ=तृप्तौ । ६ । सक० । सेट् । प० । तृफति । 'तृपति' (५०१) वत् ।

तृम्फ=तृप्तौ । ६ । सक० । सेट् । प० । तृम्फति । **५.** ततृम्फ । **६.** तृम्फिता ८. तृफ्यात् । **९.** अतृम्फीत् ।

× **ञितृष**=पिपासायाम् [४१२] ४ । अक० । सेट् । प० । पुषादिः । तृष्यति ।

× **तृह**=हिंसायाम् [९५३] ७ । सक० । सेट् । प० । तृणेढि ।

तृहू (तृह्)=हिंसायाम् । ६ । सक० । वेट् । प० । ऊदित् । तृहति । **५.** ततर्ह । **म०** ततर्हिथ-ततर्ढ । **उ०** ततर्हिव-ततर्ह्व । **६.** तर्हिता-तर्ढा । **७.** तर्हिष्यति-तर्क्ष्यति । **९.** अतर्हीत्-अतार्क्षीत् ।

× **तॄ**=प्लवनतरणयोः [२९२] १ । सक० । सेट् । प० । ॠकारान्तः । तरति । त्रयः । त्रीन् । तरीः ।

तेज=पालने । १ । सक० । सेट् । प० । तेजति । **५.** तितेज । 'खेलति' (१५९) वत् ।

तेपृ (तेप्)=कम्पने । रक्षणे च । १ । सक० । सेट् । आ० । तेपते । 'देवति' (१५०) वत् ।

तेवृ (तेव्)=देवने । १ । सक० । सेट् । प० । तेवते । 'देवति' (१५०) वत् ।

× **त्यज**=हानौ [३०९] १ । सक० । अनि० । प० । त्यजति ।

त्रकि (त्रङ्क्)=गतौ । १ । सक० । सेट् । आ० । त्रङ्कते । तत्रङ्के । 'वन्दति' (९) वत् ।

त्रख=गतौ । १ । सक० । सेट् । प० । त्रखति । 'व्रजति' (९३) वत् । ९. अत्रखीत्–अत्राखीत् ।

त्रखि (त्रङ्ख्)=गतौ । १ । सक० । सेट् । प० । त्रङ्खति 'क्रन्दति' (९०) वत् ।

त्रदि (त्रन्द्)=चेष्टायाम् । १ । अक० । सेट् । प० । त्रन्दति । 'क्रन्दति' (९०) वत् ।

त्रपूष् (त्रप्)=लज्जायाम् [११७] १ । अक० । वेट् । आ० । घटादिः । त्रपते ।

त्रस=धारणे । ग्रहण इत्येके । वारण इत्यन्ये । १० । सक० । सेट् । उ० । त्रासयति–ते ।

× त्रसी (त्रस्)=उद्वेगे [३९८] ४ । अक० । सेट् । प० । त्रस्यति–त्रसति ।

त्रिखि (त्रिङ्ख्)=गतौ । १ । सक० । सेट् । प० । त्रिङ्खति । 'क्रन्दति' (५०) वत् ।

× त्रुट=छेदने [५१०] ६ । सक० । सेट् । प० । त्रुट्यति–त्रुटति ।

× त्रुट=छेदने [६२९] १० । सक० । सेट् । आ० । आकुस्मीयः । त्रोटयते ।

त्रुप=हिंसायाम् । १ । सक० । सेट् । प० । त्रोपति । 'शोचति' (७६) वत् ।

त्रुफ=हिंसायाम् । १ । पूर्ववत् ।

त्रुम्प=हिंसायाम् । १ । सक० । सेट् । प० । त्रुम्पति ।

त्रुम्फ=हिंसायाम् । १ । पूर्ववत् । त्रुम्फति ।

× ञित्वरा (त्वर्)=सम्भ्रमे [२२८] १ । अक० । सेट् । आ० । आ-
दित् । घटादिः । षित् । त्वरते ।

त्विष=दीप्तौ । १ । अक० । अनि० । उ० । त्वेषति–ते । ५. तित्वेष–
तित्विषे । ६. त्वेष्टा । ७. त्वेक्ष्यति–ते । ८. त्विष्यात्–त्विक्षीष्ट ।
९. अत्विक्षत्–त । त्विट्=कान्तिः । त्वष्टा त्वष्टारौ त्वष्टारः ।

त्सर=छद्मगतौ । १ । अक० । सेट् । प० । त्सरति । ५. तत्सार ।
'व्रजति' (९३) वत् ।

## थ

थुड=संवरणे । ६ । सक० । सेट् । प० । कुटादिः । थुडति । ५.
तुथोड । 'कुच' धातुवत् ।

)=हिंसायाम् । १ । सक० । सेट् । प० ।
' गुर्वी ' धातुवत् ।

× दंश=दशने । दशनं दंष्ट्राव्यापारः । [३०८] १ । सक० । अनि० ।
प० । दशति ।

× दक्ष=वृद्धौ शीघ्रार्थे च [१७९] १ । अक० । सेट् । आ० । दक्षते ।

दक्ष=गतिशासनयो. । १ । सक० । सेट् । आ० । घटादिः । षित् ।
दक्षते । ५. ददक्षे । ७. दक्षिष्यते ।

दघ=घातने पालने च । ५ । सक० । सेट् । प० । छान्दस । दघ्नोति ।

× दण्ड=दण्डनिपाते [६९७] १० । द्विक० । सेट् । उ० । दण्ड-
यति–ते । गर्गान् शतं दण्डयति ।

× दद=दाने । किञ्चिदुद्दिश्य अपुनर्ग्रहणाय स्वीयत्वत्यागो दानम् । [१५]
१ । सक० । सेट् । आ० । ददते ।

दध=घातने पालने च । ९ । सक० । सेट् । प० । छान्दसः । दध्नोति ।

×**दध**=धारणे [७] १ । सक० । सेट् । आ० । दधते ।

×**दमु** (दम्)=उपशमे [४५०] ४ । सक० । सेट् । प० । शमादिः । दाम्यति । दण्डः । दोः दोषौ ।

दम्भु (दम्भ्)=आज्ञापने । ५ । सक० । सेट् । प० । छान्दसः । दभ्नोति । दब्धः । दब्धि ।

×**दय**=दानगतिरक्षणहिंसादानेषु [१४३] १ । सक० । सेट् । आ० । दयते ।

×**दरिद्रा**=दुर्गतौ । [३७७] २ । अक० । सेट् । प० । आकारान्तः ।

×**दल**=विशरणे [१६१] १ । अक० । सेट् । प० । दलति । **णिचि**— दालयति । मित्त्वपक्षे दलयति ।

दल=विदारणे । १० । सक० । सेट् । उ० । दालयति–ते ।

दशि (दंश्)=दंशने । १० । सक० । सेट् । आ० । आकुस्मीयः । दशयते ।

दशि (दंश्)=भाषायाम् । १० । सक० । सेट् । उ० । दंशयति-ते ।

दस=दर्शनदंशनयोः । १० । सक० । सेट् । आ० । आकुस्मीयः । दासयते ।

दसि (दंस्)=दर्शनदंशनयोः । १० । सक० । सेट् । आ० । आकुस्मीयः । दंसयते ।

दसि (दंस्)=भाषायाम् । १० । सक० । सेट् । उ० । दंसयति–ते ।

दसु (दस्)=उपक्षये । ४ । अक० । सेट् । प० । दस्यति । पुषादिः । दस्युश्चोरः । 'यस्यति' (४५७) वत् ।

×**दह**=भस्मीकरणे [३१०] १ । सक० । अनि० । प० । दहति ।

×**डुदाञ्** (दा)=दाने [३८९] ३ । सक० । अनि० । उ० । ददाति–दत्ते ।

× **दाण्** (दा)=दाने [२७७] १ । सक० । अनि० । प० । यच्छति ।

दान=खण्डने । १ । सक० । सेट् । उ० । नित्यसन्नन्तः । दीदांसति–ते । 'मीमांसति' (२९९) वत् ।

दाप् (दा)=लवने । २ । सक० । अनिट् । प० । दाति । दानं खण्डनम् । गोदानमङ्गलं=केशकृन्तनरूपं मङ्गलकार्यम् । 'पाति' (३६२) वत् । दाधाघ्वदापित्यत्र अदाबित्युक्तत्वादस्य घुसंज्ञा नास्ति । अतः **एर्लिङि** । **गातिस्थाघु**—इति सूत्रयोः प्रवृत्तिर्नास्ति । तस्मात् ८. दायात् । ९. अदासीत् ।

दाश=हिंसायाम् । ९ । छान्दसः । सक० । सेट् । प० । दाश्नोति ।

× **दाश्ट** (दाश्)=दाने [२५७] १ । सक० । सेट् । उ० । दाशति–ते । दाश्वान् दाश्वांसौ ।

दाश्ट (दाश्)=हिंसायाम् । ९ । छान्दसः । सेट् । प० । दाश्नोति । दाशः कैवर्तः ।

दासृ (दास्)=दाने । 'दाश्ट'=दाने वत् ।

दिवि (दिन्व्)=प्रीणने । १ । सक० । सेट् । प० । दिन्वति । 'जिवि' धातुवत् । दिवसः । दीदिविः ।

× **दिवु** (दिव्)=क्रीडाविजिगीषाद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु [३९४] ४ । दिवसः । देवरः । देवृ=देवा देवारौ ।

दिवु (दिव्)=परिकूजने । १० । अक० । सेट् । आ० । आकुस्मीयः । देवयते ।

× **दिश**=अतिसर्जने । अतिसर्जनं दानम् [४९१] ६ । सक० । अनि० । प० । दिशति । देशः । उद्देशः । आदेशः ।

× **दिह**=उपचये [३३०] २ । अक० । अनि० । उ० । देग्धि–दिग्धे । देहः ।

× **दीक्ष**=मौण्ड्येज्योपनयननियमव्रतादेशेषु [१७१] १ । अक० । सेट् । आ० । दीक्षते ।

दीङ् (दी)=क्षये । ४ । अक० । अनि० । आ० । ओदित् । दीयते । 'डीयति' (४०९) वत् । दीनः ।

दीधीङ् (दीधी)=दीप्तिदेवनयोः । २ । दीप्तौ सक० । सेट् । अनेकाच् । ईकारान्तः । छान्दसः । दीधीते । दीध्याते । दीध्यते । २. दीधीताम् । दीध्याताम् । म० दीधीष्व । उ० दीध्यै । ३. अदीधीत । ४. दीधीत । दीधीयाताम् । ५. दीध्याञ्चक्रे । ६. दीधिता । ७. दीधिष्यते । ८. दीधिषीष्ट । दीधिषीयास्ताम् । ९. अदीधिष्ट । दीध्यानः । दीधितिः । **णिचि** —दीधयति–ते ।

× **दीपी** (दीप्)=दीप्तौ [४१३] ४ । अक० । सेट् । आ० । दीप्यते ।

दु=गतौ । १ । सक० । अनिट् । प० । उकारान्तः । दवति । ५. दुदाव । म० दुदविथ । ६. दोता । ७. दोष्यति । ८. दूयात् । ९. अदौषीत् । दवः । दूनः । दूतः । दूत्यम् ।

× **टुदु** (दु)=उपतापे [४७९] ५ । सक० । सेट् । प० । दुनोति ।

दुःख=व्यथने । १० । सक० । सेट् । उ० । दुःखयति- ते ।

दुर्वी (दुर्व्)=हिंसायाम् । १ । सक० । सेट् । प० । दूर्वति । ५. दुदूर्व । 'गुर्वी' धातुवत् । दूर्वा ।

× **दुल**=उत्क्षेपे [६१५] १० । सक० । सेट् । प० । दोलयति–ते ।

× **दुष**= वैकृत्ये [४३४] ४ । अक० । अनि० । प० । पुषादिः । दूषिका ।

× **दुह**=प्रपूरणे [३२९] २ । द्विकर्म० । अनि० । उ० । दोग्धि–दुग्धे । दुहिता पुत्री ।

दुहिर् (दुह्)=अर्दने । १ । सक० । सेट् । प० । दोहति । 'च्योतति' (२९) वत् ।

× दूङ् (दू)=परितापे [४०४] ४ । अक० । सेट् । आ० । ओदित् । दूयते । दून । दूनवान् ।

दृ=हिंसायाम् । ५ । सक० । अनिट् । प० । ऋकारान्त । दृणोति । 'पृणोति' (४८१) वत ।

× दृङ् (दृ)=आदरे [५२०] ६ । सक० । अनि० । आ० । आद्रियते ।

× दृप=हर्षमोहनयोः [४४४] ४ । अक० । अनि० । रधादित्वाद्वेट् । प० । पुषादिः । दृप्यति ।

दृप=उत्क्लेशे । ६ । सक० । सेट् । प० । दृपति । 'तृपति' (५०२) वत् ।

दृप=सन्दीपने । १० । सक० । सेट् । उ० । आधृषीयः । दर्पयति-ते ।

दृफ=उत्क्लेशे । 'दृप' धातुवत ।

दृभ=सन्दर्भे । १० । सक० । सेट् । प० । आधृषीयः । दर्भयति-ते । दर्भति-ते ।

दृभी (दृभ्)=ग्रन्थे । ६ । सक० । सेट् । प० । दृभति । 'तृपति' (२०२) वत् । दृब्धः ।

दृभी (दृभ्)=भये । १० । अक० । सेट् । उ० । आधृषीयः । दर्भयति-ते । दृभति-ते । दर्भितः-दृब्धः । 'छृदी' धातुं पश्यत ।

दृम्फ=उत्क्लेशे । ६ । अक० । सेट् । प० । दृम्फति । 'तृपति' (५०२) वत् ।

× दृशिर् (दृश्)=प्रेक्षणे [२०७] १ । सक० । अनि० । प० । पश्यति । निदर्शनम् उदाहरणम् ।

दृह=वृद्धौ । १ । अक० । सेट् । प० । दर्हति । 'वर्षति' (२०२) वत् । दृढः स्थूलो बली वा । दृहितोऽन्यः ।

दृहि (दृंह्)=वृद्धौ । १ । अक० । सेट् । प० । दृंहति । 'बृंहति' (२०९) वत् । दृढ. स्थूलो बली वा । दृंहितोऽन्यः ।

दॄ=भये । १ । अक० । सेट् । प० । दरति । ॠकारान्तः । मित् । दरयति । 'तरति' (२९२) वत् । **णिचि**—दारयति–ते । भयेऽर्थे मित् । दरयति ।

× दॄ=विदारणे [९८१] ९ । सक० । सेट् । प० । प्वादि॰ ल्वादिश्च । दृणाति । दीर्णः ।

देङ् (दे)=रक्षणे । १ । सक० । अनि० । आ० । दयते । **दयतेर्दिगि लिटि** । दिग्ये । ६. दाता । ९. **स्थाघ्वोरिच्च** । अदित । आत्मनेपदि 'ह्वयति' (३२३) वत् । दत्तः ।

× **देवृ** (देव्)=देवने [१५०] १ । अक० । सेट् । आ० । देवते ।

दैप् (दै)=शोधने । १ । सक० । अनि० । प० । ऐकारान्तः । दायति । 'ध्यायति' (२६७) वत् । अस्य घुसंज्ञा नास्ति । तस्मादेत्वसिज्लुकौ न स्तः । ८. दायात् । ९. अदासीत् ।

**दो**=अवखण्डने [४११] ४ । सक० । अनि० । प० । ओकारान्तः । द्यति । दात्रं=लवित्रम् । दितः । ९. अदात् । नित्यं सिचो लुक् । दानं खण्डनम् ।

× **द्यु**=अभिगमे [३४७] २ । सक० । अनि० । प० । उकारान्त॰ ।

× **द्युत**=दीप्तौ [२११] १ । अक० । सेट् । आ० । द्योतते ।

द्यै=न्यक्करणे । १ । सक० । अनि० । प० । ऐकारान्त॰ । द्यायति । 'ध्यायति' (२६७) वत् ।

द्रम=गतौ । १ । सक० । सेट् । प० । मित् । द्रमति । 'व्रजति' (९३) वत् । ९. अद्रमीत् । **णिचि**—द्रमयति ।

× **द्रा**=कुत्सायां गतौ । कुत्सितगतिः पलायनं स्वापो वा । [३६८] २ । अक० । अनि० । प० । निद्राति । तन्द्रा ।

द्राक्षि (द्राङ्क्ष्)=घोरवाशिते । १ । अक० । सेट् । प० । द्राङ्क्षति । 'काङ्क्षति' (१९६) वत् । द्राक्षा ।

द्राखृ (द्राख्)=शोषणालमर्थयोः । १ । सक० । सेट् । प० । द्राखति । 'खादति' (३६) वत् ।

द्राघृ (द्राघ्)=सामर्थ्ये आयामे च । १ । अक० । सेट् । आ० । द्राघते । ५. दद्राघे । 'गाधति' (४) वत् ।

द्राडृ (द्राड्)=विशरणे । १ । अक० । सेट् । आ० । द्राडते । दद्राडे । पूर्ववत् ।

द्राहृ (द्राह्)=निद्राक्षये । १ । अक० । सेट् । आ० । द्राहते । दद्राहे । 'द्राघृ' धातुवत् ।

×द्रु=गतौ [२८६] १ । सक० । अनि० । प० । उकारान्तः । द्रवति । द्रावयति=विलापयति ।

द्रु=हिंसायाम् । ५ । सक० । सेट् । प० । छान्दसः । द्रुणोति ।

द्रुण=हिंसागतिकौटिल्येषु । ६ । सक० । सेट् । प० । द्रुणति । 'कुच' धातुवत् । द्रोणः । द्रोणी । द्विद्रोणेन धान्यं क्रीणाति ।

×द्रुह=जिघांसायाम् [४४५] ४ । सक० । सेट् । प० । रधादिः । पुषादिः । द्रुह्यति । द्रोहः ।

द्रूञ् (द्रू)=हिंसायाम् । ९ । सक० । सेट् । उ० । ऊकारान्तः । ञित् । द्रूणाति-द्रूणीते । ५. दुद्राव-दुद्रुवे । ९. अद्रावीत्-अद्रविष्ट ।

द्रेकृ (द्रेक्)=शब्दोत्साहयोः । उत्साहो वृद्धिरौन्नत्यं च । १ । अक० सेट् । आ० । द्रेकते । 'देवति' (१९०) वत् ।

द्रै=स्वप्ने । १ । अक० । अनि० । प० । ऐकारान्तः । द्रायति । दद्रौ । हानिदद्रौ निदद्रौ । इति चम्पूभारतम् । 'ध्यायति' (२६७) वत् ।

×द्विष=अप्रीतौ [३२८] २ । सक० । अनि० । उ० । द्वेष्टि-

द्वृ=संवरणे । १ । सक० । अनि० । प० । ऋकारान्तः । द्वरति । ५. दद्वार । 'स्मरति' (२७९) वत् । घञ् द्वारम् । क्विप् द्वाः ।

## ध

धक्क=नाशने । १० । सक० । सेट् । उ० । धक्कयति-ते ।

धण=शब्दे । १ । सक०। सेट् । प० । धणति । ५. दधाण । दधणतुः । 'गदति' (३७) वत् । धनुः ।

धन=धान्ये । ३ । अक० । सेट् । प० । छान्दसः । दधन्ति । दधन्तः । दधनति ।

धवि (धन्व्)=गतौ । १ । सक० । सेट् । प० । धन्वति । ५. दधन्व । 'रवि' धातुवत् ।

× डुधाञ् (धा)=धारणपोषणयोः [३९०] ३ । सक० । अनि० । उ० । आकारान्तः । ड्वित् । दधाति-धत्ते ।

× धावु (धाव्)=गतिशुद्ध्योः [१७२] १ । गतावकर्म० । शुद्धौ सक० । सेट् । उ० । धावति-ते ।

धि=धारणे । ६ । सक० । अनि० । प० । इकारान्तः । धियति । 'क्षियति' (५१६) वत् । ५. दिधाय । दिध्यतुः । म० दिधयिथ-दिधेथ । धियन् ।

धिक्ष=संदीपनक्लेशनजीवनेषु । १ । सक० । सेट् । आ० । धिक्षते । 'शिक्षति' (१७३) वत् ।

× धिवि (धिन्व् )=प्रीणने [१७०] १ । सक० । सेट् । प० । धिनोति ।

धिष=शब्दे । ३ । अक० । सेट् । प० । दिधेष्टि । दिधिष्टः । दिधिषति । ५. दिधेष । ६. धेषिता । ९. अदिधेषीत् । दिधिषुः । दिधिषूः ।

धीङ् (धी)=धारणे । ४ । सक० । अनि० । आ० । ईकारान्तः । ङित् । ओदिच्च । धीयते । ५. दिध्ये । ६. धेता । ९. अधेष्ट । धीत्वा । धीनः । अधीनः परतन्त्रः ।

धुक्ष=संदीपनक्लेशनजीवनेषु। १। सक०। सेट्। आ०। धुक्षते। 'शिक्षति' (१७२) वत्।

धुञ् (धु)=कम्पने। ५। सक०। अनि०। उ०। उकारान्तः। **१.** धुनोति-धुनुते। **२.** धुनोतु-धुनुताम्। **३.** अधुनोत्-अधुनुत। **४.** धुनुयात्। धुनुयाताम्। धुन्वीत। धुन्वीयाताम्। **५.** दुधाव। दुधुवतुः। **म०** दुधविथ-दुधोथ। **६.** धोता। **८.** धूयात्। धूयास्ताम्।—धोषीष्ट। **९.** अधौषीत्-अधोष्ट। **कर्मणि**—धूयते। **णिचि**—धावयति-ते। **सनि**—दुधूषति-ते। **यङि**—दोधूयते। **यङ्लुकि**—दोधोति।

धुर्वी (धुर्व्)=हिंसायाम्। १। सक०। सेट्। प०। धूर्वति। 'गुर्वी' धातुवत्। धूः धुरौ धुरः। धूर्पतिः। धुर्यः। धूर्तः।

× **धू**=विधूनने [९१३] ६। सक०। सेट्। प०। ऊकारान्तः। कुटादिः। धुवति। धवित्रम्। धवः=पतिः।

× **धूञ्** (धू)=कम्पने [४७८] ५। सक०। **स्वरति सूति**—इति वेट्। उ०। ऊकारान्तः। ञित्। धूनोति-धूनुते। धूपः। धूमः।

× **धूञ्** (धू)=कम्पने [९७७] ९। सक०। **स्वरति सूति**—इति वेट्। प्वादिः। ल्वादिश्च। धुनाति-धुनीते।

धूञ् (धू)=कम्पने। १०। सक०। सेट्। उ०। ऊकारान्तः। आधृषीयः। धूनयति-ते। **धूञ्प्रीञोर्नुग्वक्तव्यः।**

× **धूप**=सन्तापे [१२४] १। सक०। सेट्। प०। धूपायति।

धूप=भाषायाम्। १०। सक०। सेट्। उ०। धूपयति-ते।

धूरी (धूर्)=हिंसागत्योः। ४। हिंसायां सक०। सेट्। आ०। धूर्यते। 'दीप्यति' (४१३) वत्। ९. अधूरिष्ट।

धूश =कान्तिकरणे । १० । अक० सेट् । उ० धूशयति-त
धूष =धूषयति-ते ।
धूस =धूसयति-ते ।

धृज=गतौ । १ । सक० । सेट् । प० । धर्जति । ५. दधर्ज कर्षति (३०९) वत् ।

धृजि (धृञ्ज् )=गतौ । १ । सक० । सेट् । प० धृञ्जति ५. दधृञ्ज । 'बृंहति' (२०९) वत् ।

× धृङ् (धृ)=अवस्थाने [९२१] ६ । अक० । अनि० आ० ऋकारान्तः । ङित् । ध्रियते ।

धृङ् (धृ)=अवध्वंसने । १ । सक० । अनि० । आ० । ऋकारान्तः । ङित् । धरते । २. धरताम् । ३. अधरत । ४. धरेत । ५. दध्रे । ६. धर्ता । ७. धरिष्यते । ८. धृषीष्ट । ९. अधृत । अधृषाताम् ।

× धृञ् (धृ)=धारणे [२६२] १ । सक० । अनि० । उ० । ऋकारान्तः । ञित् । धराते-ते । **णिचि** —धारयति । **धारेरुत्तमर्णः** । यज्ञदत्तः देवदत्ताय शतं धारयति । निर्धारयति निश्चिनोति ।

× **धृष**=प्रसहने [६४०] १० । सक० । सेट् । उ० । आधृषीयः । धर्षयति-ते

× **ञि धृषा** (धृष् )=प्रागल्भ्ये [४८७] ५ । अक० । सेट् । प० । ञीत् । आदिच्च । धृष्णोति ।

धॄ=वयोहानौ । ९ । अक० । सेट् । प० । ॠकारान्तः । प्वादिः । ल्वादिश्च । धृणाति । 'दृणाति (९८१) वत् । धीर्णः ।

धेक=दर्शने । १० । सक० । सेट् । उ० । अदन्तः । धेकयति-ते ।

× धेट् (धे)=पाने [२६४] १ । सक० । अनि० । प० । धयति । टित्वात् स्तनन्धयी । धेनुः ।

घोर्ऋ (घोर्)=गतिचातुर्ये । १ । अक० । सेट् । प० । ऋकारान्तः । घोरति । २. घोरतु । ३. अघोरत् । ४. घोरेत् । ५. दुघोर । दुघोरतुः । ६. घोरिता । ८. घोर्यात् । ९. अघोरीत् । घोरितकम् ।

× ध्मा=शब्दाग्निसंयोगयोः । अग्निसंयोगो नाम मुखवायुनाऽग्नेः संयोगः [२७४] १ । सक० । अनि० । प० । आकारान्तः । धमति ।

× ध्यै=चिन्तायाम् [२६७] १ । सक० । अनि० । प० । ऐकारान्तः । ध्यायति । धीः क्विप् ।

ध्रज=गतौ । १ । सक० । सेट् । प० । ध्रजति । ५. दध्राज । 'व्रजति' (९३) वत् ।

ध्रजि (ध्रञ्ज्)=गतौ । १ । सक० । सेट् । प० । ध्रञ्जति । ५. दध्रञ्ज । 'क्रन्दति' (५०) वत् ।

ध्रण=शब्दे । १ । सक० । सेट् । प० । ध्रणति । ५. दध्राण । 'गदति' (३७) वत् ।

उध्रस=(ध्रस्)=उञ्छे । ९ । सक० । सेट् । प० । ध्रस्नाति । ५. दध्रास । दध्रसतुः । ६. ध्रसिता । ९. अध्रासीत् । केचित् 'उध्रस्' इत्येव धातुं वदन्ति । तन्मते उध्रस्नाति । ३. औध्रस्नात् । ५. उद्ध्रसाञ्चकार । ९. औध्रासीत् । इत्यादि ।

उध्रस=उञ्छे । १० । सक० । सेट् । उ० । ध्रासयति–ते । पक्षे उध्रासयति ते ।

ध्राक्षि (ध्राङ्क्ष्)=घोरवाशिते च । १ । अक० । सेट् । प० । ध्राङ्क्षति । ५. दध्राङ्क्ष । 'वाञ्छति' (८९) वत् ।

ध्राखृ (ध्राख्)=शोषणालमर्थयोः । १ । सक० । सेट् । प० । ध्राखति । दध्राख । 'खादति' (३६) वत् ।

ध्राघृ (ध्राघ्)=सामर्थ्ये । १ । अक० । सेट् । आ० । ध्राघते । 'गाधति' (४) वत् ।

ध्राड़ृ (ध्राड्)=विशरणे । १ । अक० । सेट् । आ० । ध्राडते । 'गाधति' (४) वत् ।

ध्रु=स्थैर्ये । १ । अक० । अनि० । प० । उकारान्तः । ध्रवति । ५. दुध्राव । म० दुध्रविथ-दुध्रोथ । दुध्रविव । 'स्रवति' (२८३) वत् ।

ध्रु=गतिस्थैर्ययोः । ६ । (सक०) । अक० । अनि० । प० । उकारान्तः । कुटादिः । ध्रुवति । ५. दुध्राव । 'गुवति' (९१४) वत् । ध्रुवः पचाद्यच् ।

ध्रुव=गतिस्थैर्ययोः । ६ । (सक०) । अक० । सेट् । प० । कुटादिः । ध्रुवति । ५. दुध्रोव । ६. ध्रुविता । ८. हलि चेति दीर्घः । ध्रूव्यात् । ९. अध्रुवीत् । 'स्फुटति' (५०९) वत् । ध्रुवः इगुपधलक्षणः कः ।

ध्रेकृ (ध्रेक्)=शब्दोत्साहयोः । १ । अक० । सेट् । आ० । ध्रेकते । 'देवति' (१९०) वत् ।

ध्रै=तृप्तौ । १ । सक० । अनि० । प० । ध्रायति । ऐकारान्तः । 'ध्यायति' (२६७) वत् ।

× ध्वंसु (ध्वंस्)=अध.पतने । गतौ च [२१९] १ । अधः पतनेऽकर्म० । सेट् । आ० । द्युतादिः । ध्वंसते । ध्वंसो नाशः ।

ध्वज=गतौ । १ । सक० । सेट् । प० । ध्वजति । ५. दध्वाज । 'गदति' (३७) वत् ।

ध्वजि (ध्वञ्ज्)=गतौ । १ । सक० । सेट् । प० । ध्वञ्जति । ५. दध्वञ्ज । 'क्रन्दति' (९०) वत् ।

ध्वण=शब्दे । १ । अक० । सेट् । प० । ध्वणति । ५. दध्वाण । 'गदति' (३७) वत् ।

× ध्वन=शब्दे [२३९] १ । अक० । सेट् । प० । घटादिः । ध्वनति ।

ध्वन=शब्दे । १० । अक० । सेट् । उ० । ध्वनयति ।

× ध्वाक्षि (ध्वाङ्क्ष्)=घोरवाशिते च [१९७] १ । अक० । सेट् । प० । ध्वाङ्क्षति ।

ध्वृ=कौटिल्ये । १ । अक० । अनि० । प० । ऋकारान्तः । ध्वरति । 'सरति' (२७९) वत् ।

नक्क=नाशने । १० । सक० । सेट् । उ० । नक्कयति ।

× नट=नृत्तौ [१०४] १ । अक० । सेट् । प० । नटति । अयं घटादि-भिन्न । णिचि—नाटयति-ते ।

नट=भाषायाम् । अवस्कन्दने च । १० । सक० । सेट् । उ० । नाट-यति ते ।

× टुनदि (नन्द्)=समृद्धौ [४८] १ । अक० । सेट् । प० । नन्दति ।

× नर्द=शब्दे [४१] १ । अक० । सेट् । प० । नर्दति ।

नल=भाषायाम् । १० । सक० । सेट् । उ० । नालयति ।

× नाथृ(नाथ्)=याच्ञोपतापैश्वर्याशीष्षु [६] १ । सक० । सेट् । आशी-रर्थे आत्मनेपदी । नाथते । अन्यार्थेषु परस्मैपदी । नाथति ।

नाधृ (नाध्)=याच्ञोपतापैश्वर्याशीष्षु । १ । सक० । सेट् । आ० । नाधते । आत्मनेपदि 'नाथति' (६) वत् ।

निवास=आच्छादने । १० । सक० । सेट् । उ० । अदन्तः । निवास-यति ते ।

निष्क=परिमाणे । १० । सक० । सेट् । आ० । आकुस्मीयः ।

नील=वर्णे । १ । अक० । सेट् । प० । नीलति । ५. निनील । 'मीलति' (१५४) वत् ।

नीव=स्थौल्ये । १ । 'णीव' धातुं पश्यत ।

×**नृती** (नृत्)=गात्रविक्षेपे [१९७] ४ । अक० । सेट् । प० । नृत्यति **णिचि** —नर्तयते ।

नॄ=नये । ९ । सक० । सेट् । प० । प्वादिः । ल्वादिश्च । नृणाति । ननार । 'दृणाति' (९८१) वत् । **णिचि**—नरयति-ते । नय-भिन्नेऽर्थे नारयति । नीर्णः ।

पक्ष=परिग्रहे । १ । सक० । सेट् । प० । पक्षति । पपक्ष । 'नर्दति' (४१) वत् ।

पक्ष=परिग्रहे । १० । सक० । सेट् । उ० । पक्षयति-ते ।

×**डुपचष्** (पच्)=पाके [३१३] १ । द्विक० । अनि० । उ० । पचति-ते ।

×**पचि** (पञ्च्)=व्यक्तीकरणे [७१] १ । सक० । सेट् । आ० । पञ्चते । 'कम्पति' (११८) वत् ।

पचि (पञ्च्)=विस्तारवचने । १० । सक० । सेट् । उ० । प्रपञ्चयति-ते ।

पट=गतौ । १ । सक० । सेट् । प० । पटति । ९. पपाट । पेटतुः । 'रटति' (३८) वत् । पटलम् । पटली । पाटली=पुष्पम् । पटुः । पटिमा । पाटवम् । पाटयति=छिनत्ति ।

पट=भाषायाम् । १० । सक० । सेट् । उ० । पाटयति-ते ।

पट=ग्रन्थे । १० । सक० । सेट् । उ० । अदन्तः । पटयति-ते ।

×**पठ**=व्यक्तायां वाचि (११२) १ । सक० । सेट् । पठति ।

पडि (पण्ड्)=गतौ । १ । सक० । सेट् । आ० । पण्डते । 'वन्दति' (९) वत् । पण्डितः ।

पडि (पण्ड्)=नाशने । १० । सक० । सेट् । उ० । पण्डयति ते ।

×**पण**=व्यवहारे स्तुतौ च [१३१] १। सक०। सेट्। व्यवहारे आ०। पणते। स्तुतौ परस्मै०। पणायति। पण्डा बुद्धिः। वणिक्।

पत=गतौ। १०। सक०। सेट्। उ०। पातयति-ते।

×**पत्लृ** (पत्)=गतौ [२३९] १। अक०। सेट्। प०। पतति। पतयालुः।

पथ=प्रक्षेपे। १०। सक०। सेट्। उ०। पाथयति।

पथि (पन्थ्)=गतौ। १०। सक०। सेट्। उ०। पन्थयति-ते।

पथे (पथ्)=गतौ। १। सक०। सेट्। प०। एदित्। पथति। ५. पपाथ। पेथतुः। ९. अपथीत्। 'गदति' (३७) वत्।

×**पद्**=गतौ [४२१] ४। सक०। अनि०। आ०। पद्यते। पदातिः। पदाजिः।

पद=गतौ। १०। सक०। सेट्। आ०। अदन्तः। आगर्वीयः। पदयते।

पन=स्तुतौ। १। सक०। सेट्। आ०। पनायति-पनते। 'पणायति' (१३१) वत्।

पम्पस्=दुःखे। ११। पम्पस्यति।

पय=गतौ। १। सक०। सेट्। आ०। पयते। ५. पेये। 'दधति' (७) वत्। पयो जलम्।

पयस्=प्रसृतौ। ११। पयस्यति।

पर्ण=हरितभावे। १०। अक०। सेट्। उ०। पर्णयति-ते।

×**पर्द**=कुत्सिते शब्दे [२३] १। अक०। सेट्। आ०। पर्दते।

पर्प=गतौ। १। सक०। सेट्। प०। पर्पति। 'नर्दति' (४१) वत्।

पर्ब=गतौ। १। पूर्ववत्।

पर्व=पूरणे। १। 'पर्प' वत्।

पल=गतौ । १ । सक० । सेट् । प० । पलति । पपाल । पेलतुः । 'चलति' (२३७) वत् । पलमुन्मानविशेषः । पलालम् । पललम् ।

पल्यूल=लवनपवनयोः । १० । सक० । सेट् । उ० । अदन्तः । पल्यूलयति–ते ।

पश=बन्धने । १० । सक० । सेट् । उ० । पाशयति–ते ।

पष=गतौ । १० । सक० । सेट् । उ० । पषयति ।

पसि (पंस्)=नाशने । १० । सक० । सेट् । उ० । पंसयति-ते ।

× पा=पाने [२७१] १ । सक० । अनि० । प० । पिबति । पाथः=उदकम् ।

× पा=रक्षणे [३६२] २ । सक० । अनि० । प० । पाति । पपीः=सूर्यः । पुमान् ।

पार=कर्मसमाप्तौ । १० । अक । सेट् । उ० । अदन्तः । पारयति–ते ।

× पाल=रक्षणे [६१७] १० । सक० । सेट् । उ० । पालयति–ते । भूपालः ।

पि=गतौ । ६ । सक० । अनि० । प० । पियति । ५. पियाय । 'क्षियति' (५१६) वत् ।

पिच्छ=कुट्टने । १० । सक० । सेट् । उ० । पिच्छयति–ते ।

पिज=हिंसाबलादाननिकेतनेषु । १० । सक० । सेट् । उ० । पेजयति ते ।

पिजि (पिञ्ज्)=वर्ण सम्पर्चने भाषायां च । २ । यथायथं सकर्मकोऽकर्मकश्च । सेट् । आ० । पिङ्क्ते । 'णिजि' धातुवत् । पिङ्गलः । पिञ्जरः । पिञ्जूलः सङ्घातः ।

पिजि (पिञ्ज्)=हिंसाबलादाननिकेतेषु । १० । सक० । सेट् । आ० । पिञ्जयति–ते । पुञ्जः ।

पिट=शब्दसंघातयोः । १ । अक० । सेट् । प० । पेटति । ५. पिपेट । पिपिटतुः । 'चेटति' (१०६) वत् ।

पिठ=हिंसासंक्लेशनयोः । १ । सक० । सेट् । प० । पेठति । 'चेटति' (१०६) वत् । पीठम् ।

×पिडि (पिण्ड्)=सङ्घाते [९९] १ । सक० । सेट् । आ० । पिण्डते ।

पिवि (पिन्व्)=सेचने । सेवन इत्येके । सक० । सेट् । प० । पिन्वति । ५. पिपिन्व । 'जिवि' धातुवत् ।

पिश=अवयवे । ६ । अक० । सेट् । प० । मुचादिः । पिंशति । 'खिन्दति' (५३८) वत् । पिशित्वा-पेशित्वा । पिशितम् । पेशी । पिशुनः । पिशङ्गः । पिशङ्गी ।

×पिष्लृ (पिष्)=सञ्चूर्णने [५५०] ७ । सक० । अनि० । प० । लृदित् । पिनष्टि । चोरस्य चोरं वा पिनष्टि ।

पिष्ट=कुट्टने । १० । सक० । सेट् । उ० । पिष्टयति-ते ।

पिस=गतौ । १० । सक० । सेट् । उ० । पेसयति । पेस्वरः ।

पिसि (पिंस्)=भाषायाम् । १० । सक० । सेट् । उ० । पिंसयति-ते ।

पिसृ (पिस्)=गतौ । १ । सक० । सेट् । प० । पेसति । ५- पिपेस । पिपिसतुः । 'चेटति' (१०६) वत् । पेस्वरः ।

पीङ् (पी)=पाने । ४ । सक० । अनि० । आ० । ङित् । पीयते । ५. पिप्ये । ६. पेता । ८. पेषीष्ट । ९ अपेष्ट । 'डीयति' (४०९) वत् ।

×पीड=अवगाहने [६०३] १० । सक० । सेट् । उ० । पीडयति-ते ।

पील=प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् । १ । सक० । सेट् । प० । पीलति । ५. पिपील । 'मीलति' (१५४) वत् ।

×पीव=स्थौल्ये [१६६] १ । अक० । सेट् । प० । पीवति ।

पुंस=अभिवर्धने । १० । सक० । सेट् । उ० । पुंसयति-ते ।

पुट=संश्लेषणे । छन्दनेऽपि । ६ । सक० । सेट् । प० । कुटादिः ।
पुटति । 'कुच' धातुवत् । पुटः । पुटिका ।

पुट=भाषायाम् । १० । सक० । सेट् । उ० । पोटयति–ते ।

पुट=संसर्गे । १० । सक० । सेट् । उ० । अदन्तः । पुटयति ।

पुटि (पुण्ट्)–भाषायाम् । १० । सक० । सेट् । उ० । पुण्टयति–ते ।

पुट्ट=अल्पीभावे । १० । अक० । सेट् । उ० । पुट्टयति–ते ।

पुड=मर्दने । १ । सक० । सेट् । प० । पोडति । पुपोड । 'शोचति' (७६) वत् ।

पुड=उत्सर्गे । ६ । सक० । सेट् । प० । कुटादिः । पुडति । 'कुच' धातुवत् ।

पुडि (पुण्ड्)=सङ्घाते । १ । अक० । सेट् । प० । पुण्डति । 'कुञ्चति' (७७) वत् ।

पुण=कर्मणि शुभे । ६ । अक० । सेट् । प० । पुणति । 'कुच' धातुवत् ।

पुण=संघाते । १० । सक० । सेट् । उ० । पोणयति–ते ।

पुथ=भाषायाम् । १० । सक० । सेट् । उ० । पोथयति ।

पुथ=हिंसयाम् । ४ । सक० । सेट् । प० । पुथ्यति । 'कुस्यति' (४९८) वत् ।

× **पुथि** (पुन्थ्)=हिंसासंक्लेशनयोः [३३] १ । सक० । सेट् । प० । पुन्थति ।

पुर=अग्रगमने । ६ । अक० । सेट् । प० । पुरति । 'कुच' धातुवत् । ८. पूर्यात् । पुरम् । पुरुषः । पूरुषः ।

× **पुर्व**=पूरणे [१६७] १ । सक० । सेट् । प० । पूर्वति । पूर्वः पूर्वौ पूर्वे ।

पुल=महत्त्वे । १ । अक० । सेट् । प० पोलति ५. पुपोल । 'शोचति' (७६) वत् । पुलिनम् । पुलाकः ।

पुल=महत्त्वे । १० । सक० । सेट् । उ० । पोलयति-ते ।

पुष=पुष्टौ । १ । सक० । सेट् । प० । पोषति । 'शोचति' (७६) वत् । पोषयित्नुः ।

× **पुष**=पुष्टौ [४३१] ४ । सक० । अनि० । प० । पुष्यति ।

× **पुष**=पुष्टौ [५९६] ९ । सक० । सेट् । प० । पुष्णाति ।

पुष=धारणे । १० । सक० । सेट् । उ० । पोषयति-ते ।

पुष्प=विकसने । ४ । अक० । सेट् । प० । पुष्पति । ५. पुपुष्प । ६. पुष्पिता । ९. अपुष्पीत् । पुष्पम् ।

पुस्त=आदरानादरयोः । १० । सक० । सेट् । उ० । पुस्तयति-ते ।

× **पूङ्** (पू)=पवने [२९०] १ । सक० । सेट् । आ० । पवते ।

× **पूज**=पूजायाम् [६१८] १० । सक० । सेट् । उ० । पूजयति ते ।

× **पूयी** (पूय्)=विशरणे दुर्गन्धे च [१४५] १ । अक० । सेट् । आ० । पूयते ।

× **पूरी** (पूर्)=आप्यायने [४१४] ४ । सक० । सेट् । आ० । पूर्यते ।

पूरी (पूर्)=आप्यायने । १० । सक० । सेट् । उ० । पूरयति-ते ।

पूर्ण=संघाते । १० । सक० । सेट् । उ० । पूर्णयति ते ।

पूल=संघाते । १ । अक० । सेट् । प० । पूलति । 'कूजति' (८५) वत् ।

पूष=वृद्धौ । १ । अक० । सेट् । प० । पूषति । 'कूजति' (८५) वत् । पूषा पूषणौ पूषणः ।

पृ=पालनपूरणयोः । ३ । सक० । अनिट् । प० । ऋकारान्तः । पिपर्ति । पिपृतः । पिप्रति । २. पिपर्तु । पिपृहि । पिपराणि । ३. अपिपः । अपिपृताम् । अपिपरुः । ५. पपार । म० । पपर्थ । ६. पर्ता । ७. परिष्यति । ८. प्रियात् । ९. अपार्षीत् । अपार्ष्टाम् ।

पृ=प्रीतौ [४८१] ५ । सक० । अनि० । प०। ऋकारन्तः । पृणोति ।

पृङ् (पृ)=व्यायामे । प्रायेणायं व्याङ्पूर्वः । ६ । अक० । अनि० । आ० । ऋकारान्तः । व्याप्रियते । ५. व्यापप्रे । ६. व्यापर्ता । ८. व्यापृषीष्ट । ९. व्यापृष्ट ।

पृच=संयमने । १० । सक० । सेट् । उ० । आधृषीयः । पर्चयति-ते ।

पृची (पृच्)=सम्पर्चने । २ । सक० । सेट् । आ० । पृक्ते । पृचाते । पृचते । म० पृक्षे । पृचाथे । पृग्ध्वे । २. पृक्ताम् । उ० । पर्चै । ३. अपृक्त । ४. पृचीत । ५. पपृचे । ६. पर्चिता । ८. पर्चिषीष्ट । ९. अपर्चिष्ट । पृक्तः । पर्चितुम् ।

× पृची (पृच्)=सम्पर्चने [५५९] ७ । सक० । सेट् । प० । पृणक्ति ।

पृजि (पृञ्ज्)=सम्पर्चने । २ । सक० । सेट् । आ० । पृङ्क्ते । पृञ्जाते । पृञ्जते । णिजि' धातुवत् ।

पृड=सुखने । ६ । सक० । सेट् । प० । पृडति । ५. पपर्ड । 'तृपति' (५०२) वत् ।

पृण=प्रीणने । ६ । सक० । सेट् । प० । पृणति । 'तृपति' (५०२) वत् । लोकंपृणः ।

पृथ=प्रक्षेपे । १० । सक० । सेट् । उ० । पर्थयति–ते ।

पृषु (पृष्)=सेचनहिंसाक्लेशनेषु । १ । सक० । सेट् । प० । पर्षति 'वर्षति' (२०२) वत् । पृषन् पृषतौ । पृषन् पृषती पृषन्ति । पुरीषम् ।

× पॄ=पालनपूरणयोः [३८४] ३ । सक० । सेट् । प० । पिपर्ति ।

× पॄ=पालनपूरणयोः [५७९] ९ । सक० । सेट् । प० । प्वादिः । ल्वादिश्च । पृणाति । परः परौ परे । पूः पुरौ पुरः ।

× पॄ=पूरणे [१०४] १० । सक० । सेट् । उ० । पारयति–ते ।

पेणृ (पेण्)=गतिप्रेरणश्लेषणेषु । सक० । सेट् । प० । पेणति । 'खेलति' (१५९) वत् ।

पेलृ (पेल्)=गतौ । १ । सक० । सेट् । प० । पेलति । 'खेलति' (१५९) वत् । पेला भुक्तसमुज्झितम् ।

पेवृ (पेव्)=सेवने । १ । सक० । सेट् । आ० । पेवते । 'देवति' (१५०) वत् ।

पेषृ (पेष्)=गतौ । १ । सक० । सेट् । आ० । पेषते 'देवति' (१५०) वत् ।

पेसृ (पेस्)=गतौ । १ । सक० । सेट् । प० । पेसति । 'खेलति' (१५९) वत् । पेस्वरः ।

पै=शोषणे । १ । सक० । अनि० । प० । ऐकारान्तः । पायति । 'गायति' (२७०) वत् ।

पैणृ (पैण्)=गतिप्रेरणश्लेषणेषु । १ । सक० । सेट् । प० । पैणति । ५. पिपैण । 'खेलति' (१५९) वत् ।

ओ प्यायी (प्याय्)=वृद्धौ । १ । अक० । सेट् । आ० । ओदित् । ईदिच्च । ५. पिप्ये । ६. प्यायिता । ८. प्यायिषीष्ट । ९. अप्यायि । **दीपजने**–ति चिण् । **यङि**— पेपीयते । **यङ्लुकि**— पाप्याति । पीनम् । **प्यायः पी निष्ठायाम्** । आपीनमूधः ।

प्यैङ् (प्यै)=वृद्धौ । १ । अक० । अनि० । आ० । प्यायते । ५. पप्ये । 'त्रायति' (२८९) वत् ।

× **प्रच्छ**=ज्ञीप्सायाम् [९२२] ६ । द्विकर्म० । अनि० । प० । पृच्छति । प्राट् । प्राच्छौ ।

× **प्रथ**=प्रख्याने [२२७] १ । अक० । सेट् । आ० । घटादिः । षित् । प्रथते ।

प्रथ=प्रख्याने । १० । सक० । सेट् । उ० । प्राथयति ते ।

प्रस=विस्तारे । १ । सक० । सेट् । आ० । घटादिः । षित् । प्रसते । 'प्रथति' (२२७) वत् ।

प्रा=पूरणे । २ । सक० । अनि० । प० । आकारान्तः । प्राति । 'याति' (३५६) वत् । प्रायः ।

× प्रीङ् (प्री)=प्रीतौ [४०८] ४ । अक० । अनि० । आ० । ईकारान्तः । प्रीयते ।

× प्रीञ् (प्री)=तर्पणे कान्तौ च [९६७] ९ । सक० । अनि० । उ० । ईकारान्तः । ञित् । प्रीणाति–प्रीणीते ।

प्रीञ् (प्री)=तर्पणे कान्तौ च । १० । सक० । सेट् । उ० । आधृषीयः । ईकारान्तः । प्रीणयति–ते । प्रयति-ते । मैत्रेयमते नुक् नास्ति । अतः प्राययति-ते । इति रूपम् ।

प्रुङ् (प्रु)=गतौ । १ । सक० । अनि० । आ० । प्रवते । 'कुङ्' धातुवत् । कटं प्रवते कटप्रूः । **णौ चङि— स्रवतिश्रृणोति** – अपिप्रवत्- अपुप्रवत् ।

प्रुड=मर्दने । १ । सक० । सेट् । प० । प्रोडति । 'शोचति' (७९) वत् ।

प्रुष=स्नेहनसेवनपूरणेषु । ९ । सक० । सेट् । प० । प्रुष्णाति । 'पुष्णाति' (९९६) वत् ।

प्रुषु (प्रुष्)=दाहे । १ । सक० । सेट् । प० । प्रोषति । 'चेटति' (१०६) वत् ।

प्रेषृ (प्रेष्)=गतौ । १ । सक० । सेट् । आ० । प्रेषते । 'देवति' (१५०) वत् । प्रेषयति । प्रेषणम् । प्रेष्यः ।

प्रैणृ (प्रैण्)=गतिप्रेरणश्लेषणेषु । १ । सक० । सेट् । प० । प्रैणति । 'खेलति' (१९९) वत् ।

प्रोथृ (प्रोथ्)=पर्याप्तौ । १ । अक० । सेट् । उ० । प्रोथति-ते । ५. पुप्रोथ-पुप्रोथे । ६. प्रोथिता । ७. प्रोथिष्यति-ते । ८. प्रोथ्यात्-प्रोथिषीष्ट । ९. अप्रोथीत्-अप्रोथिष्ट ।

प्लिह=गतौ । १ । सक० । सेट् । आ० । प्लेहते । २. प्लेहताम् । ५. पिप्लिहे । ६. प्लेहिता । ८. प्लेहिषीष्ट । ९. अप्लेहिष्ट । प्लिहितः । प्लीहा । प्लीहानौ । 'क्ष्विदा' धातुवत् ।

प्ली=गतौ । ९ । सक० । अनि० । प० । प्वादिः । ल्वादिश्च । प्लिनाति । 'व्रीणाति' (९८६) वत् । प्लीनः ।

प्लुङ् (प्लु)=गतौ । जलोपरिसर्पणे च । १ । सक० । अनि० । आ० । प्लवते । ५. पुप्लुवे । 'कुङ्' धातुवत् । प्लवगः । प्लवः=उडुपम् । मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्ते ।

× प्लुष=दाहे । [३९६] ४ । सक० । सेट् । प० । पुषादिः । प्लुष्यति ।

प्लुष=दाहे । ४ । सक० । सेट् । प० । पुषादिभिन्नः । ९. अप्लोषीत् । शेषं पूर्ववत् ।

प्लुष=दाहे । ९ । सक० । सेट् । प० । प्लुष्णाति । 'मुष्णाति' (९९७) वत् ।

प्लुषु (प्लुष्)=दाहे । १ । सक० । सेट् । प० । उदित् । प्लोषति । ५. पुप्लोष । 'शोचति' (७६) वत् । प्लुषित्वा-प्लोषित्वा । प्लुष्टः ।

प्सा=रक्षणभक्षणयोः । २ । सक० । अनि० । प० । आकारान्तः । प्साति । ५. पप्सौ । 'पाति' (३६२) वत् ।

## फ

× फक्क=नीचैर्गतौ [६१] १ । सक० । सेट् । प० । फक्कति ।

फण=गतौ । १ । सक० । सेट् । प० । फणादिः । घटादिश्च । फणति । ५. पफाण । **फणां च सप्तानाम्** । पफणतुः-फेणतुः । पफणुः-

फेणुः । म० पफणिथ-फेणिथ । उ० पफाण पफण । पफणिव-फेणिव । 'गदति' (३७) वत् । फाण्टम् अनायासकृतं कषायविशेषो वा

फर्व=पूरणे । १ । सक० । सेट् । प० । फर्वति । 'नर्दति' (४१) वत् ।

×फल=निष्पत्तौ [१९७] १ । अक० । सेट् । प० । फलति 'रदति' (३८) वत् ।

×ञिफला (फल्)=विशरणे [१९३] १ । अक० । सेट् । प० । फलति ।

फुल=सञ्चरणे । ६ । अक० । सेट् । प० । कुटादिः । फुलति । 'कुच' धातुवत् ।

×फुल्ल=विकसने [१५८] १ । अक० । सेट् । प० । फुल्लति ।

फेल्ट (फेल्)=गतौ । १ । सक० । सेट् । प० । फेलति । ५. पिफेल । 'खेलति' (१९९) वत् ।

## ब

बण=शब्दे । १ । अक० । सेट् । प० । बणति । ५. बबाण । बेणतुः । 'रदति' (३८) वत् । बाणः ।

बद=स्थैर्ये । १ । अक० । सेट् । प० । बदति । ५. बबाद । बेदतुः । 'रदति' (३८) वत् । बदरम् ।

×बध=बन्धने [२९६] १ । सक० । सेट् । आ० । बीभत्सते ।

बध=संमयने । १० । सक० । सेट् । उ० । बाधयति-ते ।

×बन्ध=बन्धने [५८८] ९ । सक० । अनि० । प० । बध्नाति ।

बन्ध=संयमने । १० । सक० । सेट् । प० । छान्दसः । बन्धयति-ते ।

बर्ब=गतौ । १ । सक० । सेट् । प० । बर्बति । 'नर्दति' (४१) वत् ।

बर्ह=प्राधान्यपरिभाषणहिंसाप्रसादेषु । १ । सक० । सेट् । आ० । बर्हते । ५. बबर्हे । 'कत्थति' (२६) वत् । बर्हः । बर्ही ।

बर्ह=हिंसायाम् । भाषायां च । १० । सक० । सेट् । उ० । बर्ह-
यति–ते ।

×**बल**=प्राणने । धान्यावरोधे च [२३८] १ । सक० । सेट् । प० ।
बलति । ५. बबाल । बेलतुः । 'रदति' (३८) वत् । बलम् ।
बली ।

बल=प्राणने । १० । सक० । सेट् । उ० । ज्ञपादित्वान्मित् । बल-
यति–ते ।

बल्ह=प्राधान्यपरिभाषणहिंसाप्रसादेषु । १ । सक० । सेट् । आ० ।
बल्हते । ५. । बबल्हे । 'कत्थति' (२६)वत् ।

बल्ह=भाषायाम् । १० । सक० । सेट् । उ० । बल्हयति–ते ।

बष्क=दर्शने । १० । सक० । सेट् । उ० । बष्कयति–ते । बष्क-
यणी=चिरसूता गौः ।

बसु (बस्)=स्तम्भे । ४ । अक० । सेट् । प० । पुषादिः । बस्यति ।
५. बबास । बेसतुः । 'यस्यति' (४५७) वत् ।

बहि (बंह्)=वृद्धौ । १ । अक० । सेट् । प० । बंहते । ५. बबंहे ।
'कम्पति' (११८) वत् । बहुः । **लघिबंह्योर्नलोपश्च** ।

बाडृ (बाड्)=आप्लाव्ये । १ । अक० । सेट् । आ० । बाडते । ५.
बबाडे । 'गाधति' (४) वत् ।

×**बाधृ** (बाध्)=लोडने [५] १ । सक० । सेट् । आ० । बाधते ।

बाहृ (बाह्)=प्रयत्ने । १ । अक० । सेट् । आ० । बाहते । 'बाधति'
(५) वत् । बाढं भृशम् । **क्षुब्धस्वान्ते**–ति । निपातः ।

बिट=आक्रोशे । १ । अक० । सेट् । प० । बेटति । ५. बिबेट ।
बिबिटतुः । 'चेटति' (१०६) वत् ।

बिदि (बिन्द्)=अवयवे । १ । अक० । सेट् । प० । बिन्दति । 'कुन्थति' (३२) वत् । बिन्दुः ; बाहुलकादुप्रत्ययः ।

बिल=भेदने । ६ । सक० । सेट् । प० । बिलति । ५. बिबेल । बिबिलतुः । 'लिखति' (९०८) वत् । बिलम् । कप्रत्ययः ।

बिस=क्षेपे । ४ । सक० । सेट् । प० । पुषादिः । बिस्यति । ५. बिबेस । बिबिसतुः । 'कुस्यति' (४९८) वत् । बिसम् ; कः । बिस्तः ; स्तन् ।

× बुक्क=भषणे [६३] १ । अक० । सेट् । प० । बुक्कति ।

बुक्क=भषणे । १० । सक० । सेट् । उ० । बुक्कयति–ते ।

बुगि (बुङ्ग्)=वर्जने । १ । सक० । सेट् । प० । बुङ्गति । 'कुन्थति' (३२) वत् ।

× बुध=बोधने [२४९] १ । सक० । सेट् । प० । बोधति । बोधित्वा–बुधित्वा । **रलो व्युपधा**—दिति वा कित् ।

× बुध=अवगमे [४१४] ४ । सक० । अनि० । आ० । बुध्यते । बुबुधानः बोद्धुमिच्छुः । **मुचिबुधिभ्यां सन्वच्च** । बुधानः=आनच् ।

बुधिर् (बुध्)=बोधने [२९४] १ । सक० । सेट् । उ० । इरित् । बोधति–ते ।

उबुन्दिर् (बुन्द्)=निशामने । १ । सक० । सेट् । उ० । इरित् । बुन्दति–ते । ५. बुबुन्द–बुबुन्दे । ९. अबुदत्–अबुन्दीत् । अबुन्दिष्ट । बुन्दित्वा–बुन्त्वा । बुन्नम् । बुद्बुदम् ।

बुस=उत्सर्गे । ४ । सक० । सेट् । प० । पुषादिः । बुस्यति । ५. बुबोस । बुबुसतुः । 'कुस्यति' (४९८) वत् । बुसम् ।

बुस्त=आदरानादरयोः । १० । सक० । सेट् । उ० । बुस्तयति–ते ।

बृह=वृद्धौ । १ । अक० । सेट् । प० । बर्हति । ५. बबर्ह ।

(२०२) वत्। **वर्तमाने पृषद्बृहज्जगच्छतृवच्च**। बृहन् बृहन्तौ

× **बृहि** (बृंह्)=वृद्धौ [२०९] १। अक०। सेट्। प०। बृंहति। प्रभौ परिबृढः। ब्रह्म। **बृंहेर्नोऽच्च**।

बृहि (बृंह्)=भाषायाम्। १०। सक०। सेट्। उ०। बृंहयति-ते।

बृहिर् (बृह्)=१। अक०। सेट्। प०। बर्हति। ९. अबृहत्-अबर्हीत्। 'वर्षति' (२०२) वत्।

बृह्ह (बृह्)=उद्यमने। ६। सक०। वेट्। प०। बृहति। ५. बबर्ह। 'तृह्ह) धातुवत्।

बेहृ (बेह्)=प्रयत्ने। १। अक०। सेट्। आ०। बेहते। ५. बिबेहे। 'देवति' (१९०) वत्।

ब्युस=विभागे। ४। सक०। सेट्। प०। ब्युस्यति। 'कुस्यति' (४९८) वत्।

ब्रुड=संवरणे। ६। सक०। सेट्। प०। कुटादिः। ब्रुडति। ५. बुब्रोड। 'कुच' धातुवत्।

× **ब्रूञ्** (ब्रू)=व्यक्तायां वाचि [३९१] २। द्विकर्म०। सेट्। वच्यादेशे त्वनिट्। उ०। ब्रवीति-आह-ब्रूते।

=हिंसायाम्। १०। सक०। सेट्। उ०। ब्रूसयति-ते।

## भ

भक्ष=अदने। १। सक०। सेट्। प०। भक्षति। 'भ्रक्ष' धातुवत्।

× **भक्ष**=अदने [६०६] १०। सक०। सेट्। उ०। भक्षयति-ते।

× **भज**=सेवायाम् ]३१४] १। सक०। अनि०। उ०। भजति-ते।
विभक्तव्यः। विभाज्यः। भगः=भाग्यम्। भक्तिः।

भज=विश्राणने । १० । सक० । सेट् । उ० । भाजयति-ते । ९. अबीभजत्-त ।

भजि (भञ्ज्)=भाषायाम् । १० । सक० । सेट् । उ० । भञ्जयति-ते ।

× **भञ्जो** (भञ्ज्)=आमर्दने [५५१] ७ । सक० । अनि० । प० । ओदित् । भनक्ति । **भञ्जभासमिदो घुरच्** । भङ्गुरः ।

भट=भृतौ । १ । सक० । सेट् । प० । भटति । ५. बभाट । बभटतुः । 'गदति' (३७) वत् । भटः । भटित्रम् ।

भट=परिभाषणे । परिहासः सनिन्दोपालम्भश्च परिभाषणम् । १ । सक० । सेट् । प० । भटति । अयं मित् । भटयति-ते । 'गदति' (३७) वत् ।

भडि(भण्ड्)=परिभाषणे । १ । सक० । सेट् । आ० । भण्डते । 'वन्दति' (९) वत् ।

× **भण**=शब्दे [१३१] १ । सक० । सेट् । प० । भणति । भाण्डम् ।

× **भदि** (भन्द्)=कल्याणे सुखे च [१०] १ । अक० । सेट् । आ० । भन्दते ।

भर्त्स=तर्जने । १० । सक० । सेट् । आ० । आकुस्मीयः । भर्त्सयते ।

भर्व=हिंसायाम् । १ । सक० । सेट् । प० । भर्वति । 'नर्दति' (४१) वत् ।

भल=परिभाषणहिंसादानेषु । १ । सक० । सेट् । आ० । भलते । ५. बभले । 'कलति' (१४९) वत् ।

भल=आभण्डने । १० । सक० । सेट् । उ० । भालयति-ते ।

भल्ल=परिभाषणहिंसादानेषु । १ । सक० । सेट् । आ० । भल्लते । ५. बभल्ले । 'कत्थति' (२६) वत् ।

भष=भर्त्सने । इह भर्त्सनं श्वरवः । १ । अक० । सेट् । प० । भषति । 'गदति' (३७) वत् । भषकः ।

भस=भर्त्सनदीप्त्योः । ३ । भर्त्सने सकर्म० । दीप्तावकर्म० । सेट् । छान्दसः । बभस्ति । बब्धः । बप्सति । २. बभस्तु-बब्धात् । बब्धाम् । म० । बब्धि । उ० । बभसानि । ३. अबभः । अबब्धाम् । अबप्सुः । ४. बप्स्यात् । बप्स्याताम् । ५. बभास । बप्सतुः । ६. भसिता । ८. भस्यात् । भस्यास्ताम् । ९. अभासीत् । अभासिष्टाम् । भस्म । भस्त्रिका । भस्त्रा । न बभस्तीति नभः ।

× **भा**=दीप्तौ [३९८] २ । अक० । अनि० । प० । भाति ।

× **भाज**=पृथक्करणे [६४९] १० । सक० । सेट् । उ० । अदन्तः । भाजयति-ते । विभागः ।

× **भाम**=क्रोधे [१३२] १ । अक० । सेट् । आ० । भामते ।

भाम=क्रोधे । १० । अक० । सेट् । उ० । अदन्तः । भामयति-ते ।

× **भाष**=व्यक्तायां वाचि [१७९] १ । द्विकर्म० । सेट् । आ० । भाषते । माणवकं धर्मं भाषते ।

× **भासृ** (भास्)=दीप्तौ [१८०] १ । अक० । सेट् । आ० । भासते ।

× **भिक्ष**=भिक्षायाम् [१७४] १ । द्विक० । सेट् । आ० । भिक्षते । बलिं भिक्षते वसुधाम् ।

भिदि (भिन्द्)=अवयवे । १ । अक० । सेट् । प० । भिन्दति । 'क्लिन्दति' (५१) वत् ।

× **भिदिर्** (भिद्)=विदारणे [५४०] ७ । सक० । अनि० । उ० । इदित् । भिनत्ति-भिन्ते ।

भिषज्=चिकित्सायाम् । ११ । भिषज्यति । भिषक्=वैद्यः ।

× ञिभी (भी)=भये [३८२] ३ । अक० । अनि० । प० । ईकारान्तः । ञीत् । बिभेति ।

× भुज=पालनाभ्यवहारयोः [५५२] ७ । सक० । अनि० । प० । भुनक्ति ।

भुजो (भुज्)=कौटिल्ये । ६ । अक० । अनि० । प० । ओदित् । भुजति । ५. बुभोज । म० बुभोजिथ । ६. भोक्ता । ७. भोक्ष्यति । ८. भुज्यात् । भुज्यास्ताम् । ९. अभौक्षीत् । अभौक्ताम् । ओदितश्च । भुग्नः ।

भुरण=धारणपोषणयोः । ११ । भुरण्यति ।

भुव=अवकल्कने । अवकल्कनं मिश्रीकरणं चिन्तनं वा । १० । सक० । सेट् । उ० । भावयति—ते । भुवोऽवकल्कने । अवकल्कनेऽर्थे णिच् ।

× भू=सत्तायाम् [१] १ । अक० । सेट् । प० । भवति ।

× भू=प्राप्तौ [१३३८] १० । सक० । सेट् । आ० । आधृषीयः । भावयते । भवति—ते ।

× भूष=अलङ्कारे [१९९] १ । सक० । सेट् । प० । भूषति ।

भूष=अलङ्करणे । १० । सक० । सेट् । उ० । भूषयति—ते । भूषा । भूषणम् ।

× भृजी (भृज्)=भर्जने [७३] १ । सक० । सेट् । आ० । भर्जते ।

× भृञ् (भृ)=भरणे [२६०] १ । सक० । अनि० । उ० । भरति—ते । भृङ्गारः ।

× डुभृञ् (भृ)=धारणपोषणयोः [३८५] ३ । सक० । अनि० । उ० । ञित् । ड्वित् । बिभर्ति—बिभृते ।

भृड=निमज्जने । ६ । अक० । सेट् । प० । कुटादिः । भृडति । ५. बभर्ड । 'कुड' धातुवत् ।

भृशि (भृंश्)=भाषायाम् । १० । सक० । सेट् । उ० । भृंशयति ।

भृशु (भृश्)=अधःपतने । ४ । अक० । सेट् । प० । पुषादिः । भृश्यति । 'हृष्यति' (४६३) वत् । भृशम् ।

भॄ=भर्त्सने । भरण इत्येके । वयोहानावित्यपरे । ९ । सक० । सेट् । प० । ॠकारान्तः । प्वादिः । ल्वादिश्च । भृणाति । भूर्णः । परस्मैपदि—'स्तृणाति' (५७४) वत् ।

भेषृ (भेष्)=भये । गतावित्येके । १ । अक० । सेट् । उ० । भेषति-ते । 'णेद्दृ' धातुवत् ।

भ्यस=भये । १ । अक० । सेट् । आ० । भ्यसते । ५. बभ्यसे । 'स्वदति' (१६) वत् ।

भ्रंशु (भ्रंश्)=अवस्रंसने । १ । अक० । सेट् । आ० । द्युतादिः । भ्रंशते । 'स्रंसति' (२१८) वत् । भ्रंशः ।

× भ्रंशु (भ्रंश्)=अवस्रंसने [४१०] ४ । अक० । सेट् । प० । पुषादिः । भ्रश्यति ।

भ्रंसु (भ्रंस्)=अवस्रंसने । प्रथम 'भ्रंशु' वत् ।

भ्रक्ष=अदने । १ । सक० । सेट् । उ० । भ्रक्षति-ते । २. भ्रक्षतु-ताम् । ३. अभ्रक्षत्-त । ५. बभ्रक्ष-बभ्रक्षे । ६. भ्रक्षिता । ७. भ्रक्षिष्यति-ते । ८. भ्रक्ष्यात्-भ्रक्षिषीष्ट । ९. अभ्राक्षीत्-अभ्रक्षीत्-अभ्रक्षिष्ट ।

भ्रण=शब्दे । १ । सक० । सेट् । प० । भ्रणति । ५. बभ्राण । बभ्रणतुः । 'कणति' (१३९) वत् ।

× भ्रमु (भ्रम्)=चलने । [२४२] १ । अक० । सेट् । प० । उदित् भ्रमति-भ्रम्यति । भ्रूः । भ्रमरः ।

× **भ्रमु** (भ्रम् )=अनवस्थाने [४९२] ४ । अक० । सेट् । प० । उदित् । भ्राम्यति–भ्रमति ।

भ्रशु (भ्रश् )=अवस्रंसने । ४ । अक० । सेट् । प० । भ्रश्यति । ५. बभ्राश । बभ्रशतुः । 'क्रसु' धातुवत् ।

× **भ्रस्ज**=पाके [४९२] ६ । सक० । अनि० । उ० । भृज्जति–ते ।

× **भ्राजृ**(भ्राज् )=दीप्तौ [७९] १ । अक० । सेट् । आ० । भ्राजते । ५. बभ्राजे । बभ्राजाते ।

टुभ्राजृ(भ्राज् )=दीप्तौ । १ । अक० । सेट् । आ० । ऋकारान्तः । ट्वित् । फणादिः । भ्राजते । ५. भ्रेजे । भ्रेजाते । भ्रेजिरे । बभ्राजे । बभ्राजाते । बभ्राजिरे । शेषं पूर्ववत् । नभ्राट् । भ्राता । भ्राजथुः ।

टुभ्राश्(भ्राश् )=दीप्तौ । १ । अक० । सेट् । आ० । फणादिः । **वा भ्राशभ्लाशे**–ति वा श्यन् । भ्राश्यते–भ्राशते । २. भ्राश्यताम्–भ्राशताम् । ३. अभ्राश्यत–अभ्राशत । ४. भ्राश्येत–भ्राशेत । ५. भ्रेशे । भ्रेशाते । बभ्राशे । बभ्राशाते । शेषं 'भ्राजति' (७९) वत् ।

भ्री=भये । भरण इत्येके । ९ । अक० । अनि० । प० । प्वादिः । भ्रिणाति । केषाञ्चिन्मतेऽस्य प्वादित्वं नास्ति । तदा भ्रीणाति । 'क्रीणाति' (९८६) वत् ।

भ्रूण=आशाविशङ्कनयोः । १० । सक० । सेट् । आ० । आकुस्मीयः । भ्रूणयते ।

भ्रेजृ (भ्रेज् )=दीप्तौ । १ । अक० । सेट् । आ० । भ्रेजते । बिभ्रेजे । 'देवति' (१९०) वत् ।

भ्रेषृ (भ्रेष् )=भये गतौ च । १ । अक० । सेट् । उ० । भ्रेषति–ते । 'णेट्ट' धातुवत् । भ्रेषः ।

भ्लक्ष=अदने। १। सक०। सेट्। उ०। भ्लक्षति-ते। 'भ्रक्ष' धातुवत्।

टुभ्लाशृ(भ्लाश्)=दीप्तौ। १। अक०। सेट्। आ०। फणादिः। भ्लाश्यते-भ्लाशते। 'भ्राशृ' धातुवत्।

भ्लेषृ(भ्लेष्)=गतौ। १। सक०। सेट्। उ०। भ्लेषति-ते। 'णेद्द' धातुवत्।

## म

मकि(मङ्क्)=मण्डने। १। सक०। सेट्। आ०। मङ्कते। 'कम्पति' (११८) वत्।

मख=गतौ। १। सक०। सेट्। प०। मखति। ५. ममाख। मेखतुः। 'रदति' (३८) वत्। मखो यज्ञः।

मखि(मङ्ख्)=गतौ। १। सक०। सेट्। प०। मङ्खति। ५. ममङ्ख। 'क्रन्दति' (९०) वत्।

मगध=परिवेष्टने। नीचदास्य इत्येके। ११। मगध्यति।

मगि(मङ्ग्)=गतौ। १। सक०। सेट्। प०। मङ्गति। 'क्रन्दति' (९०) वत्। मङ्गलम्।

मघि(मङ्घ्)=गत्याक्षेपे कैतवे च। गतौ गत्यारम्भे चेत्यन्ये। १। सक०। सेट्। आ०। मङ्घते। 'कम्पति' (११८) वत्।

मघि(मङ्घ्)=मण्डने। १। सक०। सेट्। प०। मङ्घति। 'क्रन्दति' (९०) वत्।

मच=दम्भे। १। अक०। सेट्। आ०। मचते। ५. मेचे। 'चकति' (५७) वत्।

मचि(मञ्च्)=धारणोच्छ्रायपूजनेषु। १। सक०। सेट्। आ०। मञ्चते। 'कम्पति' (११८) वत्। मञ्चः=खट्वा।

मज=मदने शब्दे च । १ । अक० । सेट् । प० । मजति । ५. ममाज । मेजतुः । 'रदति' (३८) वत् ।

मजि (मञ्ज्)=शब्दे । १ । अक० । सेट् । प० । मञ्जति । 'क्रन्दति' (५०) वत् । मञ्जु । मञ्जुलम् ।

मठ=मदनिवासयोः । १ । अक० । सेट् । प० । मठति । ५. ममाठ । मेठतुः । 'रदति' (३८) वत् । मठः=छात्रादिनिलयः ।

मठि (मण्ठ्)=शोके । शोक इह आध्यानम् । १ । अक० । सेट् । आ० । मण्ठते । 'कम्पति' (११८) वत् । मातुर्मण्ठते ।

मडि (मण्ड्)=विभाजने । १ । सक० । सेट् । आ० । मण्डते । 'वन्दति' (९) वत् ।

× **मडि** (मण्ड्)=भूषायाम् [१०९] १ । सक० । सेट् । प० । मण्डति । मण्डः । दधिभवम् ।

× **मडि** (मण्ड्)=भूषायाम् हर्षे च [६११] १० । सक० । सेट् । उ० । मण्डयति-ते ।

मण=शब्दे । १ । अक० । सेट् । प० । मणति । ५. ममाण । मेणतुः । 'रदति' (३८) वत् । मणिः । मणितम् । मण्डम् ।

× **मत्रि** (मन्त्र्)=गुप्तभाषणे [६२२] १० । सक० । सेट् । आ० । आकुस्मीयः । मन्त्रयते । आमन्त्रणम्=कामचारानुज्ञा । निमन्त्रणम्=श्राद्धभोजने प्रवर्तनम् ।

मथि (मन्थ्)=हिंसासंक्लेशनयो । १ । सक० । सेट् । प० । मन्थति । 'क्रन्दति' (५०) वत् ।

मथे (मथ्)=विलोडने । १ । सक० । सेट् । प० । मथति । ५. ममाथ । मेथतुः । ९. अमथीत् । 'रदति' (३८) वत् ।

मद=तृप्तियोगे । १० । सक० । सेट् । आ० । आकुस्मीयः । मादयते ।

× **मदि** (मन्द् )=स्तुतिमोदमदस्वप्नकान्तिगतिषु [११] १ । कान्तिगत्योः सकर्म० । सेट् । आ० । मन्दते ।

× **मदी** (मद् )=हर्षे [४९९] ४ । अक० । सेट् । प० । ईदित् । शमादिः । पुषादिः । माद्यति । **जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्** । धर्मात्प्रमाद्यति ।

× **मन**=ज्ञाने [४२८] ४ । सक० । अनि० । आ० । अनुदात्तोपदेशः । मन्यते । मधुः । मधुरः ।

मनस्=उपतापे । ११ । मनस्यति ।

× **मनु** (मन् )=अवबोधने [५६४] ८ । सक० । सेट् । आ० । तनोत्यादिः । मनुते ।

× **मन्थ**=विलोडने [३१] १ । द्विक० । सेट् । प० । सुधां क्षीरनिधिं मन्थति ।

× **मन्थ**=विलोडने [५९१] ९ । द्विक० । सेट् । प० । सुधां क्षीरनिधिं मथ्नाति ।

मभ्र=गतौ । १ । सक० । सेट् । प० । मभ्रति । 'नर्दति' (४१) वत् ।

मय=गतौ । १ । सक० । सेट् । आ० । मयते । ९. मेये । 'दधति' (७) वत् ।

मर्च=शब्दे । १० । अक० । सेट् । उ० । मर्चयति-ते ।

मर्ब=गतौ । १ । सक० । सेट् । प० । मर्बति । 'नर्दति' (४१) वत् ।

मर्व=पूरणे । १ । सक० । सेट् । प० । मर्वति । 'नर्दति' (४१) वत् ।

मल=धारणे । १ । सक० । सेट् । आ० । मलते । 'चकति' (९७) वत् ।

मल्ल=धारणे । १ । सक० । सेट् । आ० । मल्लते । ममल्ले । 'कत्थति' (२६) वत् ।

मव=बन्धने । १ । सक० । सेट् । प० । मवति । ५. ममाव । मेवतुः । 'रदति' (३८) वत् ।

मव्य=बन्धने । १ । सक० । सेट् । प० । मव्यति । ५. ममव्य । ६. मव्यिता । 'नर्दति' (४१) वत् ।

मश=शब्दे । रोषकृते छन्दने गतौ च । १ । सक० । सेट् । प० । मशति । 'रदति' (३८) वत् । मशकः ।

मष=हिंसायाम् । १ । सक० । सेट् । प० । मषति । 'रदति' (३८) वत् । मषी । मषिः ।

मसी=परिणामे । परिणामो विकारः । ४ । अक० । सेट् । प० । ईदित् । पुषादिः । मस्यति । ५. ममास । मेसतुः । ९. अमसत् । 'त्रस्यति' (१९८) वत् । मस्तः । मस्तु=दधिभवम् । मस्तकम् ।

मस्क=गतौ । १ । सक० । सेट् । आ० । मस्कते । 'कत्थति' (२६) वत् । मस्करो=वेणुः । मस्करी=भिक्षुः ।

×**टुमस्जो** (मस्ज्)=शुद्धौ [१२४] ६ । अक० । अनि० । प० । ओदित् । ट्विच्च । मज्जति । मज्जथुः ।

×**मह**=पूजायाम् । [२०७] १ । सक० । सेट् । उ० । महति । मघवा । **श्वन्नुक्षन्निति** निपातनात्साधुः । महान् महान्तौ महान्तः । मही । महिषः । महिषी=राज्ञी ।

मह=पूजायाम् । १० । स० । सेट् । उ० । अदन्तः । महयति-ते ।

×**महि** (मंह्)=वृद्धौ [१८९] १ । अक० । सेट् । आ० । मंहते ।

महि (मंह्)=भाषायाम् । १० । सक० । सेट् । उ० । मंहयति-ते ।

महीङ् (मही)=पूजायाम् । ११ । महीयते ।

×**मा**=माने [३६६] २ । सक० । अनि० । प० । आकारान्तः । माति । **सनिमीमाघु**-मित्सति । जामाता । **द्युतिस्यतिमास्था**-मितः ।

माक्षि (माङ्क्ष् )=काङ्क्षायाम् । १ । सक० । सेट् । प० । माङ्क्षति । 'काङ्क्षति' (१९१) वत् ।

× **माङ्** (मा)=माने शब्दे च [३८६] ३ । सक० । अनि० । आ० । आकारान्तः । भृञादिः । मिमीते । अर्यमा ।

माङ् (मा)=माने । ४ । सक० । अनि० । आ० । आकारान्तः । मायते । ५. ममे । ६. माता । ८. मासीष्ट । ९. अमास्त ।

× **मान**=पूजायाम् [२९५] १ । सक० । सेट् । आ० । नित्यसन्नन्तः । मीमांसते ।

मान=पूजायाम् । १० । सक० । सेट् । उ० । आधृषीयः । मानयति–ते । माता=अम्बा । मातरौ । मातरः ।

मान=स्तम्भे । १० । सक० । सेट् । आ० । आकुस्मीयः । मानयते । मानोऽहङ्कारः ।

मान्थ=हिंसासंक्लेशनयोः । १ । सक० । सेट् । प० । मान्थति । ५. ममान्थ । 'मन्थति' (३१) वत् ।

मार्ग=अन्वेषणे । १० । सक० । सेट् । उ० । आधृषीयः । मार्गयति–ते । मार्गः=पन्थाः ।

मार्ज=शुद्धौ । १० । सक० । सेट् । उ० । मार्जयति–ते ।

माह्ट (माह् )=माने । १ । सक० । सेट् । उ० । माहति–ते । ममाह–हे । 'चायृ' धातुवत् ।

मिच्छ=उत्क्लेशे । उत्क्लेशः=पीडा । ६ । सक० । सेट् । प० । मिच्छति । ५. मिमिच्छ । ७. मिच्छिष्यति । ९. अमिच्छीत् ।

मिजि (मिञ्ज् )=भाषायाम् । १० । सक० । सेट् । उ० । मिञ्जयति–ते ।

× डुमिञ् (मि) प्रक्षेपणे [४७३] सक० । अनि० । उ० । ञित् ड्वित्च । मिनोति–मिनुते । मित्रिमम् ।

मिथृ (मिथ्)=मेधाहिंसनयोः । १ । सक० । सेट् । उ० । मेथति-मेथते । ५. मिमेथ-मिमिथे । 'णिदृ' धातुवत् ।

ञिमिदा (मिद्)=स्नेहने । ४ । सक० । सेट् । प० । ञीत् । पुषादिः । मेद्यति । 'ञिक्ष्विदा' धातुवत् । मेदुरः । मिन्नः । मेदः ।

मिदि (मिन्द्)=स्नेहने । १० । सक० । सेट् । उ० । मिन्दयति-ते ।

मिदृ (मिद्)=मेधाहिंसनयोः । १ । हिंसने सक० । सेट् । उ० । मेदति-ते । 'णेदृ' धातुवत् ।

मिधृ (मिध्)=पूर्ववत् । गृहमेधी ।

मिल=श्लेषणे । ६ । सक० । सेट् । प० । मिलति । मेलनम् । 'लिखति' (५०८) वत् ।

× मिल=सङ्गमे [५३१] ६ । अक० । सेट् । उ० । मिलति-ते ।

मिवि (मिन्व्)=सेचने । सेवन इत्येके । १ । सक० । सेट् । प० । मिन्वति । मिमिन्व । 'जिवि' धातुवत् ।

मिश=शब्दे रोषकृते बन्धने गतौ च । १ । सक० । सेट् । प० । मिशति । ५. मिमेश । मिमिशतु. । 'चेटति' (१०६) वत् ।

× मिश्र=सम्पर्के [६९६] १० । सक० । सेट् । उ० । अदन्तः । मिश्रयति--ते ।

मिष=स्पर्धायाम [२०७] ६ । अक० । सेट् । प० । मिषति ।

मिषु (मिष्)=सेचने । १ । सेवन इत्येके । सक० । सेट् । प० । मिषति । ५. मिमेष । मिमिषतुः । 'चेटति' (१०६) वत् । मिषित्वा-मिष्ट्वा । मिष्ट ।

× मिह=सेचने [३११] १ । सक० । अनि० । प० । मेहति ।

मी=गतौ । १० । सक० । सेट् । उ० । ईकारान्तः । आधृषीयः । माययति- ते ।

मीङ् (मी)=हिंसायाम् । हिंसाऽत्र प्राणवियोगः । ४ । अक० । अनि० । आ० । ईकारान्तः । ओदित् । मीयते । ५. मिम्ये । ६. मेता । ७. मेष्यते । ८. मेषीष्ट । ९. अमेष्ट । **सनि**—मित्सते । मीत्वा । मीनः ।

×**मीञ्** (मी)=हिंसायाम् [९६९] ९ । सक० । अनि० । उ० । ञित् । ईकारान्तः । मीनाति–मीनीते । मयूरः ।

मीमृ(मीम्)=गतौ । १ । सक० । सेट् । प० । ऋदित् । मीमति । ५. मिमीम । मिमीमतुः । ६. मीमिता । ९. अमीमीत् । 'क्रीडति' (११४) वत् ।

×**मील**=निमेषणे [१५४] १ । सक० । सेट् । प० । मीलति ।

मीव=स्थौल्ये । १ । अक० । सेट् । प० । मीवति । 'जीवति' (१६५) वत् ।

मुच=प्रमोचने । १० । सक० । सेट् । उ० । मोचयति–ते ।

मुचि(मुञ्च्)=कल्कने । कल्कनं शाठ्यं दम्भश्च । १ । अक० । सेट् । आ० । मुञ्चते । २. मुञ्चताम् । ५. मुमुञ्चे । 'स्कुन्दति' (८) वत् ।

मुचु (मुच्)=गतौ । १ । सक० । सेट् । प० । मोचति । ५. मुमोच । मुमुचतुः । 'शोचति' (७६) वत् । मोचित्वा–मुक्त्वा । मुक्तः ।

×**मुच्लृ** (मुच्)=मोचने [५३२] ६ । सक० । अनि० । उ० । मुञ्चति–ते । **मुचोऽकर्मकस्य गुणो वा** । मोक्षते–मुमुक्षते वा वत्सः स्वयमेव ।

मुज=शब्दे । १ । अक० । सेट् । प० । मोजति । 'शोचति' (७६) वत् ।

मुजि (मुञ्ज्)=शब्दे । १ । अक० । सेट् । प० । मुञ्जति । 'कुञ्चति' (७७) वत् । ८. मुञ्च्यात् । मुञ्जः=तृणविशेषः ।

मुट=मर्दने । १ । सक० । सेट् । प० । मोटति । 'शोचति' (७६) वत् ।

मुट=आक्षेपमर्दनबन्धनेषु । ६ । सक० । सेट् । प० । कुटादिः । मुटति । मुमोट । 'कुच' धातुवत् ।

मुट=संचूर्णने । १० । सक० । सेट् । उ० । मोटयति–ते ।

मुठि (मुण्ठ्)=पालने । १ । सक० । सेट् । आ० । मुण्ठते । ५. मुमुण्ठे । 'स्कुन्दति' (८) वत् ।

×मुडि (मुण्ड्)=खण्डने [१११] १ । सक० । सेट् । प० । मुण्डति ।

मुडि (मुण्ड्)=मार्जने । १ । सक० । सेट् । आ० । मुण्डते । ५. मुमुण्डे । 'स्कुन्दति' (८) वत् ।

मुण=प्रतिज्ञाने । ६ । सक० । सेट् । प० । मुणति । 'कुच' धातुवत् ।

×मुद=हर्षे [१४] १ । अक० । सेट् । आ० । मोदते । मुद्रा । स्फायितञ्चीत्यादिना रक् ।

मुद=संसर्गे । १० । सक० । सेट् । उ० । मोदयति–ते । मोदयति सक्तून्घृतेन ।

मुर=संवेष्टने । ६ । सक० । सेट् । प० । मुरति । 'कुच' धातुवत् । ८. मूर्यात् । मुरः । मुरारिः ।

×मुच्छा (मुच्छे)=मोहसमुच्छ्राययोः [८३] १ । अक० । सेट् । प० । आकारान्तः । मूर्च्छति ।

मुर्वी (मुर्व्)=बन्धने । १ । सक० । सेट् । प० । ईदित् । मूर्वति । ५. मुमूर्व । 'गुर्वी' धातुवत् । मुर्वा । मौर्वी । मूर्णः ।

×मुष=स्तेये [ ९९७] ९ । सक० । सेट् । प० । मुष्णाति । मूषकः ।

मुस=खण्डने । ४ । सक० । सेट् । प० । पुषादिः । मुस्यति । 'कुस्यति' (४९८) वत् । मुसलम् । मुसली । मुस्ता ।

×मुह=वैचित्त्ये [४४६] ४ । अक० । सेट् । रधादित्वाद्वेट् । पुषादिः ।

मूङ् (मू)=बन्धने । १ । सक० । सेट् । आ० । ऊकारान्तः । मवते । ५. मुमुवे । ६. मविता । 'पवति' (२९०) वत् ।

× **मूत्र**=प्रस्रवणे [६५५] । १० । अक० । सेट् । उ० । अदन्तः । मूत्रयति-ते ।

× **मूल**=प्रतिष्ठायाम् [१५६] १ । अक० । सेट् । प० । मूलति । मूलम् ।

× **मूल**=रोहणे [६१६] १० । सक० । सेट् । उ० । मूलयति-ते ।

मूष=स्तेये । १ । सक० । सेट् । प० । मूषति । 'कूजति' (८५) वत् ।

मृक्ष=संघाते । १ । अक० । सेट् । प० । मृक्षति । ५. ममृक्ष । 'नर्दति' (४१) वत् ।

× **मृग**=अन्वेषणे [६५२] १० । सक० । सेट् । आ० । अदन्तः । आगर्वीयः । मृगयते ।

× **मृङ्** (मृ)=प्राणत्यागे [५१९] ६ । अक० । अनि० । आ० । अयं लिट् लुट् लृट्सु परस्मैपदी । ऋकारान्तः । म्रियते ।

× **मृजू** (मृज्)=शुद्धौ [३७०] २ । सक० । वेट् । प० । ऊदित् । मार्ष्टि ।

मृजू (मृज्)=शुद्धौ अलङ्कारे च । १० । सक० । सेट् । उ० । आधृषीयः । ऊदित् । मार्जयति-ते ।

× **मृड**=सुखने [५०४] ६ । सक० । सेट् । प० । मृडति । मृडित्वा । **मृडमृधे**-ति कित् । मृडो=रुद्रः । मृडानी । मृडीकम् ।

मृड=क्षोदे । ९ । सक० । सेट् । प० । मृड्णाति । 'मृद्नाति' (५९३) वत् ।

मृण=हिंसायाम् । ६ । सक० । सेट् । प० । मृणति । 'मृडति' (५०४) वत् । मृणालम् ।

मृद=मर्दने । १ । सक० । सेट् । आ० । घटादिः । षित् । मर्दते ।

×मृद=क्षोदे। (५९३) ९। सक०। सेट्। प०। मृद्नाति।

मृधु (मृध्)=उन्दने। उन्दनं=क्लेदनम्। १। सक०। सेट्। उदित्। उ० मर्धति। ५. ममर्ध। मर्धते—ममृधे। 'वर्षति' (२०२) वत् मृधित्वा—मृद्ध्वा।

×मृश=आमर्शने [५२८] ६। सक०। अनि०। प०। मृशति परामृशति। विमृशति=आलोचयति।

×मृष=तितिक्षायाम् [४१८] ४। सक०। सेट्। उ०। मृष्यति—ते। दुर्मर्षणः।

मृष=तितिक्षायाम्। १०। सक०। सेट्। उ०। आधृषीयः। मर्षयति—ते।

मृषु (मृष्)=सेचने। १। सक०। सेट्। प०। उदित्। मर्षति। ५. ममर्ष। 'वर्षति' (२०२) वत्। मृषित्वा—मर्षित्वा—मृष्ट्वा। मृष्टम्।

मॄ=हिंसायाम्। ९। सक०। सेट्। प०। प्वादिः। ल्वादिश्च। ॠकारान्तः। मृणाति। ५. ममार। ममरतुः। ८. मूर्यात्। 'मृणाति' (९७९) वत्। मूर्णः।

मेङ् (मे)=प्रत्यर्पणे विनिमये च। १। सक०। अनि०। आ०। एकारान्तः। मयते। प्रणिमयते। ५. ममे। म० ममिषे। उ० ममिवहे। ६. माता। ७. मास्यते। ८. मासीष्ट। ९. अमास्त। अमासाताम्। **द्यतिस्यतिमास्था**—मितः। मातव्यः। मेयः। मानम्। मित्वा। मातुम्।

मेथृ (मेथ्)=मेधाहिंसनयोः। १। हिंसने सक०। सेट्। उ०। ऋदित्। मेथति—ते। 'मेधति' (२९३) वत्। मिथुनम्। **क्षुधिपिशिमिथिभ्यः कित्**। उनन्।

मेदृ (मेद्)=पूर्ववत्। ऋदित्।

मेधा=आशुग्रहणे । ११ । मेधायति ।

× मेधृ (मेध्)=मेधाहिंसनयोः संगमे च [२९३] १ । हिंसने सक० । सेट् । उ० । ऋदित् । मेधति-ते । गृहमेधी ।

मेपृ (मेप्)=गतौ । १ । सक० । सेट् । आ० । ऋदित् । मेपते । ५. मिमेपे । 'वेपति' (११६) वत् ।

मेवृ (मेव्)=सेवने । १ । सक० । सेट् । आ० । ऋदित् । मेवते । ५. मिमेवे । 'वेपति' (११६) वत् ।

× म्ना=अभ्यासे [२७६] १ । सक० । अनि० । प० । आकारान्तः । प्रायेणायमाङ्पूर्वः । आमनति ।

म्रक्ष=संघाते । १ । सक० । अनि० । प० । म्रक्षति । ५. मम्रक्ष । 'नर्दति' (४१) वत् ।

म्रक्ष=म्लेच्छने । १० । सक० । सेट् । उ० । म्रक्षयति-ते ।

म्रद=मर्दने । १ । सक० । सेट् । आ० । म्रदते । ५. मम्रदे । 'स्वदति' (१६) वत् । मृदुः । म्रदिमा । मृद्वीका=द्राक्षा ।

म्रुचु (म्रुच्)=गतौ । १ । सक० । सेट् । प० । उदित् । म्रोचति । ५. मुम्रोच । ९. जॄस्तम्भु-इत्यङ् वा । अम्रुचत्-अम्रोचीत् । 'शोचति' (७६) वत् ।

म्रुञ्चु (म्रुञ्च्)=गतौ । १ । सक० । सेट् । प० । उदित् । म्रुञ्चति । ५. मुम्रुञ्च । ९. अम्रुञ्चीत् । 'कुञ्चति' (७७) वत् ।

म्रेटृ (म्रेट्)=उन्मादे । १ । सक० । सेट् । प० । ऋदित् । म्रेटति । ५. मिम्रेट । 'खेलति' (१९९) वत् ।

म्रेडृ (म्रेड्)=उन्मादे । पूर्ववत् ।

म्लुचु (म्लुच्)=गतौ । १ । सक० । सेट् । प० । उदित् । म्लोचति ।

५. मुम्लोच । ९. अम्लुचत्—अम्लोचीत् । जॄस्तम्भु—इत्यङ् वा । 'शोचति' (७९) वत् । म्लुचितः-म्लुक्तः । निम्लोचति=अस्तमेति ।

म्लेच्छ=अव्यक्ते शब्दे । १ । अक० । सेट् । प० । म्लेच्छति । ५. मिम्लेच्छ । म्लिष्टम्=अविस्पष्टम् । क्षुब्धस्वान्तेति निपातः । 'खेलति' (१५९) वत् ।

म्लेच्छ=अव्यक्ते शब्दे । १० । अक० । सेट् । उ० । म्लेच्छयति-ते ।

म्लेटृ (म्लेट्)=उन्मादे । १ । 'म्रेटृ' धातुवत् । ऋदित् ।

म्लेडृ (म्लेड्)=उन्मादे । १ । 'म्रेटृ' धातुवत् । ऋदित् ।

म्लेवृ (म्लेव्)=सेवने । १ । सक० । सेट् । आ० । ऋदित् । म्लेवते । 'देवति' (१९०) वत् ।

× म्लै=हर्षक्षये [२१६] १ । अक० । अनि० । प० । ऐकारान्तः । म्लायति ।

## य

यक्ष=पूजायाम् । १० । सक० । सेट् । उ० । यक्षयति-ते । यक्षः । यक्ष्म ।

× यज=देवपूजासङ्गतिकरणयजनदानेषु [३१७] १ । सक० । अनि० । उ० । यजति-ते । यट् । यः यौ ये । यजुः ।

यत=निराकारोपस्कारयोः । १० । अक० । सेट् । उ० । यातयति-ते ।

× यती (यत्)=प्रयत्ने [२४] १ । अक० । सेट् । आ० । यतते । आयतते=वशीकरोति ।

× यत्रि (यन्त्र्)=सङ्कोचे [६०१] १० । सक० । सेट् । उ० । यन्त्रयति-ते । यन्त्रम् । यट् । यः यौ ये ।

यभ=मैथुने । १ । अक० । अनि० । प० । यभति । ५. ययाभ । येभतुः । 'रदति' (३८) वत् ।

× **यम**=उपरमे [२०३] १ । सक० । अनि० । प० । आयच्छते ।
**आङो यमहनः**–इत्यात्मनेपदम् । संयत्य -संयम्य । यन्ता=सारथिः ।

यम=परिवेषणे । परिवेषणं वेष्टनम् । १० । सक० । सेट् । उ० ।
यमयति–ते । ज्ञपादित्वान्मित् । **यमोऽपरिवेषणे । परिवेषण-**
**भिन्नेऽर्थे न मित्** । आयामयते ।

× **यसु**(यस्)=**प्रयत्ने** [४५७] ४ । अक० । सेट् । प० । उकारान्तः ।
यस्यति ।

× **या**=प्रापणे । प्रापणमिह गतिः [३९६] २ । सक० । अनि० । प० ।
आकारान्त. । याति । आयाति=आगच्छति । ग्रामादायाति । अपा-
दाने पञ्चमी । **यापोः कि द्वे च** । ई प्रत्ययः । ययीः=अश्वः । **यश्च**
**यञः** । यायावरः ।

× **टुयाचृ**(याच्)=याञ्चायाम् [२९२] १ । द्विकर्म० । सेट् । उ० ।
बलिं याचते–याचति वा हरिर्वसुधाम् ।

× **यु**=मिश्रणे अमिश्रणे च [३४१] २ । सक० । सेट् । प० । यौति ।
यूप । अवयौति=अवयवीभवति । वियौति=विश्लेषयति ।

यु=जुगुप्सायाम् । १० । अक० । सेट् । आ० । उकारान्तः । आकु-
स्मीयः । यावयते ।

युगि (युङ्ग् )=वर्जने । १ । सक० । सेट् । प० । युङ्गति । ५. युयुङ्ग ।
'कुन्थति' (३२) वत ।

युच्छ=प्रमादे । १ । अक० । सेट् । प० । युच्छति । ५. युयुच्छ ।
'खेलति' (१९९) वत ।

× **युज**=समाधौ । समाधिश्चित्तवृत्तिनिरोध. [४२९] ४ । अक० ।
अनि० । आ० । युज्यते ।

युज=संयमने । १० । सक० । सेट् । उ० । आधृषीयः । योजयति–ते ।

×**युजिर्** (युज् )=योगे [५४५] ७। सक०। अनि०। उ०। युनक्ति-युङ्क्ते। **युग्यं च पत्रे** युग्यो गौः। प्रयोक्तुं शक्यः प्रयोज्यः। नियोक्तुं शक्यो नियोज्यः। अन्यत्र योग्यः। युग्मम्। युगम्। युगलम्। अनुयुङ्क्ते=पृच्छति। नियुङ्क्ते=आज्ञापयति।

×**युञ्** (यु)=बन्धने [३७१] ९। सक०। अनि०। उ०। युनाति-युनीते।

युट्ट=अल्पीभावे। १०। अक०। सेट्। उ०। युट्टयति ते।

युतृ (युत् )=भासने। १। अक०। सेट्। आ०। योतते। ५. युयुते। युतित्वा-योतित्वा। द्युतादिकार्यं विना 'रोचति' (२१४) वत्।

× युध=सम्प्रहारे [४२५] ४। अक०। अनि०। आ०। युद्ध्यते।

युप=विमोहने। ४। सक०। सेट्। प० युप्यति। 'कुस्यति' (४९८) वत्।

युष=सेवने। १०। सौत्रो धातुः। सक०। सेट्। उ०। योषयति-ते। योष्यते सेव्यते इति योषित्। योषा। युष्मद्। त्वम् युवाम् यूयम्।

यूष=हिंसायाम्। १। सक०। सेट्। प०। यूषति। ५. युयूष। 'कूजति' (८९) वत्। यूषम्=मांसरसविशेषः।

येषृ (येष् )=प्रयत्ने। १। अक०। सेट्। आ०। येषते। ५. यियेषे।

यौटृ (यौट् )=बन्धने। १। सक०। सेट्। प०। यौटति। ४. यौटेत्। ५. युयौट। ६. यौटिता। ७. यौटिष्यति। ८. यौट्यात्। ९. अयौटीत्। **सनि**-युयौटिषति। **यङि** - योयौट्यते।

## र

रक=आस्वादने। १०। सक०। सेट्। उ०। राकयति-ते।

×**रक्ष**=पालने [१९१] १। सक०। सेट्। प०। **भीत्रार्थानां भयहेतुः**-चोराद्रक्षति। रक्षः। राक्षसः।

रख=गतौ । १ । अक० । सेट् । प० । रखति । ५. रराख । रेखतुः । 'रदति' (३८) वत् ।

रखि (रङ्ख्)=गतौ । १ । सक० । सेट् । प० । रङ्खति । 'क्रन्दति' (९०) वत् ।

रग=आस्वादने । १० । सक० । सेट् । उ० । रागयति–ते ।

रगि (रङ्ग्)=गतौ । १ । सक० । सेट् । प० । रङ्गति । ५. ररङ्ग । ररङ्गतुः । 'क्रन्दति' (९०) वत् ।

रगे (रग्)=शङ्कायाम् । १ । सक० । सेट् । प० । रगति । ५. रराग । रेगतुः । ९. अरगीत् । 'रदति' (३८) वत् ।

रघ=आस्वादने । १० । सक० । सेट् । उ० । राघयति–ते ।

रघि (रङ्घ्)=गतौ । १ । सक० । सेट् । आ० । रंघते । 'वन्दति' (९) वत् ।

रघि (रंघ्)=भाषायाम् । १० । सक० । सेट् । उ० । रंघयति–ते ।

× रच=प्रतियत्ने । प्रतियत्नः=संस्कारः [६४४] १० । सक० । सेट् । उ० । अदन्तः । रचयति–ते ।

× रञ्ज=रागे [३१९] १ । अक० । अनि० । उ० । रञ्जयति–ते । रजतम् । **पृषिरञ्जिभ्यां कित्** । अतच् । राजा । राट् । रजः । रजस्वला ।

× रञ्ज=रागे [४९०] ४ । अक० । अनि० । उ० । रज्यति–ते । अनुरज्यति=तुष्यति । विरज्यति=विरमति ।

× रट=परिभाषणे [१०३] १ । सक० । सेट् । प० । रटति ।

रठ=परिभाषणे । पूर्ववत् ।

रण=शब्दे गतौ च । १ । अक० । गतौ सक० । सेट् । प० । काण्यादिः । रणति । 'रदति' (३८) वत् । **णौ चङि**-अरीरणत्–त–अरराणत्–त । रणः=शब्दः संग्रामश्च । रणितम् । रणरणिका । रण्डा ।

रथ=हिंसासंराद्ध्योः । संराद्धिः=पाकः । ४ । हिंसायां सक० । सेट् । प० । रथ्यति ।

× **रद्**=विलेखने [३८] १ । सक० । सेट् । प० । रदति ।

रध=हिंसासंराद्ध्योः । ४ । हिंसायां सक० । पुषादिः । **रधादिभ्यश्च** । इति वेट् । प० । रध्यति । २. रध्यतु । ३. अरध्यत् । ४. रध्येत् । ५. प्र० **रधिजभोरचि** । इति नुम् । ररन्ध । ररन्धतु । ररन्धु । म० ररन्धिथ-ररद्ध । ररन्धथु । उ० ररन्ध । ररन्धिव-रेध्व । ररन्धिम-रेध्म । ६. **नेड्यलिटि रधेः** । लिड्वर्जे इटि रधेर्नुम् न स्यात् । रधिता-रद्धा । ७. रधिष्यति-रत्स्यति । ८. रध्यात् । ९. **अनिदिता**-मिति नलोपः । अरधत् । **णौ**-रन्धयति-ते ।

रप=व्यक्तायां वाचि । १ । सक० । सेट् । प० । रपति । 'लपति' (१२७) वत् । **रपेरिच्चोपधायाः** । रिपुः ।

रफ=गतौ । १ । सक० । सेट् । प० । रफति । 'रदति' (३८) वत् ।

रफि (रम्फ् )=गतौ । १ । सक० । सेट् । प० । रम्फति । 'क्रन्दति' (९०) वत् ।

रबि (रम्ब् )=शब्दे । १ । अक० । सेट् । आ० । रम्बते । ५. ररम्बे । 'वन्दति' (९) वत् ।

× **रभ**=राभस्ये [२९७] १ । सक० । अनि । आ० । रभते । **रभेरशब्लिटोः**। इति नुम्। **चङि**-आररम्भत्-त। आरम्भः। आरम्भणम्।

रभि (रम्भ् )=शब्दे । १ । अक० । सेट् । आ० । रम्भते । 'वन्दति' (९) वत् ।

× **रमु**=क्रीडायाम् [२४५] १ । अक० । अनि० । आ० । अनुदात्तोपदेशः । रमते । विरम्य-विरत्य । **रमेर्वृद्धिश्च** । अठप्रत्ययश्च । रामठं=हिङ्गु । विरमति-आरमति=म्रियते ।

रय=गतौ । १ । सक० । सेट् । आ० । रयते । ५. रेये । 'दधति' (७) वत ।

रवि (रण्व्)=गतौ । १ । सक० । सेट् । प० । रण्वति । ५. ररण्व । ६. रण्विता । ७. रण्विष्यति । ८. रण्व्यात् । ९. अरण्वीत् ।

रस=शब्दे । १ । अक० । सेट् । प० । रसति । ५. ररास । रेसतुः । 'रदति' (३८) वत् ।

× **रस**=आस्वादनस्नेहनयोः [६९९] १० । सक० । सेट् । उ० । अदन्तः । रसयति ।

× **रह**=त्यागे [२०८] १ । सक० । सेट् । प० । रहति ।

रह=त्यागे । १० । सक० । सेट् । उ० । ज्ञपादिः । रहयति-ते ।

रहि (रंह्)=गतौ । १ । सक० । सेट् । प० । रंहति । 'क्रन्दति' (५०) वत् ।

× **रा**=दाने [३६३] २ । सक० । अनि० । प० । राति । **रातेर्डैः।** रै । राः रायौ रायः ।

राखृ (राख्)=शोषणालमर्थयोः । १ । सक० । सेट् । प० । राखति । ५. रराख । रराखतु । 'खादति' (३६) वत् ।

राघृ (राघ्)=सामर्थ्ये । १ । अक० । सेट् । आ० । राघते । 'गाधति' (४) वत् ।

× **राजृ** (राज्)=दीप्तौ [२३२] १ । अक० । सेट् । उ० । फणादिः । राजति-ते ।

राध=वृद्धौ । ४ । अक० । अनि० । प० । राध्यति । २. राध्यतु । ३. अराध्यत् । ४. राध्येत् । ५. रराध । रराधतुः । ६. राद्धा । ७. रात्स्यति । ८. राध्यात् । ९. अरात्सीत् । अरा-

द्धाम् । अरात्सुः । अपराध्यति-विराध्यति=द्रुह्यति । आराध्यति=अर्चति ।

× **राध**=संसिद्धौ [४८४] ५ । सक० । अनि० । प० । राध्नोति । आराध्नोति=अर्चति ।

रासृ (रास्)=शब्दे । १ । अक० । सेट् । आ० । रासते । 'गाधति' (४) वत् ।

रि=हिंसायाम् । ५ । सक० । अनि० । प० । छान्दसः । रिणोति । ५. रिराय । रीर्यतुः । ७. रेष्यति । ८. रीयात् । ९. अरैषीत् ।

रि=गतौ । ६ । सक० । अनि० । प० । रियति । 'क्षियति' (५१६) वत् ।

रिख=गतौ । १ । सक० . सेट् । प० । रेखति । ५. रिरेख । रिरिखतुः । 'चेटति' (१०६) वत् ।

रिगि (रिङ्ग्)=गतौ । १ । सक० । सेट् । प० । रिङ्गति । ५. रिरिङ्ग । 'क्लिन्दति' (५१) वत् ।

× **रिच**=वियोजनसम्पर्चनयोः [६३४] १० । सक० । सेट् । उ० । अग्धृषीयः । रेचयति-ते । विरेचनम् ।

**रिचिर्** (रिच्)=विरेचने [५४२] ७ । सक० । अनि० । उ० । रिणक्ति-रिङ्क्ते । विरेचनम् । अतिरिक्त' । व्यतिरिक्तः ।

रिफ=कत्थनयुद्धनिन्दाहिंसादानेषु । ६ । सक० । सेट् । प० । रिफति । 'मिषति' (५०७) वत् ।

रिवि(रिण्व्)=गतौ । १ । सक० । सेट् । प० । रिण्वति । 'जिवि'धातुवत् ।

रिश=हिंसायाम् । ६ । सक० । अनि० । प० । रिशति । 'विशति' (५२७) वत् ।

रिष=हिंसायाम् । १ । सक० । सेट् । प० । रेषति । ५. रिरेष ।

रिरिषतुः। 'चेटति' (१०६) वत्। तीषसहेति तादावार्धधातुके वेट्। रेषिता–रेष्टा। रेषितव्यः–रेष्टव्यः। रिष्टः–रिष्टवान्। रेषितुम्–रेष्टुम्। रिषित्वा–रेषित्वा–रिष्ट्वा। रलो व्युपधादिति कित्वविकल्पः। रिष्टम्=अशुभम्।

रिष=हिंसायाम्। ४। सक०। सेट्। प०। रिष्यति। अन्यत्सर्वं पूर्ववत्। 'रुष्यति' (४६४) वत्।

रिह=हिंसायाम्। ६। सक०। सेट्। प०। रिहति। 'मिषति' (५०७) वत्।

री=गतिरेषणयोः। रेषणं=वृकशब्दः। ९। गतौ सक०। अनि०। प०। ईकारान्तः। प्वादिः। ल्वादिश्च। रिणाति। २. रिणातु। म० रिणीहि। ५. रिराय। रीर्यतुः। म० रिरयिथ–रिरेथ। ६. रेता। ७. रेष्यति। ८. रीर्यात्। ९. अरैषीत्। रीणः। णिचि—रेपयति–ते।

री=हिंसायाम्। ५। सक०। अनि०। प०। रिणोति।

रीङ् (री)=स्रवणे। श्रवण इति पाठान्तरम्। ४। श्रवणे सक०। अनि०। आ०। ओदित्। रीयते। 'प्रीयति' (४०८) वत्। रीणः। रेतः रेतसी।

× रु=शब्दे [३४२] २। अक०। सेट्। प०। रौति–रवीति।

रुङ् (रु)=गतिरेषणयोः। १। गतौ सक०। अनि०। आ०। रवते। ५. रुरुवे। ६. रोता। 'कुङ्' धातुवत्।

× रुच=दीप्तावभिप्रीतौ च [२१४] १। अक०। सेट्। आ०। द्युतादिः। रोचते।

रुज=हिंसायाम्। १०। सक०। सेट्। उ०। रोजयति–ते। रुक्। रुजा।

रुजो (रुज्)=भङ्गे। ६। सक०। अनि०। प०। रुजति। ५. रुरोज। ६. रोक्ता। ७. रोक्ष्यति। ९. अरौक्षीत्। रुग्णः। रुक्। रुजा।

रुट=प्रतिघाते । १ । सक० । सेट् । आ० । द्युतादिः । रोटते । 'रोचति' (२१४) वत् )

रुट=भाषायाम् । १० । सक० । सेट् । उ० । द्युतादिः । रोटयति–ते ।

रुटि (रुण्ट्)=स्तेये । १ । सक० । सेट् । प० । रुण्टति । ५. रुरुण्ट । 'कुन्थति' (३२) वत् ।

रुठ=उपघाते । १ । सक० । सेट् । प० । रोठति । 'शोचति' (७६) वत् ।

रुठ=रोषे । १० । अक० । सेट् । उ० । रोठयति–ते ।

रुठि (रुण्ठ्)=स्तेये गतौ च । १ । सक० । सेट् । प० । रुण्ठति । 'कुन्थति' (३२) वत् ।

रुडि (रुण्ड्)=स्तेये । १ । पूर्ववत् । रुण्डः=छिन्नपादहस्तः कबन्धः । केवलं छिन्नशिरो वा । रुण्डमालालंकृतो रुद्रः ।

× रुदिर् (रुद्)=अश्रुविमोचने [३७१] २ । अक० । सेट् । प० । रुदादिः । रोदिति ।

× रुध=कामे [४२६] ४ । सक० । अनि० । आ० । अनुपूर्व एवायं प्रयुज्यते । अनुरुध्यते=काङ्क्षति ।

× रुधिर् (रुध्)=आवरणे [५३९] ७ । द्विकर्म० । अनि० । उ० । रुणद्धि-रुन्धे । व्रजमवरुणद्धि गाम् । विरुणद्धि=द्वेष्टि । अनुरुणद्धि=भजति ।

रुप=विमोहने । ४ । सक० । सेट् । प० । पुषादिः । रुप्यति । 'कुप्यति' (४९८) वत् । रोपः=बाणः ।

रुश=हिंसायाम् । ६ । सक० । अनि० । उ० । रुशति । 'विशति' (५२७) वत् ।

रुशि (रुंश्)=भाषायाम् । १० । सक० । सेट् । उ० । रुंशयति-ते ।

रुष=हिंसायाम् । १ । सक० । सेट् । तीषसहेति तासौ वेट् । प० । रोषति । ५. रुरोष । रुरुषतुः । ६. रोषिता–रोष्टा । 'रिष' धातुवत् ।

× **रुष**=रोषे [४६४] ४ । अक० । सेट् । प० । रुष्यति ।

रुष=रोषे । १० । अक० । सेट् । उ० । रोषयति–ते ।

रुसि (रुंस्)=भाषायाम् । १० । सक० । सेट् । उ० । रुंसयति–ते ।

× **रुह**=बीजजन्मनि प्रादुर्भावे च [२५०] १ । अक० । अनि० । प० । रोहति । अधिरोहति=आरोहति ।

रूक्ष=पारुष्ये । १० । सक० । सेट् । उ० । अदन्तः । रूक्षयति–ते । रूक्षा वाचः ।

× **रूप**=रूपक्रियायाम् । रूपस्य दर्शनं करणं वा रूपक्रिया । [६६१] १० । सक० । सेट् । उ० । रूपयति–ते । निरूपणम्–निदर्शनम् ।

रूष=भूषायाम् । १ । सक० । सेट् । प० । रूषति । ५. रुरूष । रुरूषतुः । 'कूजति' (८९) वत् ।

रेकृ (रेक्)=शङ्कायाम् । १ । सक० । सेट् । आ० । रेकते । ५. रिरेके । 'वेपति' (११६) वत् । रेको नीचः ।

रेखा=श्लाघाऽऽसादनयोः । ११ । आसादनं=प्राप्तिः प्रापणं वा । रेखायति ।

रेटृ (रेट्)=परिभाषणे । परिहासः=सनिन्दोपालम्भश्च परिभाषणम् । १ । सक० । सेट् । उ० । रेटति–ते । 'णेट्ट' धातुवत् ।

रेपृ (रेप्)=गतौ । १ । सक० । सेट् । आ० । रेपते । ५. रिरेपे । 'वेपति' (११६) वत् ।

रेबृ (रेब्)=गतौ । १ । सक० । सेट् । आ० । रेबते । 'वेपति' (११६) वत् ।

रेभृ (रेभ्)=शब्दे । १ । अक० । सेट् । आ० । रेभते । 'वेपति' (११६) वत् । विरिब्ध=स्वरः । क्षुब्धस्वान्तेति निपातः ।

रेवृ (रेव्)=प्लवगतौ । १ । अक० । सेट् । आ० । रेवते । ५. रिरेवे । 'वेपति' (११६) वत् ।

रेषृ (रेष्)=अव्यक्ते शब्दे। वृकशब्द इत्यर्थः। १। अक०। सेट्। आ०। रेषते। ५. रिरेषे। 'वेपति' वत्।

रै=शब्दे। १। अक०। अनि०। प०। रायति। ५. ररौ। 'ध्यायति' (२६७) वत्।

रोडृ (रोड्)=उन्मादे। १। अक०। सेट्। प०। रोडति। ५. रुरोड। 'खेलति' (११९) वत्।

रौडृ (रौड्)=अनादरे। १। सक०। सेट्। प०। रौडति। रुरौड। 'यौटृ' धातुवत्।

## ल

लक=आस्वादने। १०। सक०। सेट्। उ०। लाकयति–ते।

लक्ष=दर्शनाङ्कनयोः। १०। सक०। सेट्। उ०। लक्षयति–ते। लक्षेरट् च। लक्षणः–लक्ष्मणः। लक्षेर्मुट्च। ईप्रत्ययः। लक्ष्मीः।

लक्ष=आलोचने। १०। सक०। सेट्। आ०। आकुस्मीयः। लक्षयते। लक्ष्यं=शरव्यम्।

लख=गतौ १। सक०। सेट्। प०। लखति। ५। ललाख। लेखतुः। 'रदति' (३८) वत्।

लखि (लङ्ख्)=गतौ। १। सक०। सेट्। प०। लङ्खति। 'क्रन्दति' (९०) वत्।

लग=आस्वादने। १०। सक०। सेट्। उ०। लागयति–ते।

लगि (लङ्ग्)=गतौ। १। सक०। सेट्। प०। लङ्गति। ५. ललङ्ग। 'क्रन्दति' (९०) वत्।

×लगे (लग्)=सङ्गे [२३१] १। अक०। सेट्। प०। लगति।

लघ=आस्वादने। १०। सक०। सेट्। उ०। लाघयति–ते।

लघि (लङ्घ्)=गतौ। अयं भोजननिवृत्तावपि [९८] १। गतौ सक०। सेट्। आ०। लङ्घते। लङ्घिबंह्योर्नलोपश्च। लघुः।

लघि (लङ्घ्)=भाषायाम् । १० । सक० । सेट् । उ० । लङ्घयति-ते ।

लच्छ=लक्षणे । १ । सक० । सेट् । प० । लच्छति । ५. ललच्छ । ९. अलच्छीत् । 'नर्दति' (४१) वत् ।

लज=भर्जने । १ । सक० । सेट् । प० । लजति । ५. ललाज । लेजतुः । 'रदति' (३८) वत् ।

लज=अपवारणे । १० । सक० । सेट् । उ० । लाजयति-ते ।

लजि(लञ्ज्)=भर्जने । १ । सक० । सेट् । प० । लञ्जति । ५. ललञ्ज । 'क्रन्दति' (९०) वत् ।

ओलजी(लज्)=व्रीडने । ६ । अक० । सेट् । आ० । लजते । २. लजताम् । ३. अलजत । ४. । लजेत । ५. लेजे । म० लेजिषे । ६. लजिता । ७. लजिष्यते । ८. लजिषीष्ट । ९. अलजिष्ट । लजित्वा । लग्नः ।

लट=बाल्ये । १ । अक० । सेट् । प० । लटति । 'रदति' (३८) वत् ।

लड=विलासे । १ । अक० । सेट् । प० । लडति । 'रदति' (३८) वत् । **णिचि**—लाडयति । **जिह्वोन्मथने लडिः** । मित् । लाडयति जिह्वया ।

लड=उपसेवायाम् । १० । सक० । सेट् । उ० । लाडयति-ते ।

ओलडि (लण्ड्)=उत्क्षेपणे । १० । सक० । सेट् । उ० । लण्डयति ते । लण्डम्=पुरीषम् । अयं भाषार्थोऽपि ।

× लप=व्यक्तायां वाचि [१२७] १ । अक० । सेट् । प० । लपति । 'जपति' (१२९) वत् । विलपति=रोदिति । अपलपति=निह्नुते ।

लबि (लम्ब्)=शब्दे अवस्रंसने च । १ । अक० । सेट् । आ० । लम्बते । ५. ललम्बे । 'वन्दति' (९) वत् । आलम्बते । अवलम्बते । अवलम्बः । अलाबूः ।

डुलभष्(लभ्)=प्राप्तौ [२९८] १। सक०। अनि०। आ०। लभते। ५. लेभे। **लभेश्च**। नुम् स्यान्न तु शब्लिटो। अलम्भत्। लम्भनीयम्। आलभते=स्पृशति-हिनस्ति। उपालभते=निन्दति।

लर्ब=गतौ। १। सक०। सेट्। प०। लर्बति। 'नर्दति' (४१) वत्।

लल=विलासे। १। अक०। सेट्। प०। ललति। ललतम्। ललनम्। ललना स्त्री। मयि लल ललने ललन्तु बान्धवास्ते इति सुन्दरकाण्डे।

लल=ईप्सायाम्। १०। सक०। सेट्। आ०। आकुस्मीयः। लालयते। लाला।

लश=कौशल्ये। १०। अक०। सेट्। उ०। लाशयति-ते।

लष=कान्तौ। कान्तिरिच्छा। १। सक०। सेट्। उ०। **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटि लषः**। श्यन्वा। लष्यति-ते। लषति-ते। २. लष्यतु-तात्। लषतु-तात्। ३. अलष्यत्-त। अलषत्-त। ४. लष्येत्-त। लषेत्-त। ५. ललाष। लेषतुः। लेषे। लेषाते। अभिलाषा। अभिलाषः। लाषुकः। अभिलाषी।

लस=श्लेषणक्रीडनयोः। १। क्रीडने अक०। सेट्। प०। **वा-भ्राशेति** श्यन्वा। लस्यति-ते। लसति-ते। उल्लसति=शोभते। उल्लासः। विलासः। अलसो=मन्दः।

लस=शिल्पयोगे। १०। अक०। सेट्। उ०। लासयति-ते। लासकः। लासकी=नर्तकी। लास्यम्=नर्तनम्।

× **ओलस्जी** (लस्ज्)=व्रीडने [४९७] ६। अक०। सेट्। आ०।

× **ला**=दाने आदाने च [४६४] २। सक०। अनि०। प०। लाति।

लाखृ (लाख्)=शोषणालमर्थयोः। १। सक०। सेट्। प०। लाखति। 'खादति' (३६) वत्।

**लाघृ** (लाघ्)=सामर्थ्ये [५९] १। अक०। सेट्। आ०। लाघते।

लाच्छि (लाञ्छ् )=लक्षणे । १ । सक० । सेट् । प० । लाञ्छति । ५. ललाञ्छ । 'वाञ्छति' (८२) वत् । लाञ्छनम्=चिह्नम् । लाम् लांशौ लांशः ।

लाज=भर्जने भर्त्सने च । १ । सक० । सेट् । प० । लाजति । ५. ललाज । ललाजतुः । 'खादति' (१६) वत् । लाजः=भृष्टधान्यम् ।

लाजि (लाञ्ज् )=भर्जने भर्त्सने च । १ । सक० । सेट् । प० । लाञ्जति । ५. ललाञ्ज । 'वाञ्छति' (८२) वत् ।

लाभ=प्रेरणे । १० । सक० । सेट् । उ० । अदन्तः । लाभयति-ते ।

लाट्=जीवने । ११ । लाट्यति ।

× लिख=अक्षरविन्यासे [५०८] ६ । सक० । सेट् । प० । लिखति ।

लिगि (लिङ्ग् )=गतौ । १ । सक० । सेट् । प० । लिङ्गति । ५. लिलिङ्ग । आलिङ्गति=आश्लिष्यति । 'क्रन्दति' (५०) वत् । लिङ्गम्=चिह्नम् ।

लिगि (लिङ्ग् )=चित्रीकरणे । १० । सक० । सेट् । उ० । लिङ्गयति-ते ।

लिट्=अल्पकुत्सनयोः । ११ । लिट्यति ।

× लिप=उपदेहे [५३५] ६ । सक० । अनि० । उ० । मुचादिः । लिम्पति-ते ।

लिश=अल्पीभावे । ४ । अक० । अनि० । आ० । लिश्यते । ५. लिलिशे । ६. लेष्टा । ७. लेक्ष्यते । ८. लिक्षीष्ट । ९. अलिक्षत । लेशः=कणः ।

लिश=गतौ । ६ । सक० । अनि० । प० । लिशति । 'रिश' धातुवत् ।

× लिह्=आस्वादने [३३१] २ । सक० । अनि० । उ० । लेढि-लीढे । लेलिहानः=सर्पः ।

ली=श्लेषणे । ९ । सक० । अनि० । प० । ईकारन्तः । प्वादिः । ल्वादिश्च । लिनाति । क्रीणाति (९८६) वत् । लीनः=लयं प्राप्तः । **एरच्** । लयः । **विभाषा लीयतेः** । लेता–लाता । प्रलीयते–विलीयते=नश्यति ।

× ली=द्रवीकरणे [६३२] १० । सक० । सेट् । उ० । आधृषीयः । लाययति–ते । लयति–ते ।

× **लीङ्** (ली)=श्लेषणे [४०६] ४ । सक० । अनि० । आ० । ओदित् । **विभाषा लीयतेः** । विलाय–विलीय । प्रलयः । विलयः । लयः ।

× **लुञ्च**=अपनयने [७८] १ । सक० । सेट् । प० । लुञ्चति ।

लुजि (लुञ्ज्)=हिंसाबलादाननिकेतनेषु भाषायां च । १० । सक० । सेट् । उ० । लुञ्जयति–ते ।

× **लुट**=विलोडने [१०५] १ । सक० । सेट् । प० । लोटति ।

लुट=प्रतिघाते । १ । सक० । सेट् । आ० । द्युतादिः । लोटते । ९. अलुटत–अलोटिष्ट । 'रोचति' (२१४) वत् ।

× **लुट**=विलोडने [४९९] ४ । सक० । सेट् । प० । पुषादिः । लुट्यति ।

लुट=संश्लेषणे । ६ । सक० । सेट् । प० । कुटादिः । 'कुच' धातुवत् ।

लुट=भाषायाम् । १० । सक० । सेट् । उ० । लोटयति–ते ।

लुटि (लुण्ट्)=स्तेये । १ । सक० । सेट् । प० । लुण्टति । ५. लुलुण्ट । 'कुन्थति' (३२) वत् ।

लुठ=उपघाते । १ । सक० । सेट् । प० । लोठति । 'शोचति' (७६) वत् ।

लुठ=प्रतीघाते । १ । सक० । सेट् । आ० । काण्यादिः । द्युतादिश्च । लोठते । ९. अलुठत–अलोठिष्ट । 'रोचति' (२१४) वत् ।

लुठ=संश्लेषणे । ६ । सक० । सेट् । प० । कुटादिः । लुठति । 'कुच' धातुवत् ।

लुठि (लुण्ठ् )=स्तेये गतौ आलस्ये प्रतीघाते च । १ । सक० । सेट् । प० । लुण्ठति । ५. लुलुण्ठ । 'कुन्थति' (३२) वत् ।

लुड=विलोडने । १ । सक० । सेट् । प० । लोडति । 'लोटति'(१०९) वत् ।

लुड=संश्लेषणे । ६ । सक० । सेट् । प० । कुटादि । लुडति । 'कुच' धातुवत् ।

लुडि (लुण्ड् )=स्तेये । १ । सक० । सेट् । प० । लुण्डति । 'कुन्थति' (३२) वत् ।

लुण्ट=स्तेये । १० । सक० । सेट् । उ० । लुण्टयति-ते ।

लुथि (लुन्थ् )=हिंसासंक्लेशनयोः । १ । सक० । सेट् । प० । लुन्थति । 'कुन्थति' (३२) वत् ।

लुप=विमोहने । ४ । अक० । सेट् । प० । पुषादिः । काण्यादिश्च । लुप्यति । ९. अलुपत् । **णौ चङि**--अलूलुपत्- अलुलोपत् । 'कुस्यति' (४९८) वत् ।

× **लुप्लृ** (लुप् )=**छेदने** [५३३] ६ । सक० । अनि० । उ० । मुचादिः । लुम्पति--लुम्पते ।

लुबि (लुम्ब् )=अदर्शने । १ । सक० । सेट् । प० । लुम्बति । 'कुन्थति' (३२) वत् ।

× **लुभ**=गार्ध्ये । गार्ध्यमाकाङ्क्षा [४६६] ४ । सक० । सेट् । प० । पुषादिः । लुभ्यति । **तीषसहलुभरुषरिषः** । लुभित्वा--लोभित्वा--लुब्ध्वा । लुब्धः । लोभः । प्रलोभयति=छलयति ।

लुभ=विमोहने । ६ । सक० । सेट् । प० । लुभति । ५. लुलोभ । लुलुभतुः । ६. लोभिता–लोब्धा । लुब्धः । लुब्धवान् । लोभितुम्–लोब्धुम् । **लुभो विमोहने** । क्त्वानिष्ठयोर्नित्यं सेट् । लुभित्वा–लोभित्वा । लुभितः ।

× **लूञ्** (लू)=छेदने [५७३] ९ । सक० । सेट् । उ० । प्वादिः । ल्वादिश्च । लुनाति–लुनीते । लूनः ।

लूष=भूषायाम् । १ । सक० । सेट् । प० । लूषति । ५. लुलूष । 'कूजति' (८९) वत् ।

लूष=हिंसायाम् । १० । सक० । सेट् । उ० । लूषयति–ते ।

लेखा=श्लाघासादनयोः । ११ । लेखायति ।

लेट्=धौर्त्ये पूर्वभावे स्वप्ने च । ११ । लेट्यति ।

लेपृ (लेप्)=गतौ । १ । सक० । सेट् । आ० । लेपते । ५. लिलेपे । 'वेपति' (११६) वत् ।

× **लोकृ** (लोक्)=दर्शने [९३] १ । सक० । सेट् । आ० । लोकते ।

लोकृ (लोक्)=भाषायाम् । १० । सक० । सेट् । उ० । लोकयति ते ।

× **लोचृ** (लोच्)=दर्शने [७०] १ । सक० । सेट् । आ० । लोचते ।

लोचृ (लोच्)=भाषायाम् । १० । सक० । सेट् । उ० । आलोचयति–ते ।

लोट्=धौर्त्ये पूर्वभावे च । ११ । लोट्यति ।

लोडृ (लोड्)=उन्मादे । १ । अक० । सेट् । प० । लोडति । ५. लुलोड । लुलोडतुः । 'खेलति' (११९) वत् ।

लोष्ट=संघाते । १ । अक० । सेट् । आ० । लोष्टते । ५. लुलोष्टे । 'लोकति' (९३) वत ।

## व

वकि (वङ्क्)=कौटिल्ये गतौ च । १ । अक० । गतौ । सक० । सेट् । आ० । वङ्कते । ५. ववङ्के । 'वन्दति' (९) वत् ।

वक्ष=रोषे संघाते च । १ । अक० । सेट् । प० । वक्षति । ५. ववक्ष । ववक्षतुः । 'नर्दति' (४१) वत् । वक्षः=उरः ।

वख=गतौ । १ । सक० । सेट् । प० । वखति । ५. ववाख । वेखतुः । 'रदति' (३८) वत् ।

वखि (वंख् )=गतौ । १ । सक० । सेट् । प० । वङ्खति । 'क्रन्दति' (५०) वत् ।

वगि (वङ्ग् )=गतौ । १ । सक० । सेट् । प० । वङ्गति । 'क्रन्दति' (५०) वत् ।

वघि (वंघ् )=गत्याक्षेपे । आक्षेपो=निन्दा । गतौ गत्यारम्भे चेत्यन्ये । १ । सक० । सेट् । आ० । वङ्घते । ५. ववङ्घे । 'वन्दति' (९) वत् ।

× वच=परिभाषणे [३६७] २ । द्विक० । अनि० । प० । वक्ति । ९. वच उम् । अवोचत् । वचोऽशब्दसंज्ञायाम् । वाच्यं वस्तु । वाक्यम् एकतिङ् । वाक् । अन्येभ्योपीति क्विप् ।

× वच=परिभाषणे [६३६] १० । सक० । सेट् । उ० । वाचयति–ते ।

वज=गतौ । १ । सक० । सेट् । प० । वजति । ५. ववाज । ववजतुः । न शसददे-ति एत्वाभ्यासलोपौ न स्तः । 'गदति' (३७) वत् ।

वञ्चु (वञ्च् )=गतौ । १ । सक० । सेट् । प० । वञ्चति । २. वञ्चतु । ३. अवञ्चत् । ४. वञ्चेत् । ५. ववञ्च । ववञ्चतुः । ६. वञ्चिता । ७. वञ्चिष्यति । ८. वच्यात् । अनिदितामिति नलोपः । ९. अवञ्चीत । सप्तमो लुङ् । नीग्वञ्चु–वनीवच्यते । उदित्त्वात् क्त्वायामिड्विकल्पः । इट्पक्षे वञ्चिलुञ्च्यृतश्चेति–कित्वविकल्पः । वङ्क्त्वा- वञ्चित्वा- वचित्वा । वक्रम् ।

वञ्चु (वञ्च् )=प्रलम्भने । १० । सक० । सेट् । आ० । आकुस्मीयः । वञ्चयते । उदित्वाण्णिजभावे वञ्चतीत्यादि । अस्मात्प्रतारणेऽर्थे **गृधिवञ्च्योः प्रलम्भने** । इत्यात्मनेपदम् । माणवकं वञ्चयते । अन्यत्र अहिं वञ्चयति वर्जयतीत्यर्थः । क्त्वायां पूर्ववत् ।

वट=वेष्टने परिभाषणे च । १ । सक० । सेट् । प० । वटति । 'गदति' (३७) वत् । वटिः । वटिभः । वटकः ।

वट=विभाजने । ग्रन्थे च । १० । सक० । सेट् । उ० । अदन्तः । वटयति–ते । ९. अववटत्–त ।

वटि (वण्ट् )=विभाजने । १० । सक० । सेट् । उ० । वण्टयति–ते । वण्टको भागः ।

वठ=स्थौल्ये । १ । अक० । सेट् । प० । वठति । 'गदति' (३७) वत् ।

वठि (वण्ठ् )=एकचर्यायाम् । १ । अक० । सेट् । आ० । वण्ठते । ५. ववण्ठे । 'वन्दति (९) वत् ।

वडि (वण्ड् )=विभाजने । १ । सक० । सेट् । आ० । वण्डते । ववण्डे । 'वन्दति' (९) वत् ।

वडि (वण्ड् )=विभाजने । ग्रन्थे च । १० । सक० । सेट् । उ० । वण्डयति–ते ।

वण=शब्दे । १ । अक० । सेट् । प० । वणति । ५. ववाण । ववणतुः । 'गदति' (३७) वत् । वाणी । वीणा ।

× वद=व्यक्तायां वाचि [३२४] १ । सक० । सेट् । प० । वदति । **न पादम्याङ्यमाङ्य**–वादयते । परिवदति=निन्दति ।

वद=सन्देशवचने । १० । सक० । सेट् । उ० । आधृषीयः । वादयति–ते ।

×वदि(वन्द्)=अभिवादनस्तुत्योः [९] १ । सक० । सेट् । आ० । वन्दते ।

वन=सम्भक्तौ शब्दे च । १ । सक० । सेट् । प० । वनति । ५. ववान । ववनतुः । 'गदति' (१७) वत् । वनित्वा । वा ल्यपि । इत्यस्य व्यवस्थितविभाषात्वात् नान्तानिटां नित्यमेवानुनासिकलोपः । प्रवत्य । वन्तिः=अपानम् । वनं=काननम् ।

वनु(वन्)=क्रियासामान्यार्थे । अनेकक्रियार्थ इत्यर्थः । पूर्ववत् । वात्वा-वनित्वा । वान्तम् ।

×वनु(वन्)=याचने [५६३] ८ । सक० । सेट् । आ० । तनोत्यादिः । वनुते ।

वनु(वन्)=याचने । ८ । सक० । सेट् । प० । छान्दसः । वनोति ।

×डुवप्(वप्)=बीजसन्ताने [३१८] १ । सक० । अनि० । उ० । यजादिः । वपति-ते । निर्वपति=ददाति । उप्त्रिमम् । विप्रः । वापी ।

वभ्र=गतौ । १ । सक० । सेट् । प० । वभ्रति । ५. ववभ्र । ववभ्रतुः । 'नर्दति' (४१) वत् ।

×टुवमु(वम्)=उद्गिरणे [२४१] १ । सक० । सेट् । प० । वमति ।

वय=गतौ । १ । सक० । सेट् । आ० । वयते । ५. ववये । ववयाते । 'दयति' (७) वत् । वयश्च । असच् । वायसः=काकः ।

वर=ईप्सायाम् । १० । सक० । सेट् । उ० । अदन्तः । वरयति-ते । ९. अववरत्-त । सनि—विवरयिषति-ते ।

×वर्च=दीप्तौ [६९] १ । अक० । सेट् । आ० । वर्चते । ५. ववर्चे ।

वर्ण=प्रेरणे वर्णने च । १० । सक० । सेट् । उ० । वर्णयति-ते ।

वर्ण=वर्णक्रियाविस्तारगुणवचनेषु । १० । सक० । सेट् । उ० । अदन्तः । वर्णक्रिया=वर्णकरणम् । सुवर्णं वर्णयति । कथां वर्णयति । विस्तृणातीत्यर्थः । हरिं वर्णयति । स्तौतीत्यर्थः । ९. अववर्णत्-त ।

वर्ध=छेदनपूरणयोः । १० । सक० । सेट् । उ० । वर्धयति ते वा । वर्धकिः=तक्षा । नदी समुद्रं जलेन वर्धयति ।

वर्ष=स्नेहने । १ । सक० । सेट् । आ० । वर्षते । ५. ववर्षे । 'पर्दति' (२३) वत् ।

वर्ह=परिभाषणहिंसाप्रदानेषु । प्राधान्ये च । १ । सक० । सेट् । आ० । वर्हते । ५. ववर्हे । 'पर्दति' (२३) वत् ।

× वल=संवरणे सञ्चरणे च । [१४८] १ । सक० । सेट् । आ० । वलते ।

वल्क=परिभाषणे । १० । सक० । सेट् । उ० । वल्कयति-ते ।

वल्ग=गतौ । १ । सक० । सेट् । प० । वल्गति । 'नर्दति' (४१) वत् । गतिरत्र प्लुतगमनं गात्रकम्पनं च । मल्लो वल्गते । देहं चालयतीत्यर्थः ।

वल्गु=पूजायाम् । ११ । वल्गूयति ।

वल्भ=भोजने । सक० । सेट् । आ० । वल्भते । 'कत्थति' (२६) वत् ।

वल्ल=संवरणे । १ । सक० । सेट् । आ० । वल्लते । 'कत्थति' (२६) वत् ।

वल्ह=परिभाषणहिंसाप्रदानेषु । प्राधान्ये च । १ । अर्थानुगुण्येन सकर्मकोऽकर्मकश्च । सेट् । आ० । वल्हते । ५. ववल्हे । 'कत्थति' (२६) वत् । प्रवल्हिका=प्रहेलिका ।

× वश=कान्तौ । कान्तिरिच्छा [१८०] २ । सक० । सेट् । प० । वष्टि ।

वष=हिंसायाम् । १ । सक० । सेट् । प० । वषति । 'गदति' (३७) वत् ।

वष्क=दर्शने । १० । सक० । सेट् । उ० । वष्कयति–ते ।

× वस=निवासे [२२०] १ । अक० । अनि० । प० । यजादिः । वसति । अध्यूषिवान् । **भाषायां सदवसश्रुवः** । अधिवसति=अधितिष्ठति । **उपसर्गे वसेः** । अथः प्रत्ययः । आवसथं=गृहम् । **वसेस्तुन्** । वस्तु । **अगारे णिच्च** । वास्तु । वासयतीति वासरः ।

× **वस**=आच्छादने [३३८] २ । सक० । सेट् । आ० । वस्ते । वस्यते अनेन वस्त्रम् । **सर्वधातुभ्यः ष्ट्रन्** ।

वस=स्नेहमोहच्छेदापहरणेषु । १० । सक० । सेट् । उ० । वासयति-ते ।

वसु (वस्)=स्तम्भे । ४ । अक० । सेट् । प० । पुषादिः । वस्यति । ५. ववास । ववसतुः । 'वस्यति' (४'१७) वत् ।

वसु (वस्)=निवासे । १० । अक० । सेट् । उ० । अदन्तः । वसयति-ते ।

वस्क=गतौ । १ । सक० । सेट् । आ० । वस्कते । 'कत्थति' (२६) वत् ।

वस्त=अर्दने । १० । सक० । सेट् । उ० । वस्तयति ते । यजादिः ।

× **वह**=प्रापणे [३१९] १ । द्विकर्म० । अनि० । उ० । वहति-ते । ग्राममजां वहति । **उपसर्गाद्ध्रस्व ऊहतेः** । यादौ क्ङिति । ब्रह्म समुह्यात् । अग्निं समुह्य । **अनसि वहेः क्विबनसो डश्च** । अनड्वान् । **वहो धश्च** । **ऊः धश्च** वधूः । **वहिश्रिश्रुयु**-इत्यादिना निः । वह्निः । आवहति=करोति । उद्वहति-विवहति=परिणयति । निर्वहति=निर्वाहं करोति ।

× **वा**=गतिगन्धनयोः [३१७] सक० । अनि० । प० । वाति । निर्वाति-उद्वाति=शाम्यति । **वातेर्डिच्च** । विः=पक्षी ।

वाक्षि (वाङ्क्ष्)=काङ्क्षायाम् । १ । सक० । सेट् । प० । वाङ्क्षति । ५. ववाङ्क्ष । 'वाञ्छति' (८२) वत् ।

× **वाच्छि** (वाञ्च्छ्)=वाञ्छायाम् [८२] १ । सक० । सेट् । प० । वाञ्च्छति ।

वाडृ (वाड्)=आप्लाव्ये । १ । अक० । सेट् । आ० । वाडते ।

वात=सुखसेवनयोः । प्रीतिसेवनयोरित्येके । १० । सक० । सेट् । उ० । अदन्तः । वातयति-ते । भद्रं नो अपि वातय मनः ।

वावृतु (वावृत्)=वरणे । ४ । सक० । सेट् । आ० । वावृत्यते । ५. वावृताञ्चक्रे । इत्यादि ।

वाशृ (वाश्)=शब्दे । ४ । अक० । सेट् । आ० । वाश्यते । ५. ववाशे । ६. वाशिता । ७. वाशिष्यते । ९. अवाशिष्ट ।

वास=उपसेवायाम् । १० । सक० । सेट् । उ० । अदन्तः । वासयति—ते

वाहृ (वाह्)=प्रयत्ने । १ । अक० । सेट् । आ० । वाहते ।

× **विचिर्** (विच्)=पृथग्भावे [५४३] ७ । सक० । अनि० । उ० । विनक्ति ।

विच्छ=भाषायाम् । १० । सक० । सेट् । उ० । विच्छयति—ते ।

× **विजिर्** (विज्)=पृथग्भावे । [३९२] ३ । सक० । अनि० । प० । वेवेक्ति ।

× **ओविजी** (विज्)=भयचलनयोः [४९६] ६ । अक० । सेट् । आ० । प्रायेणायमुत्पूर्वः । ईदित् । ओदिच्च । उद्विजते ।

× **ओविजी** (विज्)=भयचलनयोः [५५७] ७ । अक० । सेट् । प० । ईदित् ओदिच्च ।

विट=शब्दे । १ । अक० । सेट् । प० । विटति । ५. विवेट । विविटतुः । 'चेटति' (१०६) वत् । विटः । विटपः । विटपी ।

विडम्ब=विडम्बने । सक० । सेट् । उ० । विडम्बयति—ते । विडम्बना ।

वित्त=समुत्सर्गे । १० । सक० । सेट् । उ० । वित्तयति—ते ।

विथृ (विथ्)=याचने । १ । द्विक० । सेट् । आ० । वेथते । ५. विवेथे । ७. वेथिष्यते । ८. वेथिषीष्ट । ९. अवेथिष्ट । अवेथिषाताम् । **णौ चङि**— अविवेथत् ।

× विद=ज्ञाने [३६८] २ । सक० । सेट् । प० । वेत्ति ।

× **विद**=सत्तायाम् [४२३] ४ । अक० । अनि० । आ० । विद्यते । निर्विद्यते=खिद्यति ।

× **विद**=विचारणे [९४८] ७ । सक० । अनि० । आ० । विन्ते ।

विद=चेतनाख्याननिवासनेषु । १० । सक० । सेट् । आ० । आकुस्मीयः ।

× **विद्लृ** (विद्)=लाभे [५३४] ६ । सक० । अनि० । उ० । मुचादिः । विन्दति–ते । विविदिवान्–विविद्वान् । **विभाषा गमहनविदविशाम्** ।

विध=विधाने । ६ । सक० । सेट् । प० । विधति । 'लिखति' (९०८) वत् ।

विल=संवरणे । ६ । सक० । सेट् । प० । विलति । 'लिखति' (९०८) वत् । आविलं=कलुषम् ।

विल=क्षेपे । १० । सक० । सेट् । उ० । वेलयति–ते ।

× **विश**=प्रवेशने [९२७] ६ । सक० । अनि० । प० । विशति । निविशते सन्मार्गम् । **नेर्विशः** । आत्मनेपदं स्यात् । अशूप्रुषिलटि–इत्यादिना क्वन् । विश्वः विश्वौ विश्वे । **विभाषा गमहनविदविशाम्** । विविशिवान्--विविश्वान् । उपविशति--निषीदति । निर्विशति=उपभुङ्क्ते ।

विष=विप्रयोगे । ९ । अक० । अनि० । प० । विष्णाति । २. विष्णातु । म० विषाण । ३. अविष्णात् । ४. विष्णीयात् । ५. विवेष । विविषतुः । ६. वेष्टा । ७. वेक्ष्यति । ८. विष्यात् । ९. अविक्षत् । 'क्लिश्नाति' (५९४) वत् ।

विषु (विष्)=सेचने । १ । सक० । सेट् । प० । वेषति । ५. विवेष । विविषतुः । 'चेटति' (१०६) वत् । वेषित्वा-विष्ट्वा । विष्टम् । वेषः ।

× **विष्लृ**((विष्)=व्याप्तौ [३९३] ३ । सक० । अनि० । उ० । वेवेष्टि–वेविष्टे । **विषेः किच्च** । विष्णुः ।

विष्क=हिंसायाम् । १० । सक० । सेट् । उ० । विष्कयति–ते ।

× वी=गतिव्याप्तिप्रजनकान्त्यसनखादनेषु [३५५] २ । यथायथं सकर्मकोऽकर्मकश्च । अनि० । प० । वेति ।

वीर=विक्रान्तौ । १० । सक० । सेट् । आ० । अदन्तः । आगर्वीयः । वीरयति–ते ।

वुगि (वुङ्ग्)=वर्जने । १ । सक० । सेट् । प० । 'कुन्थति' वत । 'बुगि' धातुं पश्यत ।

वुट=हिंसायाम् । १० । सक० । सेट् । उ० । वोटयति–ते ।

वुधि (वुन्ध्)=हिंसायाम् । १० । सक० । सेट् । उ० । वुन्धयति ते ।

वुस=विभागे । ४ । सक० । सेट् । प० । वुस्यति । 'कुस्यति' (४९८) वत् ।

वूष=हिंसायाम् । १० । सक० । सेट् । उ० । वूषयति–ते ।

वृक=आदाने । १ । सक० । सेट् । आ० । वर्कते । ५. ववृके । ६. वर्किता । ८. वर्किषीष्ट । ९. अवर्किष्ट । वृकः ।

वृक्ष=वरणे । १ । सक० । सेट् । आ० । वृक्षते । ५. ववृक्षे । 'शिक्षति' (१७३) वत् । वृक्षः ।

× **वृङ्** (वृ)=सम्भक्तौ [५८९] ९ । सक० । सेट् । आ० । वृणीते ।

वृची (वृच्)=वर्जने । २ । सक० । सेट् । आ० वृक्ते । वृजाते । 'पृची' धातुवत् ।

× **वृजी** (वृज्)=वर्जने [५५८] ७ । सक० । सेट् । प० । वृणक्ति ।

× **वृजी** (वृज्)=वर्जने [६३३] १० । सक० । सेट् । उ० । आधृषीयः । वर्जयति–ते । वर्गः । घञ् । कुत्वम । आवर्जयति=वशीकरोति ।

× **वृञ्** (वृ)=वरणे [४७७] ५ । सक० । सेट् । उ० । वृणोति–वृणुते ।

आवृणोति=तिरोदधाति । विवृणोति=अपावृणोति । संवृणोति=तिरोदधाति ।

वृञ् (वृ)=आवरणे । १० । सक० । सेट् । उ० । आधृषीयः । वारयति-ते । वारणम् । वारणः=हस्ती ।

वृण=प्रीणने । ६ । सक० । सेट् । प० । वृणति । ५. ववर्ण । 'तृपति' (५०२) वत् ।

× **वृतु** (वृत)=वर्तने [२२१] १ । अक० । सेट् । आ० । द्युतादिः । वृतादिश्च । वर्तते । वर्तिष्णुः । वर्त्म । वृत्तम् । अनुवर्तते=अनुसरति । निर्वर्तते=उद्भवति । परिवर्तते=वलते । परिवर्तयति=विक्रीणीते ।

वृतु (वृत)=वरणे । ४ । सक० । सेट् । आ० । वृत्यते । ५. ववृते । ६. वर्तिता । ९. अवर्तिष्ट । वृत्वा-वर्तित्वा ।

वृतु (वृत)=भाषायाम् । १० । सक० । सेट् । उ० । वर्तयति-ते ।

× **वृधु** (वृध्)=वृद्धौ [२२२] १ । अक० । सेट् । प० । द्युतादिः । वृतादिश्च । वर्धते । वर्धिष्णुः । वृद्धिः । वृद्धः । वर्षीयान्-ज्यायान् । वर्षिष्ठः- ज्येष्ठः । वर्धनः ।

वृधु (वृध्)=भाषायाम् । १० । सक० । सेट् । उ० । वर्धयति-ते ।

वृश=आवरणे । ४ । सक० । सेट् । प० । पुषादिः । वृश्यति । 'हृष्यति' (४६३) वत् ।

वृष=शक्तिबन्धने । शक्तिबन्धनं=प्रजननसामर्थ्यम् । शक्तिसबन्धश्च । १० । अक० । सेट् । आ० । आकुस्मीयः । वर्षयते ।

× **वृषु** (वृष्)=सेचने [२०२] १ । सक० । सेट् । प० । वर्षति । वृष्णिः । वृषभः । वृषः । वर्षुकः । वृषा । वृषणः ।

वृहू (वृह्)=उद्यमने । ६ । सक० । वेट् । प० । वृहति । 'तृहू' धातुवत् ।

× वॄ=वरणे । भरण इत्येके [९८०] ९ । सक० । सेट् । प० । ॠकारान्तः । प्वादिः । ल्वादिश्च । वृणाति ।

× वॄञ् (वॄ)=वरणे [५७६] ९ । सक० । सेट् । उ० । प्वादिः । ल्वादिश्च । वृणाति-वृणीते । वूर्णः ।

× वेञ् (वे)=तन्तुसन्ताने [३२?] १ । सक० । अनि० । उ० । यजादिः । वयति-ते ।

वेणृ (वेण्)=गतिज्ञानाचिन्तानिशामनवादित्रग्रहणेषु । १ । सक० । सेट् । उ० । वेणति-ते । 'णेट' धातुवत् । वेणिः । वेणी ।

वेथृ (वेथ्)=याचने । १ । द्विक० । सेट् । आ० । वेथते । ५. विवेथे । 'वेपति' (११६) वत् । अस्याथुच् नास्ति ।

वेद=धौर्त्ये स्वप्ने प्रभाते च । ११ । वेदति ।

वेनृ (वेन्)='वेणृ' धातुवत् ।

× टुवेपृ (वेप्)=कम्पने [११६] १ । अक० । सेट् । आ० । वेपते ।

वेल=कालोपदेशे । १० । अक० । सेट् । उ० । अदन्तः । वेलयति-ते । वेला=समयः ।

वेलृ (वेल्)=चलने । १ । अक० । सेट् । प० । वेलति । 'खेलति' (१९९) वत् ।

वेल्ल=चलने । १ । अक० । सेट् । प० । वेल्लति ।

वेवीङ् (वेवी)=गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । २ । यथायथं सकर्मकाऽकर्मकश्च । सेट् । आ० । वेवीते । वेव्याते । वेव्यते । ५. वेव्याञ्चक्रे । 'दीधीङ्' धातुवत् ।

× वेष्ट=वेष्टने [९४] १ । सक० । सेट् । आ० । वेष्टते ।

ओवै (वै)=शोषणे । १ । अक० । अनि० । प० । वायति । २. वायतु । ३. अवायत् । ४. वायेत् । ५. ववौ । म० वविथ-ववाथ । ६.

वाता । ७. वास्यति । ८. वायात । ९. अवासीत **भावे**—
वायते । **णिचि**- वापयति-ते । **सनि** -विवासति । **यङि**—
वावायते । **यङ्लुकि**—वावेति-वावाति **कृत्सु** -वातव्यम् ।
वेयम् । ल्युट् वानम् । निष्ठा वानम् । वातुम् । वात्वा ।

व्यच=व्याजीकरणे । ६ । सक० । सेट् । प० । विचति । २. विचतु ।
**३.** अविचत । **४.** विचेत् । **५. ग्रहिज्येति** -संप्रसारणम् । विव्याच ।
विविचतुः । **६.** व्यचिता । **७.** व्याचष्यति । **८.** विच्यात् ।
**९.** अव्याचीत्—अव्याचिष्टाम् । अव्यचीत्—अव्यचिष्टाम् । विचि-
त्वा-विचितः ।

× **व्यथ**=भयसञ्चलनयोः [२२६] १ । अक० । सेट् । आ० । घटादिः ।
षित् । व्यथते ।

× **व्यध**=ताडने [४३०] ४ । सक० । अनि० । प० । विध्यति ।

× **व्यय**=गतौ [२९६] १ । सक० । सेट् । प० । वित्तसमुत्सर्गे ।
आत्म० । व्ययति–ते ।

× **व्यय**=वित्तसमुत्सर्गे [६६०] १० । सक० । सेट् । उ० । अदन्तः ।
व्यययति–ते ।

व्युष=दाहे विभागे च । ४ । सक० । सेट् । प० । व्युष्यति । ५.
वुव्योष । **६.** व्योषिता । **८.** व्युष्यात् । **९.** दाहार्थे अव्योषीत् ।
विभागार्थे पुषादिः । अव्युषत् ।

× **व्येञ्** (वे)=संवरणे [३२२] १ । सक० । अनि० । उ० । व्ययति–ते ।

× **व्रज**=गतौ [९३] १ । सक० । सेट् । प० । व्रजति ।

व्रज=मार्गसंस्कारगत्योः । १० । अक० । सेट् । उ० । व्राजयति–ते ।

व्रण=शब्दे । गात्रविचूर्णने च । १ । अक० । सेट् । प० । व्रणति ।
**५.** वव्राण । 'गदति' (३७) वत् । व्रणः ।

व्रण=गात्रविचूर्णने । १० । सक० । सेट् । उ० । व्रणयति–ते ।

× **ओव्रश्चू**=(व्रश्च्)=छेदने [४९८] ६ । सक० । वेट् । प० । वृश्चति ।

× **व्री**=वरणे । [९८६] ९ । सक० । अनि० । प० । ईकारान्त । व्रीणाति । प्वादित्वपक्षे व्रिणाति ।

व्रीङ् (व्री)=वरणे । ४ । सक० । अनि० । आ० । ओदित् । व्रीयते । 'प्रीयति' (४०८) वत् । व्रीणः ।

× **व्रीड**=चोदने लज्जायां च [३००] ४ । चोदने सक० । सेट् । प० । व्रीडति ।

व्रुड=संवरणे । ६ । सक० । सेट् । प० । कुटादिः । व्रुडति । ५. वुव्रोड । श्यनं विना 'त्रुटति' (९१०) वत् ।

व्ली=वरणे । ९ । सक० । अनि० । प० । ईकारान्तः । प्वादिः । ल्वादिश्च । 'व्रीणाति' (९८६) वत् । **णिचि**—व्लेपयति–ते ।

## श

× **शंसु** (शंस्)=स्तुतौ [२०६) १ । सक० । सेट् । प० । शंसति । आशंसते=इच्छति ।

× **शक**=मर्षणे [४३६] ४ । सक० । सेट् । उ० । पुषादिः । शक्यति–ते । **सनि**—शिक्षति–ते । **सनिमीमा**-इति इस् ।

× **शकि** (शङ्क)=शङ्कायाम् [९९] १ । सक० । सेट् । आ० । शङ्कते ।

× **शक्लृ** (शक्)=शक्तौ [४८३] ५ । अक० । अनि० । प० । शक्नोति ।

शच=अव्यक्तायां वाचि । १ । सक० । सेट् । आ० । शचते । ५. शेचे । 'चकति' (५७) वत् ।

शट=रुजाविशरणगत्यवसादनेषु । १ । अक० । सेट् । प० । शटति । ५. शेटतुः । 'रदति' (३८) वत् ।

शट=श्लाघायाम् । १० । सक० । सेट् । आ० । आकुस्मीयः । शाटयते ।

शठ=हिंसासंक्लेशनकैतवेषु । १ । हिंसायां सकर्म० । सेट् । प० । शठति । 'रदति' (३८) वत् । शठः=कितवः ।

शठ=असंस्कारगत्योः । १० । सक० । सेट् । उ० । शाठयति-ते ।

शठ=श्लाघायाम् । १० । सक० । सेट् । आ० । आकुस्मीयः । शाठयते ।

शठ=सम्यगनवभाषणे । १० । सक० सेट् । उ० । अदन्तः । शठयति-ते ।

शडि (शण्ड्)=रुजायां सङ्घाते च । अक० । सेट् । आ० । शण्डते । ५. शशण्डे । 'वन्दति' (९) वत् ।

शण=दाने गतौ च । १ । सक० । सेट् । प० । शणति । ५. शशाण । शेणतुः । 'रदति' (३८) वत् ।

× **शद्लृ** (शद्)=शातने । शातनं=नाशः । [२४७] १ । अक० । अनि० । आ० । शीयते ।

शद्लृ (शद्)=शातने । ६ । पूर्ववत् । स्वरे विशेषः ।

× **शप**=आक्रोशे [३१६] १ । सक० । अनि० । उ० । शपति-ते ।

शप=आक्रोशे । ४ । सक० । अनि० । उ० । शप्यति-ते । २. शप्यतु-ताम् । ३. अशप्यत्-त । ४. शप्येत्-त । शेषं 'शपति' (३१६) वत् ।

**शब्द**=आविष्कारे । १० । सक० । सेट् । उ० । शब्दयति-ते ।

शम=आलोचने । १० । सक० । सेट् । आ० । आकुस्मीयः । शामयते ।

× **शमु** (शम्)=उपशमे [४४८] ४ । अक० । सेट् । प० । शाम्यति ।

शम्ब=संबन्धे । १० । सक० । सेट् । उ० । शम्बयति-ते ।

शर्ब=गतौ हिंसायां च । १ । सक० । सेट् । प० । शर्बति । 'नर्दति' (४१) वत् ।

शर्व=हिंसायाम् । १ । सक० । सेट् । प० । शर्वति । 'नर्दति' (४१) वत् । शर्वः । शर्वाणी ।

शल=गतौ । १ । सक० । सेट् । प० । शलति । 'रदति' (३८) वत् । शाला ।

शल=चलनसंवरणयोः । १ । चलनेऽकर्म० । सेट् । आ० । शलते । ७ शेले । 'दयति' (७) वत् । शललम् । शलली । शलभः । शलाका ।

शल्भ=कत्थने । १ । सक० । सेट् । आ० । शल्भते । ५. शशल्भे । 'कत्थति' (२६) वत् ।

शव=गतौ । १ । सक० । सेट् । प० । शवति । 'रदति' (३८) वत् । शवम् = कुणपः ।

शश=प्लुतगतौ । १ । अक० । सेट् । प० । शशति । ५. शशाश । शेशतुः । 'रदति' (३८) वत् ।

शष=हिंसायाम् । १ । सक० । सेट् । प० । शषति । शशाष । 'रदति' (३८) वत् ।

× शसि (शंस्)=इच्छायाम् । [१८२] १ । सक० । सेट् । आ० । नित्यमाङ्पूर्वोऽयम् । आशंसते ।

शसु (शस्)=हिंसायाम् । १ । सक० । सेट् । प० । शसति । ५. शशास । शशसतुः । **नशसददवादिगुणानाम्** । 'गदति' (३७) वत् । शसित्वा–शस्त्वा । विशस्तः । विशसनम् । शस्त्रम् ।

× शाखृ (शाख्)=व्याप्तौ [६४] १ । सक० । सेट् । प० । ऋदित् । शाखति ।

शाघृ(शाघ्)=व्याप्तौ । १ । सक० । सेट् । प० । शाघति । पूर्ववत् ।

शाडृ(शाड्)=श्लाघायाम् । १ । सक० । सेट् । आ० । ऋदित् । 'गाधति' (४) वत् । शाडते । ५. शशाडे । डलयोरभेदात् शालते इत्यापि । शाला । शालिः=व्रीहिः । शालीनः=अधृष्टः । रूपशाली ।

शान=तेजने । १ । सक० । अनि० । उ० । मान्बधदान्शान्भ्य-इति नित्यं सन् अभ्यासस्य दीर्घश्च । शीशांसति-ते । २. शीशांसतु-ताम् । ३. अशीशांसत्-त । ४. शीशांसेत्-त । ५. शीशांसाञ्चकार-चक्रे । ६. शीशांसिता । ७. शीशांसिष्यति-ते । ८. शीशांस्यात्-शीशांसीष्ट । ९. अशीशांसीत्-अशीशांसिष्ट ।

शार=दौर्बल्ये । १० । अक० । सेट् । उ० । शारयति-ते ।

शालृ(शाल्)=कत्थने । १ । सक० । सेट् । आ० । ऋदित् । शालते । शाला । बाहुशाली ।

× शासु(शास्)=अनुशिष्टौ [३७९] २ । द्विक० । सेट् । प० । माणवकं धर्मं शास्ति ।

× शासु (शास्)=इच्छायाम् [३३७] २ । सक० । सेट् । आ० । नित्यमाङ्पूर्वीयम् । आशास्ते ।

शासु (शास्)=इच्छायाम् । १ । सक० । सेट् । आ० । आशासते । 'गाधते' (४) वत् । शासितः-शास्तः ।

× शिक्ष=विद्योपादाने [१७३] १ । सक० । सेट् । आ० । शिक्षते ।

शिखि (शिङ्ख्)=गतौ । १ । सक० । सेट् । प० । शिङ्खति । ५. शिशिङ्ख । 'निन्दति' (४७) वत् ।

शिघि (शिङ्घ्)=गतौ । १ । सक० । सेट् । प० । शिङ्घति । 'निन्दति' (४७) वत् ।

शिजि (शिञ्ज्)=अव्यक्ते शब्दे । २ । अक० । सेट् । आ० । शिङ्क्ते । 'णिजि' धातुवत् । शिञ्जा ।

शिञ् (शि)=निशाने । ५ । सक० । अनि० । उ० । शिकारान्त । शिनोति--शिनुते । 'सिनोति' (४७२) वत् ।

शिट=अनादरे । १ । सक० । सेट् । प० । शेटति । ५. शिशेट । शिशिटतुः । 'चेटति' (१०६) वत् ।

शिल=उञ्छे । ६ । सक० । सेट् । प० । शिलति । 'क्षिवति' (५०८) वत् ।

शिष=हिंसायाम् । १ । सक० । सेट् । प० । ५. शिशेष । शिशिषतुः । 'चेटति' (१०६) वत् ।

शिष=असर्वोपयोगे । १० । सक० । सेट् । उ० । आधृषीयः । शेषयति–ते । शेषति–ते । विपूर्वोऽयमतिशये । विशेषयति । शेषः=उर्वरितः । विशेषः=अतिशयः ।

× शिष्लृ (शिष्)=विशेषणे [५४९] ७ । सक० । अनि० । प० प्रायेणायं विपूर्वः । विशिनष्टि ।

शीक=आमर्षणे । १० । सक० । सेट् । उ० । आधृषीयः । शीकयति–ते ।

शीक=भाषायाम् । १० । सक० । सेट् । उ० । शीकयति–ते ।

शीकृ शीक्=सेचने । १ । सक० । सेट् । आ० । शीकते । ५. शिशीके । 'क्षीबति' (११९) वत् । शीकरोम्बुकणः ।

× शीङ् (शी)=स्वप्ने [३४०] २ । अक० । सेट् । आ० । ईकारान्तः । शेते । अतिशेते=विशेषयति । अधिशेते=अधितिष्ठति । अनुशेते=अनुतपति ।

शीभृ (शीभ्)=कत्थने । १ । सक० । सेट् । आ० । शीभते । (क्षीबति) (११९) वत् ।

शील=समाधौ । १ । सक० । सेट् । प० । शीलति । ५. शिशील । 'मीलति' (१५४) वत् । शीलं=स्वभावः । शैली=समाधाने प्रवृत्तिः ।

×शील=उपधारणे [६४७] १० । सक० । सेट् । उ० । प्रायेणायं परिपूर्वः । परिशीलयति–ते ।

शुक=गतौ । १ । सक० । सेट् । प० । शोकति । 'शोचति'(७६)वत् । शुकः ।

× शुच=शोके [७६] १ । अक० । सेट् । प० । शोचति ।

शुचिर् (शुच्)=पूतीभावे । पूतीभावः=क्लेद । ४ । अक० । सेट् । उ० । शुच्यति-ते । ५. शुशोच शुशुचे । ९. अशुचत्-अशोचीत् । अशोचिष्ट । शुचित्वा-शोचित्वा । शुक्तम् । शुक्तिः । शुक्तिका ।

शुच्य=स्नानपीडनसुरासन्धानेषु । १ । स्नानेऽकर्म० । सेट् । प० । शुच्यति । ५. शुशुच्य । 'कुञ्चति' (७७) वत् ।

शुठ=गतिप्रतिघाते । १ । सक० । सेट् । प० । शोठति । ५. शुशोठ । 'शोचति' (७६) वत् ।

शुठ=आलस्ये । १० । अक० । सेट् । उ० । शोठयति-ते ।

शुठि (शुण्ठ्)=शोषणे प्रतिघाते च । १ । सक० । सेट् । प० । शुण्ठति । 'कुन्थति' (३२) वत् । शुण्ठः ।

शुठि (शुण्ठ्)=शोषणे । १० । सक० । सेट् । उ० । शुण्ठयति-ते ।

शुध=शौचे [४४०] ४ । अक० । अनि० । प० । पुषादिः । शुध्यति । शुद्धः ।

शुन=गतौ । ६ । सक० । सेट् । प० । शुनति । 'कुच' धातुवत् । शुनकः ।

× शुन्ध=शुद्धौ [५९] १ । अक० । सेट् । प० । शुन्धति ।

शुन्ध=शौचकर्मणि । १० । अक० । सेट् । उ० । आधृषीयः । शुन्धयति-ते । शुन्धति-ते । शुन्धन्ताम् पितरः ।

× शुभ=भाषणे । भासने च । हिंसायामित्येके [१२९] १ । अर्थानुगुण्येन सकर्मकोऽकर्मकश्च । सेट् । प० । द्युतादि । शोभति ।

× शुभ=दीप्तौ [२११] १ । अक० । सेट् । आ० । द्युतादिः । शोभते ।

शुभ=शोभायाम् । ६ । अक० । सेट् । प० । शुभति । 'कुच' धातुवत् ।

शुम्भ=भाषणे । भासन इत्येके । हिंसायामित्यन्ये । १ । सक० । सेट् । प० । शुम्भति । ५. शुशुम्भ । 'कुञ्चति' (७७)वत । अयं तुदादावपि ।

शुल्क=अतिसर्जने । १० । सक० । सेट् । उ० । शुल्कयति-ते ।

× शुष=शोषणे [४३२] ४ । अक० । अनि० । प० । पुषादिः । शुष्यति ।

शूर=विक्रान्तौ । १० । सक० । सेट् । आ० । अदन्तः । आगर्वीयश्च । शूरयते ।

शूरी (शूर्)=हिंसास्तम्भनयोः । ४ । सक० । सेट् । आ० । शूर्यते । ५. शुशूरे । 'दीप्यति' (४१३) वत् । ९. अशूरिष्ट इत्येव ।

शूर्प=माने । १० । सक० । सेट् । उ० । शूर्पयति ।

× शूल=रुजायाम् । सङ्घाते च [१५९] १ । सक० । सेट् । प० । शूलति ।

शूष=प्रसवे । १ । सक० । सेट् । प० । शूषति । ५. शुशूष । 'कूजति' (८९) वत् ।

शृधु(शृध्)=उन्दने । १ । सक० । सेट् । उ० । शर्दति ते । 'वर्धते' (२०२) वत् ।

शृधु(शृध्)=शब्दकुत्सने । उन्दने च । १ । अक० । सेट् । आ० । द्युतादिः । वृतादिश्च । शर्धते । ५. शशृधे । ७. शर्धिष्यते—शर्त्स्यति । ९. अशृधत्—अशर्धिष्ट । १०. अशर्धिष्यत-अशर्त्स्यत् । शर्धो=अपानशब्दः । वृद्भ्यः स्यसनोः । न वृद्भ्यश्चतुर्भ्यः ।

शृधु(शृध्)=शब्दकुत्सने । १० । सक० । सेट् । उ० । शर्धयति–ते ।

× शॄ=हिंसायाम् [५७८] ९ । सक० । सेट् । प० । प्वादिः । ल्वादिश्च । शृणाति । शर्वः । शारुकः=हिंसकः । विशीर्यते=दलति ।

शेलृ(शेल्)=गतौ । १ । सक० । सेट् । प० । शेलति । 'खेलति' (१९९) वत् ।

शेवृ(शेव्)=सेवने । १ । सक० । सेट् । आ० । शेवते । ५. शिशेवे । 'देवति' (१९०) वत् ।

शै=पाके । १ । सक० । अनि० । प० । ऐकारान्तः । शायति । ५. शशौ । 'श्रायति' (२७१) वत् ।

× शो=तनूकरणे [४०९] ४ । सक० । अनि० । प० । ओकारान्तः । श्यति । शाकः । शादः । शाद्वलः ।

शोणृ(शोण्)=वर्णगत्योः । १ । अक० । सेट् । प० । शोणति । ५. शुशोण । 'खेलति' (१९९) वत् । शोणः । शोणा । शोणितम् ।

शौटृ(शौट्)=गर्वे । १ । अक० । सेट् । प० । शौटति । ५. शुशौट । शुशौटतुः । ६. शौटिता । ९. अशौटीत् । शौटीरो=वीरः । शौटीर्यम् । 'यौटृ' धातुवत् ।

श्चुतिर्(श्चुत्)=क्षरणे । १ । सक० । सेट् । प० । श्चोतति । 'श्च्योतति' (३०) वत् ।

× श्च्युतिर्(श्च्युत्)=क्षरणे [३०] १ । सक० । सेट् । प० । श्च्योतति ।

श्नथ=हिंसायाम् । १ । सक० । सेट् । प० । श्नथति । शश्नाथ । 'गदति' (३७) वत् ।

श्मील=निमेषणे । १ । सक० । सेट् । प० । श्मीलति । ५. शिश्मील । 'क्रीडति' (११४) वत् ।

श्यैङ् (श्यै)=गतौ । १ । सक० । अनि० । आ० । ङित् । ऐकारान्तः । श्यायते । ५. शश्ये । 'त्रायति' (२८९) वत् ।

श्रकि (श्रङ्क्)=गतौ । १ । सक० । सेट् । आ० । श्रङ्कते । ५. शश्रङ्के । 'वन्दति' (९) वत् ।

श्रगि (श्रङ्ग्)=गतौ । १ । सक० । सेट् । प० । श्रङ्गति । ५. शश्रङ्ग । 'क्रन्दति' (५०) वत ।

श्रण=दाने गतौ च । १ । सक० । सेट् । प० । घटादिः । काण्यादिश्च । श्रणति । ५. शश्राण । शश्रणतुः । **णौ चङि**—अशिश्रणत्-त । अशश्राणत्-त । 'गदति' (३७) वत् ।

× श्रण=दाने [६०९] १० । सक० । सेट् । उ० । श्राणयति–ते ।

श्रथ=हिंसायाम् । १ । सक० । सेट् । प० । श्रथति । ५. शश्राथ । शश्रथतुः । 'गदति' (३७) वत् ।

श्रथ=प्रयत्ने । प्रस्थाने च । १० । अक० । सेट् । उ० । आधृषीयः । श्राथयति-ते । श्रथति–ते ।

श्रथ=दौर्बल्ये । १० । अक० । सेट् । उ० । अदन्तः । श्रथयति–ते ।

× श्रथि (श्रन्थ्)=शैथिल्ये [२९] १ । अक० । सेट् । आ० । श्रन्थते ।

× श्रन्थ=विमोचनप्रतिहर्षयोः सन्दर्भे च [९९०] ९ । सक० । सेट् । प० । श्रथ्नाति ।

श्रन्थ=सन्दर्भे । १० । सक० । सेट् । उ० । आधृषीयः । श्रन्थयति–ते ।

× श्रमु (श्रम्)=तपसि खेदे च [४५१] ४ । अक० । सेट् । प० । शमादिः । उदित् । श्राम्यति । विश्राम्यति ।

श्रम्भु (श्रम्भ्)=प्रमादे । १ । अक० । सेट् । आ० । द्युतादिः । उदित् । श्रम्भते । ५. शश्रम्भे । ९. अश्रभत्–अश्रम्भिष्ट । श्रम्भित्वा–श्रब्ध्वा । श्रब्धः । विश्रम्भो=विश्वासः ।

×श्रा=पाके [३६०] २ । सक० । अनि० । प० । श्राति ।

×श्रिञ् (श्रि)=सेवायाम् [९९९] १ । सक० । सेट् । उ० । ञित् । इकारान्तः । श्रयति–ते ।

श्रिषु (श्रिष्)=दाहे । १ । सक० । सेट् । प० । श्रेषति । ५. शिश्रेष । शिश्रिषतुः । 'चेटति' (१०१) वत् ।

×श्रीञ् (श्री)=पाके [५१८] ९ । सक० । सेट् । उ० । ईकारान्तः । श्रीणाति श्रीणीते । श्रीतः । श्रीतवान् ।

×श्रु=श्रवणे [२८५] १ । सक० । अनि० । प० । उकारान्तः । श्रोणिः । वाहिश्रिश्रु-इति नित् । प्रतिश्रृणोति–आश्रृणोति=प्रतिजानीते ।

×श्रै=पाके [२७१] १ । सक० । अनि० । प० । श्रायति ।

श्रोणृ(श्रोण्)=संघाते । १ । अक० । सेट् । प० । श्रोणति । ५. शुश्रोण । शुश्रोणतुः । 'खेलति' (१९९) वत् । श्रोणिः । श्रोणा ।

श्लकि (श्लङ्क्)=गतौ । १ । सक० । सेट् । आ० । श्लङ्कते । ५. शश्लङ्के । 'श्रन्थति') (२९) वत् ।

श्लगि (श्लङ्ग्)=गतौ । १ । सक० । सेट् । प० । श्लङ्गति । ५. शश्लङ्ग । 'क्रन्दति' (५०) वत् ।

श्लथ=हिंसायाम् । दौर्बल्ये च । १ । हिंसायाम् । सक० । सेट् । प० । श्लथति । ५. शश्लाथ । शश्लथतुः । 'गदति' (३७) वत् । श्लथम् । श्लथितम् ।

श्लाखृ (श्लाख्)=व्याप्तौ । १ । सक० । सेट् । प० । श्लाखति । ५. शश्लाख । 'शाखति' (६४) वत् ।

×श्लाघृ(श्लाघ्)=कत्थने [९०] १ । सक० । सेट् । आ० । श्लाघते । श्लाघ्यः । श्लाघितः । श्लाघा । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः । देवदत्ताय श्लाघते ।

×श्लिष=आलिङ्गने । आलिंगनं=परिष्वंगः [४३९] ४ । सक० । अनि० । प० । पुषादिः । श्लिष्यति । अश्लिक्षत् कन्यां देवदत्तः । विश्लेषो=वियोगः । श्लेष्मा ।

श्लिष=श्लेषणे । १० । सक० । सेट् । उ० । श्लेषयति-ते ।

श्लिषु(श्लिष्)=दाहे । १ । सक० । सेट् । प० । श्लेषति । ५. शिश्लेष । शिश्लिषतुः । 'चेटति' (१०६) वत् । श्लेष्मा । श्लेष्मलः । श्लक्ष्णः ।

× श्लोकृ(श्लोक्)=संघाते [५४] १ । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मकः । द्वितीये सक० । सेट् । आ० । श्लोकते । उपश्लोकयति=स्तौति ।

श्लोणृ(श्लोण्)=संघाते । १ । अक० । सेट् । प० । श्लोणति । ५. शुश्लोण । शुश्लोणतुः । 'खेलति' (१९९) वत् ।

श्वकि(श्वङ्क्)=गतौ । १ । सक० । सेट् । आ० । श्वङ्कते । ५. शश्वङ्के । 'क्रन्दति' (९०) वत् ।

श्वठ=असंस्कारगत्योः । १० । सक० । सेट् । उ० । श्वाठयति-ते ।

श्वभ्र=गतौ । १० । सक० । सेट् । उ० । श्वभ्रयति-ते । श्वभ्रं=छिद्रम् ।

श्वर्त=गतौ । १० । सक० । सेट् । उ० । श्वर्तयति-ते ।

श्वल=आशुगमने । १ । अक० । सेट् । प० । श्वलति । ५. शश्वाल । शश्वलतुः । 'गदति' (३७) वत् ।

श्वल्क=परिभाषणे । १० । सक० । सेट् । उ० । श्वल्कयति-ते ।

श्वल्ल=आशुगमने । १ । अक० । सेट् । प० । श्वल्लति । ५. शश्वल्ल । 'फक्कति' (६१) वत् ।

× श्वस=प्राणने [३७३] २ । अक० । सेट् । प० । रुदादिः । श्वसिति । आश्वसिति । विश्वसिति=श्रद्धत्ते ।

× **टुओश्वि**(श्वि)=गतिवृद्ध्योः [३१५] १ । अक० । सेट् । प० । श्वयति । **णौ च संश्चङोः** । अशूशुवत् । अशिश्वयत् ।

